श्रीदेवेन्द्रसूरिविरचित–स्वोपज्ञ–टीकायुत.

# कर्मग्रन्थः

## विभाग बीजो

( कर्मग्रंथ ५–६ )

शेठ वीरजी कल्याणजीना सुपुत्र रतनजीभाइ तथा शेठ जीवणभाइ जेचंदनी सहायवडे–

छपावी प्रसिद्ध करनार,

श्रीजैनधर्म–प्रसारकसभा–भावनगरनीवती शा  कुंवरजी आनंदजी

इद पुस्तक मुम्बय्यां निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २३ तमे गृहे बा रा घाणेकरद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४३८ विक्रमसंवत् १९६८

# खास सूचना.

आ बीजा विभागनी अंदर पांचमो ने छठ्ठो कर्मग्रंथ टीका सहीत आपवा उपरांत संस्कृत कर्मग्रंथ चार पण दाखल करेला छे. प्रस्तावना संस्कृतमां पंन्यासजी श्रीआनंदसागरजीए लखेली छे. तेनी अंदर छ कर्मग्रंथमां शुं शुं हकीकत समावेली छे ते टुंकामां दर्शावेल छे. संस्कृत चार कर्मग्रंथमां प्रथमना पांच कर्मग्रंथनी अंदर आवेल भावार्थ समावेल छे. आ कर्मग्रंथने अंगे प्राचीन कर्मग्रंथोमांथी मूळमात्र क्यां मळे छे अने चूर्णि भाष्य के टीका कया कया कर्मग्रंथो उपरनी कोनी कोनी करेली लभ्य छे तेमज कर्मने लगती हकीकतवाळा बीजा कया कया ग्रंथो छे इत्यादि हकीकत एकठी करीने हवे पछी बाहार पाडवा इच्छा छे. आ विभागनुं शुद्धिपत्र पण हवे पछी बाहार पाडवानुं छे. चारे तरफथी ताकीद भरेली मागणी आववाथी आ विभाग ताकीदे बहार पाडवामां आवेल छे. आ कार्यमां आर्थिक सहाय आपनारनी इच्छानुसार आ ग्रंथ तेना खपी साधु साध्वीने तेमना गुरुद्वारा भेटतरीके आपवानुं ठरावेलुं छे. लखेला पुस्तकना भंडारमां पण एक एक नकल मोकलवानी छे तेथी तेमणे मंगावी लेवी.

# ॥ कर्मग्रन्थोपोद्घातः ॥

## विजयते विजितान्तराराातिवर्गो महापुरुषवर्गः ।

आकलनीयमिदकं कलावत्कलापाकलनीयाकल्प्याकलङ्किताविकलकलनकलापरिकलिताकल्पाविकलितकीर्तिकन्द-
कमनानेकान्तप्रकटनकोविदकल्पान्तकालाविशकलिताकारकलिकृतानेकान्तैकान्तदर्कान्तिकर्तनविकर्तनश्रीमदकलंकक-
लाकल्पिताकलनीयार्थकदंबककल्पकल्पाकर्णनकान्ततमसंस्कारकलितैः कोविदकुलोत्तंसकैः, यदुत समेऽप्यास्तिका विहाय
विविधविधानधुरन्धराक्षुण्णप्रत्यक्षप्रभृतिप्रमाणप्रथाप्रतीतार्थसमूहापोहाहार्योहान् वेदान्तिन उत्तरमीमांसामांसलमीमां-
सावत्ताख्यापकचणान् जगद्वैचित्र्यान्यथानुपपत्त्येकलक्षणाद्धेतोर्भवान्तरानुयायिन आत्मनः शुभाशुभसाधनक्षममदृष्टम-
नुपचरितमुररीकृतवन्त । न चातिरिच्य भूतिभूषितविग्रहपरिचर्यापरायणान् केनचिदपि यत्किञ्चिद्वेदिना मतान्तरावि-
ष्टान्तरात्मना तस्य स्वयं फलप्रदानपाटवतायामङ्गीचेक्रीयते विवादः सौगतानीश्वरसांख्यजैमिनीयवेदान्तिनामन्यतमेन ।
यवनास्तु विवेकमतिवारिधरपवना नैवात्रार्हन्ति विवादास्थानतां । युक्तं च तस्या आप्तोपनिषद्विरचनमिवोन्मूल्य यथार्था-
र्थदर्शकपथप्रवणं पारमर्षं भूभूभृद्विरचनाङ्गीकरणप्रवणता वितण्डावादीनामपकर्णितसन्मार्गाणां तत्त्वतोऽभिरणे विचक्षणानां
तद्विषया स्वीकृतिः । कल्पितकायपरिकरितताऽन्यादृष्टपरिभोग इत्याद्याश्च के नारोपिता अनारोपणीयाः कस्याचिदपि

व्यक्त्यां दोषास्तन्मूलाः । अंगीचक्राणा अपि भूत्यंबरं भूभूधरोद्भूतिनिबन्धनतया स्वःश्वभ्रादिभ्रमणप्रेरकतया च नाशेषशेषशास्तृसंमतं निशिततरयुक्त्यसिविशसितोच्छिष्टशिष्टाशस्ययुक्तिप्रयुक्तिव्रततीव्रातत्त्वेनादृष्टमतमतितांसिषुर्निर्मूलं । तन्न तत्र साधीयान् साधनीयः प्रयासः प्रज्ञावद्भिः । प्रकरणकरणनिपुणकरणनिकरैर्भगवद्भिरपि नात एव तत्सिद्धौ विहितं विशेषेण किञ्चिदत्र । परं काव्यमेव तत्रभवत्प्रणीतं जगद्वैचित्र्यख्यापकत्वेनादृष्टवैचित्र्यविवेचकमेकं मननीयतममेतद्विलोकनीयं विलोककैः, यथा—

"क्ष्माभृद्रङ्ककयोर्मनीषिजडयोः सद्रूपनीरूपयोः, श्रीमद्दुर्गतयोर्बलाबलवतोर्नीरोगरोगार्त्तयोः ।
सौभाग्यासुभगत्वसंगमजुषोस्तुल्येऽपि नृत्वेऽन्तरं, यत्तत्कर्मनिबन्धनं तदपि नो जीवं विना युक्तिमत्॥२॥"

न चाभ्रेदौचितीमेतादृगवलोक्य वैचित्र्यं नानुमन्येत सुकृतदुरितसद्भावं सद्भूतपदार्थप्रत्यायनपरायणो नेति । दुरन्तानन्तयातनाकेतनोद्विग्नसंवेगवेगपरिवृढानां महात्मनामेतादृग्वैचित्र्योपनिबन्धकमदृष्टवैचित्र्यमेव निखिलाभीप्सितानूनशर्मास्पदं प्रति पराणयनहेतुः । मोक्षोऽपि च चोक्षः आचचक्षे अधिगतलोकालोकावलोकनलम्पटकेवलालोकश्र्यालिंगनैस्त्रिकालविज्ञिस्तस्यात्यन्तिकाद्वियोगात् । न च भवति संभावनास्पदमेतत्, यदुत सत्यावारकेंऽशतोऽपि प्रकाश्यं प्रकाशते यथावत्प्रकाशकः प्रतिरूपवस्त्वोतस्वस्वरूपं निरूपयेत्स्वस्वरूपं वस्तु । ततोऽनुग्रहोपघातनिबन्धनतया मूर्तत्वेनान्तरा फलदानापाटवतायां सत्यामपि कालान्तरेणैव फलप्रदानसौष्ठवावलोकनाद्बन्धमोक्षादिव्यवहारविषयत्वेन द्रव्यरूपस्या-

त्मनो यावत्फलप्रदानमवस्थानेनाविष्वग्भावितया वा द्रव्यत्वेनाज्ञानात्मकत्वादिनाऽचेतनत्वेनानुमतमविरुद्धपदार्थप्रस्फुरणपटुप्रतिभावबद्धान्त करणै सुकरणै· । अदृष्टदृष्टो जीवः कथ दृष्टादृष्टफलाभिकाङ्क्षी स्वस्वरूपावबोधिप्रवर्तितपुद्गलप्रचयमयपदार्थोपचयापचयजहर्षशोकोऽपि समवगम्याव्याबाधमात्मरूपमात्मान सुखमवतिष्ठेद्यावन्नोदितसुकृतदुरितनोदनाविलयप्रभवयथास्थितात्मस्वरूपाविर्भावः । न चैते प्रतिबन्धकस्वरूपतदागमननिदानतद्बन्धहेतुतत्स्थानतदुच्छेदफल कारणाद्यवगम सुकरा स्यात्, नुन्नजगत्त्रितयानुन्नरूपस्य विजिगमिषेति युक्त एवारम्भोऽस्यैतद्विधस्य तत्रभवता देवेन्द्रसूरीणा । विशेषतश्चास्यैदंयुगीनस्य प्राणिगणस्य दुष्षमारक'प्रतिक्षणविनाश्यमानमेधादिगुणनिकायस्य दुरवसेयात्पञ्चसंग्रहकर्मप्रकृत्यादेरतिगहनतमाद्बालज्ञेयमिदं लघुतम कुर्वता सग्रहं तेषामुपकारसुकृतिना । विभागश्चास्यागमतीर्थकारैर्भगवद्भिर्विहित समितिसंख्यया । क्रमेण गाथाश्चात्र षष्टिश्चतुस्त्रिशत्पञ्चविशति' षडशीति शत च मिता अनेकसहस्रगाथान्यासदुरवसेयतत्त्वावसायिन्य· । विभागश्च षष्ठ श्रीचन्द्रमहत्तरपादप्रणीतो दृष्टिवादनिस्यन्दभूतोऽमन्दानन्दप्रदशब्दार्थमय संग्रहणीकल्प इति न तत्र प्रभुभिरातत आयास , उष्णतामचयाविष्टाम्बुततिरिव यतो निर्मूलतामेवेयृयात्तत् तथा तन्यमानमिति ।

प्रक्रान्ते प्रकमपञ्चके च द्वेधा आद्ये कर्मविपाकाख्ये कर्मणा मूलोत्तरा· प्रकृतयस्तदुदयोद्भवमनुभवनीय फल च । न चैव सैदंपर्य कमप्रकृतिप्रकरव्याकरणमुपलब्धिमाश्रित परत्र तीर्थे कौतस्कुती च तद्बन्धादिवैचित्र्य-विवेचना[१] बन्धहेतवोऽपि च निबद्धा भवभ्रमपरिजिहीर्षूणामिष्टसिध्द्यै । अत्र चावधेयमिद—यदुतासाधारणगुणयुगलयुक्त आत्मानुभूयते एवानुभवदक्षै', तत्तारतम्यावलोकन च न स्वाभाविक संभवेदात्मत्वाविशेषात् भेदकमन्तरा, प्रतिप्राणि

पौर्वापर्येणापि च तारतम्यप्रकृतिप्रेक्षणाद्भेदकस्वीकार आवश्यकः । न चासौ चेतनो घटाकोटिमाटीकते निष्टङ्कितत-त्त्वाध्वनि । अदृश्यता चाणवादिवन्न सूक्ष्मत्वादनुचित्यश्चिता । तथा च तद्द्वयप्रतिबन्धकमत्रानुक्रमेण ज्ञानदर्शनावरणी-यत्वेनाख्यातं । भेदाश्च तयोः सामान्यविशेषव्याख्यानस्यार्थबोधकत्वदर्शनात्तथैवाततः । तत एव च बुद्धेरनियत्ता न व्याघातिनी । सुखदुःखसाधनसिद्धावपि तद्भावाभावौ प्राणिवैचित्र्येणानुभूयेते इति वेदनीयस्य सद्भेदयुग्मस्याख्यानं । यथार्थार्थदर्शनदर्शनश्रद्धानतदाचारप्रतिबन्धकाध्यक्षानुभवादाख्येयं उद्देश्यैकत्वेन द्विभेदं मोहनीयं, कषायाश्च क्रोधमान-मायालोभाख्यास्तथाविधा हास्यादयस्तु तत्कारणानि तत्तेऽपि व्याख्यायन्ते एतद्भेदतयैव । आयुर्नामगोत्राणि तु विचि-त्राण्यागच्छन्त्येवानुभूत्यास्पदमिति न तद्भेदेषु विसंभाभावः । चरमेऽन्तराये च सामान्यविशेषरूपेण शक्तिपञ्चकं दानला-भवीर्यभोगोपभोगाख्यं वेविद्यत इति तदायातिप्रतिबन्धकमपि तावत्संख्यावदेव प्रतिज्ञातं संख्यावच्छेदवरकैः । अनेन च ये केचन दुर्विदग्धतमा आनन्दगिरिवाचस्पतिमिश्राद्या अनाकलय्यार्हतमविकलं मतं अनाघ्राय च तत्रस्थमर्थसार्थ-व्याख्यानं दीप्रदीपे झम्पापातमिव शलभा ब्रह्मसूत्रभाष्यव्याख्यायां कर्मव्याख्याने जैनसंमततया जैनजातासंमतं विष-मयमसत्यतममुद्गारं निपात्यात्मानमधमाध्वनि न्युदगृणन् ते तथैवोद्भाविता भावितात्मनां पुरः । कृतं वानेन, यत्तथा-स्वभावा एव ते, यन्न हि मक्षिकाणामन्यथाभवेत्स्वभावो यत्सत्यप्युत्तमे चन्दने सुरभिणि समिच्छति ता वर्चोगन्धाघ्रा-घ्रातुं । एतद्विधमेव चानाकर्णनीयतमं सकर्णानां गेहेशूरतरप्रलपितं कामकलानिष्णातेप्सुजगदशंकरशंकरचरितं स्वप्नप्र-भावोपलब्धमिव सबाधैः । कर्मसु चाष्टस्वत्र प्रथमद्वितीयचतुर्थान्त्यानि घातिसंज्ञकानि, यतस्ते घ्नन्त्येवात्मनां ज्ञानादीन्

गुणान् । अन्यत्तु चतुष्कं तेषां तत्तत्स्वभावाविर्भावे सहचारि, ततो न घातुकता तस्य तथा चात्मनः स्वाभाविकसुखान्वितत्वं वेदनीयस्य चाघातुकत्वं नाविर्भावयेदिरुद्धता । प्रान्ते चान्तरायकारणे यज्जिनार्चाविरुद्धताया दर्शनं कारणतया, तन्निभालनीयं लुप्तविवेकलोचनैर्यथार्थतया ज्ञेयं च ज्ञातमध्यस्थमार्गतत्त्वैर्यद्भुतं नोत्पत्तिकालालुम्पकानामाख्यायते ख्यातयशस्कार्हतैर्जिनप्रतिनिधिप्रतिपत्तिपराकरणमशुभतरादृष्टदन्दशूकदष्ट, किंतु तस्य तथात्वेन प्रागपि । ततः द्वितीये कर्मस्तवे च सुभटसिंहस्य कृतसंग्रामगुणग्रामवर्णनमिव जिनपतेः प्रतिष्ठितं यशः समाख्यातुं कर्मघातकरणक्रिया निकटभव्यानुकरणीयामाचिख्यासवो भट्टारका भणितवन्तो गुणस्थानकानां मुक्तिसौधसोपानकानामभिधाः, अष्टानां क्रमशो बन्धोदयोदीरणासत्ताश्च । तेषु यथार्थतयाऽवलोकनेनासां भविष्यति भावुकपुंगवानां स्वात्मनोऽवस्थानं जिगमिषामासिश्च कदा कदा क्व क्वेति । साक्षाद्भविष्यति च भगवतामाप्तानां सिद्धिरासतया अनुकरणीयता च तदाचाराणां चेतसि सचेतनानां । तृतीयस्मिन् बन्धस्वामित्वाख्ये प्रकरणे च प्राभुश्रकुः पूज्यतमाः कर्मणां केषां केषां के के जीवाः बन्धका इति । तत्र प्रथमं गतिरिन्द्रियाणि काया योगा वेदाः कषाया ज्ञानानि संयमा दर्शनानि लेश्या भव्यः सम्यक्त्वं संज्ञिन आहारक इत्येतास्तता मार्गणाश्चतुर्दश । अत्र च सर्वसंसार्यसुमच्चिन्तनावश्यकतया भव्याख्याप्रज्ञप्त्यादाविवानिन्द्रियाकायायोगावेदाकषायादीनां गणना । गणना च ज्ञानादिनिरुद्धानां अज्ञानाविरतिमिथ्यात्वसास्वादनादीनां देशविरतिमिश्रादीनां मिश्राणामपि च सर्वसंसारान्तर्गतगतिमल्लाप्तये । तथा च द्वाषष्टिरेव मार्गणाः, सर्वाः । सर्वासु चैतासु चिन्तितो बन्धो मुख्यतया । क्वचित्प्रकृतीनामाविष्कृता संख्या । क्वचित्तु लाघवार्थितया उदयाद्यपि चानुषङ्गतोऽन्वावादयितुं गुणस्थान-

द्वारा दर्शितो दृष्टबोधमार्गैर्भगवद्भिर्बन्धः । भविष्यति भविनां भावुकाभिलाषिणां भद्रंकरी चिन्ताऽतो यत्स्वयं क क मार्गणायां केषां केषां बन्धक आसीत्प्राक् विद्यते अनाराधने चात्मगुणानां भावी चेत्यात्मिका अनेकधा । चिन्तनं तु पूज्यैरन्योऽन्यव्यभिचाराद्गत्यादीनां बन्धस्य क्वचित्क्वचिद्विशेषादनेकधावोधनस्य दृढतरसंस्कारविधानप्रत्यलत्वाच्च बन्धस्य गत्यादिभिर्निर्णितं । तुर्ये तु तेनुस्ततयशसः षडशीतिकाख्ये विभागे ख्याततया दर्शयितुं भव्येभ्यो बन्धादि तद्धेतुगणं च जीवस्थानानि मार्गणास्थानानि गुणस्थानानि उपयोगा योगा लेश्या बन्धोऽल्पबहुत्वं चेति द्वाराणि । तत्र चतुर्दश चतुर्दश द्वादश पञ्चदश षड् चत्वारः क्रमेण भेदा यावद्बन्धं विवृताश्च परस्परेषु मनोहरया पद्धत्या । भविष्यति च तदवलोकनादेव यथावदाभोगो भूरिप्रतिभानां । न च वर्णिका शक्या वर्णयितुं पारयति चरिकर्तुं तदास्वादं वा सा, प्रथमं प्रोच्य सामान्येन साधितवन्तो विस्तरेण द्विषष्ट्यादिभेदैर्जीवानां गुणस्थानोपयोगादीन् दर्शयामासीना दृष्टाशेषदर्शनदर्शनपरमार्थाः । प्रथमे प्रतिपादितेऽपि प्रकरणे वन्धहेतुसंघाते किमिदमत्र पुनरिति न चतुरैश्चिन्तनीयं चेतसि । यतः प्रथमं तावत्सामान्येन प्रथमे हेतवोऽत्रैव च पुरा मूलप्रकृतीनां वन्धो न्यरूपि । पश्चात्तु ये मूलहेतवो वन्धस्य मिथ्यात्वाद्या यावन्तश्च गुणस्थानेषु येषु येषु याश्च प्रकृतयो यद्यन्मूलास्तत्तत्सर्वं समाचक्षत प्रसन्नमाहितहितबुद्धिनिधयः । पश्चात्प्रकटितवन्तः प्रकटतरप्रतिभा गत्यादीनां विचारमल्पबहुत्वाभ्यां मार्गणानां तद्वर्तिजीवद्वारा उदयोदीरणादिस्थानानि च । भावाश्चौपशमिकाद्याः षड् तत्प्रभेदा गुणाद्याश्रितत्वं जीवाजीवादिलिंगितादि च व्याख्यायिषत ख्यातख्यातिभिः । अत्रापि सामान्यतः शिष्टं धर्मादीनां द्रव्यत्वं चेदभविष्यदवगतमपगतकालुष्यहृदयेनानन्दगिर्याद्यैनैव वाचालतां प्राकटयिष्यत् जगज्जै-

त्रागादिविपत्तसंमोहजेतृश्रीमज्जिनोक्त्यनुसारिमतमन्तव्यमिच्छासया ( चिखंडयिषया ) । परं किं कुर्यान्नरो हीनभाग्यो ? यन्न स स्वय सन्मार्गप्राप्तो न च तदीप्सु परान्निमिमज्जिषुश्चाविशेषेण च तथाभूत॰ शाक्तमतासक्तयोगोऽनृतवादकलंकितजिह्वाकराल॰ । पश्चाज्जीवादीनामल्पबहुत्वाद्युपयोगि संख्यातादि व्याचिख्यासया सख्यातकपरीतयुक्तस्वपदयुक्तासख्यातकानन्तकाना सप्ताना जघन्यमध्यमोत्कृष्टभेदान् भाषितवन्तो भापाचणा भासितलोकालोकलीनार्थजातज्ञानलब्धबोधिलाभा । अत्र च प्रथमं प्रेदय प्रोक्तप्रकारप्रकर प्रहीनदृष्टिरागाणां प्रादुर्भविष्यच्छकरस्य सन्न्यस्तधर्मग्रामणेरलीकार्थव्याकरणपटुता हृदये । यतो न तेनाधिगत असंख्यानन्तयोरपि पार्थक्य कर्मपृथक्करणप्राप्तयथार्थबोधिजैनमतानुमत । कथमन्यथा न्यास्थदसौ जीवानामनन्तावयववत्ता आत्मप्रमाणविचारे आप्तोदितिविचारणीये । परं नासम्भवीद ताद्दशे श्वपचपराकृते कामशूकरे पदार्थविचारशून्यहृदये भक्षितदृष्टिरागहृत्पूरे। यतः स स्वयमेवात्मन॰ पारमार्थिकमवक्तव्य व्यावहारिक चान्यथात्वमभ्युपगम्य कथञ्चिद्वादमपजानानो दृष्टः प्रागेव । अन्यच्च यै कैश्चिच्चकासामासिरे वितथा वाणीवितति नितत्य यदुत यद्यनन्त कथ ज्ञेयोऽर्थो ज्ञेयश्चेत् कथमनन्त', संपूर्णावलोकनस्य सपूर्णताऽविनाभावित्वात् । संपूर्णता च सान्तस्य न त्वन्यस्येति ते उद्घाटिता प्रकटितस्वाज्ञानप्रचयतया, यतो नावबुद्धं बोधस्यापि तथैवानन्तत्व । तथा च ताद्दशाताद्दशपरिच्छेद कथमिवानुचितिमंच्यात्, येनोदिति शुभायतिस्तेषा । अत एव चानेद्दसानन्तेनानन्तानामिति सिद्धौ सिद्धा सेत्स्यति च । न चानन्तात्परा संख्या । तस्य नवमस्य मतेन केषाञ्चित्सर्वथैवाभावात् । येषामपि चास्ति सा नवमी साप्यसद्भाविन्येव,यतस्तत्र क्षिप्तास्त्रिर्वर्गयित्वाऽलोकाकाशे क्षिप्ते केवलद्विकपर्यायाःतया च नान्तस्तथाविधं प्रतिस्पर्धि-

नमन्तरा। विचाराश्चातितमां सूक्ष्माः ख्यापिता अत्र केचित्कर्मस्वरूपविवेचनेनाक्ताः केचित्पारंपर्येण केचिन्मुख्यतयाऽपरे इतरथा। अत एव चोपसंहारमुपरचयन्नुपनिबबन्धुर्बन्धुरतरं "इय सुहुमत्थ वियारो" इति। संज्ञा चैषा प्राक्तनी, यथा पूर्वाभियुक्तै रचितपूर्वमस्त्येव तदभिधेयं प्रकरणं। एवमेव कर्मविपाकस्तवादीनि नामधेयान्यपि प्राचीनान्येव। यतो वेविद्यन्त एव प्राचीनतमानि प्राकृतान्यप्राकृतजनाकर्णनीयानि। वरीवृतति च तानि तत्र तत्र तत्रभवदनगारागारिसत्कभांडागारे। मोमुद्रितानि चात्र संस्कृतानि त्वेतदनुसारीण्येव, न त्वेतन्मूलानीति नैवात्र संमोहो निर्मोहानुसारिणां। षडशीतिकेत्यभिधा तु षडशीतिगाथामानत्वादेवमेव च शतक इति च। सप्ततिरिति तु "संख्याकृतेश्चाशत्तिष्टेः कः" इति सूत्रेण कप्रत्ययाभावात्, प्राचीनाऽपि चैषैव संज्ञेति। चतुष्कं प्रकरणानामेतत्तज्जिज्ञासूनामत्याग्रहवद्विज्ञप्तेः प्रागेव प्राडुरकृत संसदियं, मंक्षु तत्प्रादुर्भावनकारणेनैव च न तत्र प्रस्तावनादिकं किमपि प्रास्तावि, समयस्यातिह्रस्वत्वात्, समस्तानां समग्रैव च तथाविधोपकारिणीति समालोचनया चापि। तत एव च षष्ठोऽभियुक्ततमैः परैरभिदब्धोऽपि सहैव नीतः प्राकाश्यतां प्रास्तावितश्चेति चेतनीयं चेतनावच्चतुरचक्रेणावक्रे चेतसि।

पञ्चमे तु शतकाख्ये कर्मप्रकरणे प्रतिज्ञातमेतत् प्रतिपाद्यतया प्रभुभिर्यदुत ध्रुवं या आयान्ति बन्धं उदये वर्वृतति सत्तायां गुणस्थाने वृत्तितान्विता याश्चात्मगुणघातप्रत्यलत्वेन घातिन्यस्तत्रापि या देशघातिन्यः सर्वघातिन्यश्च याः पुण्यप्रकृतयो याश्च परावर्तमानाः सर्वास्ताः सप्रतिपक्षाः प्रतिपादनीयाः, क्षेत्रजीवभवपुद्गलविपाकदर्शिन्यो मूलोत्तरप्रकृतिगता भूयस्काराल्पतरावस्थितावक्तव्यभेदाः प्रकृतिस्थितिरसप्रदेशाद्या उत्कृष्टजघन्येतराभ्यां बन्धप्रभेदास्तत्स्वामिनः सोत्तराणां

मूलप्रकृतीना आबाधाकाल क्षुल्लकभवस्वरूपं योगिकाल्पबहुत्वमबन्धकालः शुभाशुभद्विस्थानकादिरसनिरूपणा औदारिकाद्या वर्गणा अष्टौ अग्रहणान्तरिता भवयत' कर्मदलिकस्वरूप तद्बन्धे विभागः कर्मणा क्षपणोपयोगिनी गुणश्रेणिरचना गुणस्थानकानामन्तर पल्योपमसागरोपमपुद्गलावर्ता सूक्ष्मेतरभेदा अल्पबहुत्वं योगस्थानप्रकृतिप्रदेशबन्धस्थितिबन्धाध्यवसायस्थानस्थितिविशेषानुभागबन्धावसायस्थानानुभागस्थानाना श्रेणिस्वरूप उपशमक्षपकश्रेणिस्वरूपं इत्येव श्रद्धाभरभाजनज्ञेयस्वरूपमतितमा गहनं व्यवगाह्य कर्मप्रकृतिपञ्चसंग्रहाद्यनल्पतरगूढं ग्रन्थकर्दमक सूक्ष्मग्रन्थ ग्रथितवन्तोऽनेकदुर्गमविचारारूढ प्रकरण । भवति च समासाऽत्र श्रीमद्देवेन्द्रसूरिकृति' ।

कदा कतम भूमण्डलं मण्डयामासुर्मण्डितशासनाम्बरा किमर्थं चायास एप केपा वा पूज्यतमाना परिचर्याया अवाप्तसच्चारित्रा· के वा भगवन्त समस्तानस्तमितसुखसन्दोहसाधनस्याद्वादसाधितसाधीय शुचिताञ्चितागमाभ्यासकल्पप्रततीकन्दकल्पाः तत्रभवदुद्देशप्रव्राजनाद्याचार्या के वा भगवच्चरणचञ्चरीकमकरन्दमत्तमनोमधुपा इत्यादि ज्ञेयमत्र विद्वद्वृन्दारकाणा बहीय , परं तज्ज्ञेय यथायथ श्रेष्ठिदेवचन्द्रलालभाइजैनपुस्तकोद्धारकोशद्वारा मुद्रिताया वन्दारुवृत्ते' प्रस्तावनात· । किञ्चिच्चात्रैव प्रकरणे प्रणीता या श्रीमद्धृदयपद्मप्रभवप्रस्तावनापीयूषाशनतरङ्गिणी, तदवलोकनतोऽपि स्फुटं सिद्धिमेष्यति । विस्तरार्थिना तु विलोकनीया गुर्वावली पट्टावली च तत्प्रबन्धबन्धुरा ।

षष्ठं तु कर्मस्वरूपनिरूपणप्रवण वाङ्मय सप्ततयाख्य, संभाव्यते दृष्टिवादवदनातिक्रान्तवेदवादकब्रह्मसहस्रानन्तार्थज्ञापनदृढदृष्टिवादपानपीयूषपीनप्रवचनप्रधानतर' पुरुषविशेषोऽस्य सदृब्धा, यतो दृश्यतेऽस्यादिगाथायां "भीसदं दिट्ठि

वायस्स" इत्यमृतायमानं वाक्यं । प्रान्तेऽपि "रुइरवहुभंगदिठिवायाओ" इति च । दृष्टिवादश्च श्रीमदकलंकास्यपद्मह्रद-
निर्गत "उप्पन्ने इ वा विगमे इ वा धुवे इ वा" इतित्रिपथगायमानाशेषविश्वव्याप्तवस्तुविसरानुसारिपदत्रयीपानोद्भूतप्रभूतो-
द्भवज्ञाविभावावभासनप्रभुभारतीभरगणभृत्प्रणीतद्वादशाङ्गीगणिपिटकान्त्यभागः षण्णवतशताष्टसहस्रमानाविचलमानम-
हाविदेहमातङ्गमानमितमषीमालालेख्यवाच्यो, व्युच्छिन्नश्चायं श्रीमदपश्चिमपारगतपरमगत्यधिगतिसमतिक्रान्तशतकद्वय
इति नूनं निर्मातारोऽस्य निर्ग्रन्थाग्रेसराः प्राचीनतमाः श्रीमन्तश्चन्द्रमहत्तराः । यद्यपि न भिन्ना बहुश आसीरन्शाखा-
स्तदा तथापि सामान्यतोऽभूवँस्ताः श्रीमति कल्पे समस्तसमग्रवेदीशानवृत्तशासनापरगुरुपरम्परापद्मावबोधपद्मबान्धवा-
खिलखिलस्खलनावाप्यासाधारणानूनशर्माश्रयनिःश्रेयससाधनसमर्थसामाचारीविचारविस्तृतविभवानल्पप्रतिष्ठाकल्पे श्रीम-
द्भ्यो यशोभद्रेभ्य एव व्याख्याता वृत्तविस्ताराः शाखाः। प्राचीनाश्च तत एते सुरासुरविसरपरिसर्यावसरसंसृष्टशिरःशेख-
रखरतरमयूखमालासङ्काशः तत्रभवन्तः । एतावताऽवश्यं वावसिष्यति मानसे मनस्विनामेतत् यदुत प्रकरणमेतत्प्राचीनतमं
श्रद्धेयतमं चेति । षष्ठत्वं तु श्रीमद्देवेन्द्रपादोपज्ञपूर्वप्रस्तावितप्रकरणपञ्चकप्रसिद्धिसिद्धं । अत एव च नास्य चूर्णिकाराः
पुरातना अपि प्रपञ्चितवन्तः षष्ठतां ;। सिद्धिश्चास्मादपि प्रकरणस्यैतस्य चिरंतनतायाश्चूर्णिकारपूज्याभिधानानुपलंभात्,
विवरीतारस्तु प्रस्तुतस्य प्रवचनवृत्तिविधानावाप्तावतारकीर्तिनटीनाटितनाकनाथाः श्रीमन्तो मलयगिरिपादाः । तत्रभवतां
तेषामपि भगवतां नैवावगम्यते इतिहा इतिहाससाधनशून्यानेदंसाधितसाधनैरधुनातनैः । प्रणीताश्च भगवद्भिस्तावद्रा-
जप्रश्नीयादीनामुपाङ्गानां व्यवहारस्य धर्मसंग्रहिण्या नन्द्याः पञ्चसंग्रहकर्मप्रकृत्योः पीठिकाया बृहत्कल्पस्यावश्यकस्य

यावत्कुन्थुजिन विवृत्तयोऽनेका उपलभ्यन्ते अधुनाऽपि धूर्तैर्नो भैरर्भाग्यजराद्धर्मसारादीनां तु ता नागच्छन्ति गोचरं । शब्दानुशासनं तु साधितं प्रतिष्ठितं श्रीमद्भिर्वैविद्यत एव । भविष्यति चास्य प्रादुर्भावः प्रादुर्भावकगोष्ठीससत्संमत्या भविष्यन्त्या । प्रस्तुत प्रकरणं यत्सप्ततिरित्याख्यया ख्यातं तत्र गाथापरिमाणमेव कारणं । यच्चानेकत्रोपलभ्यन्तेऽधिका एतास्ता भाष्यसत्काः सुगमतायै सगमिता अवगन्तव्याः कैश्चिद्विपश्चिद्भि । अत्र तु पार्थक्येनावबोधाय पृथगेव न्यस्ता अङ्कत । अत्र च कर्मप्रकृतयो विचार्यन्ते बन्धोदयोदीरणासत्तारूपै सवेधमनुसधाय पर'सहस्राः परंलक्षाच्च विकल्पा जाजायन्ते । निरूपणमेतदेव दर्शयते विलोककाना प्रस्तुतप्रकरणस्य सर्वविन्मूलता दृष्टिवादोद्भूतत्वं च । ते च जीवस्थानगुणस्थानादिभिरपि चिन्तिता एव गत्यादिभिर्मार्गणाभिरपि तथैव मूलोत्तरप्रकृतीराश्रित्योदयादीना चिन्तयित्वा चैवं गुणस्थानकान्याश्रित्य बन्धमुपशान्ति क्षय चाविश्चकार । प्रादुर्भावितश्च प्रान्ते ऊनार्थपूरणपूर्वकपरिकथनप्रार्थनापरो वचोविसरो व्याख्यायाशेषकर्मक्षयोपपद्यमानाव्याबाधपदस्थितिमखिलभव्यजननिःशेषप्रयोजनोपनिपद्भूता प्रान्त्यमङ्गलरूपामित्याख्याति लोकख्यातख्यातिश्रीमदकलककलनावगतत्रिजगतीगतचराचरपदार्थप्रकरश्रीमज्जिनवरेन्द्रोदित्युदितानूनरत्नत्रयासमप्रभावभावितान्तरात्मोदन्वदन्ताभिधोऽशुध्ध्यागोजातैर्नोऽपनयनप्रभुप्रभूत्तमोपदिष्टमर्पयित्वा मिथ्यादुष्कृतमिति शं सर्वेभ्यो लेखकपाठकेभ्य. ॥

सुरपालिशिरोरत्नद्योतिक्रमयुगाय ते । शान्ते शान्तिनिशान्तोऽयमार्पि याम्यर्हणायति' ॥ १ ॥
त्वया निर्णाशिताशेपाशिवेनान्तितशात्रवे । मृगग्रामेऽयमग्रन्थि ग्रन्थोद्घातो मुदब्धिना ॥ २ ॥

श्रीदेवेंद्रसूरिविरचित–स्वोपज्ञ–टीकायुक्त-

# शतक कर्मग्रंथः



॥ ॐ नमः श्रीप्रवचनाय ॥

यो विश्वविश्वभविनां भवबीजभूतं कर्मप्रपंचमवलोक्य कृपापरीतः ।
तस्य क्षयाय निजगाद सुदर्शनादिरत्नत्रयं स जयतु प्रभुवर्धमानः ॥ १ ॥
अग्रायणीयपूर्वादुद्धृत्य परोपकारसारधिया ।
येनाभ्यधायि शतकं स जयतु शिवशर्मसूरिवरः ॥ २ ॥
अनुयोगधरान् पूर्वान् धर्माचार्यान्मुनीस्तथा नत्वा ।
स्वोपज्ञशतकसूत्रं विवृणोमि यथाश्रुतं किंचित् ॥ ३ ॥

तत्रादावेवाभीष्टदेवतास्तुत्यादिप्रतिपादिकामिमां गाथामाह—

**नमिय जिणं धुवबंधोदयसत्ताघाइपुन्नपरियत्ता । सेयर चउहविवागा वुच्छं बंधविह सामी य ॥ १ ॥**

टीका–जिनं नत्वा ध्रुवबन्धिन्यादि वक्ष्य इति संबन्धः । तत्र नत्वा नमस्कृत्य, कमित्याह–जिनं रागद्वेषमोहादिदुर्वारवैरिवारजेतारं वीतरागं परमार्हन्त्यमहिमालंकृतं तीर्थकरमित्यर्थः । अनेन परमाभीष्टदेवतानमस्कारेणैकान्तिकमात्यन्तिकं भावमंगलमाह, अनेन च शास्त्रपरिसमाप्तेर्निष्प्रत्यूहता भवतीति । क्त्वाप्रत्ययस्य चोत्तरक्रियासापेक्षत्वादुत्तरक्रियामाह–ध्रुवबंधोदयादि वक्ष्ये । तत्र मिथ्यात्वादिभिर्बन्धहेतुभिरञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलैरात्मनः क्षीरनीरवद्वह्न्ययःपिंडवद्वाऽन्योऽन्यानुगमाभेदात्मकः संबन्धो बन्धः । तेषामेव कर्मपुद्गलानामपवर्तनादिकरणकृते स्वाभाविके वा स्थित्यपचये सत्युदयसमयप्राप्तानां विपाकवेदनमुदयः । तेषामेव कर्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावे सति सद्भावः सत्ता । बन्धश्चोदयश्च सच्च बन्धोदयसंति, ततो ध्रुवशब्दस्य प्रत्येकं संबन्धाद्ध्रुवाणि बन्धोदयसन्ति यासां ता ध्रुवबन्धोदयसत्यः । 'घाइ त्ति' सर्वघातिन्यो देशघातिन्यश्चेत्यर्थः । 'पुन्न त्ति' पुण्यप्रकृतयः, 'परियत्त त्ति' परिवृताः परावर्तमानाः, 'सेयर त्ति' सेतराः सप्रतिपक्षा विपक्षयुक्ता इत्यक्षरार्थः । भावार्थोऽयम्–ध्रुवबन्धिन्यः, अध्रुवबन्धिन्यः, ध्रुवोदयाः, अध्रुवोदयाः, ध्रुवसत्ताकाः, अध्रुवसत्ताकाः, सर्वदेशघातिन्यः, अघातिन्यः, पुण्यप्रकृतयः, पापप्रकृतयः, परावर्तमानाः, अपरावर्तमानाश्चेति द्वादश द्वाराणि वक्ष्ये । तत्र निजहेतुसद्भावे यासां प्रकृतीनां ध्रुवोऽवश्यंभावी बन्धो भवति ता ध्रुवबन्धिन्यः । यासां च निजहेतुसद्भावेऽपि नावश्यं-

भावी बन्धस्ता अध्रुवबन्धिन्य । यदवादि—"निंयहेतुसंभवे वि हु भयणिज्जो जाण होइ पयडीणं । बंधो ता अधुवाओ धुवा अभयणिज्ज बधाओ ॥ १ ॥" निजहेतवश्चेह मिथ्यात्वादयो मन्तव्या. । यासामव्यवच्छिन्नोऽनुसन्ततश्चोदयव्यवच्छेद-कालं यावदुदयस्ता ध्रुवोदया । यासा तु व्यवच्छिन्नोऽप्युदयो भूयोऽपि प्रादुर्भवति तथाविधद्रव्यक्षेत्रकालभावभवस्वरूप पञ्चविध हेतुसवन्ध प्राप्य ता अध्रुवोदया' । यद्भाणि—"अवुच्छिन्नो उदओ जाणं पयडीण ता धुवोदइया । वुच्छिन्नो वि हु सभवइ जाण अधुवोदया ताओ ॥ १ ॥" याः सर्वसंसारिणामप्राप्तसम्यक्त्वाद्युत्तरगुणाना सातत्येन भवन्ति ता ध्रुवसत्ताका' । यास्तु कादाचित्कभाविन्यस्ता अध्रुवसत्ताका । सर्वेतरघातित्व च प्रकृतीना स्वविषयघातनभेदतो भवति, तत्र सर्वस्वविषयघातिन्य सर्वघातिन्य. । स्वविपयदेशघातिन्यश्च देशघातिन्य । स्वविषय चासामुत्तरत्र व्याख्यास्याम., तत सर्व समस्त देशं च कचन स्वावार्यं गुणं घ्नन्तीत्येवशीला सर्वदेशघातिन्य । ज्ञानदर्शनगुणाना मध्ये न कचिद्गुण घ्नन्तीत्येवं-शीला अघातिन्य. । केवल यथा स्वयमतस्करस्वभावोऽपि तस्करै. सह वर्तमानस्तस्कर इव दृश्यते, एवमेता अपि घातिनीभिः सह वेद्यमानास्तद्दोषा इव भवन्ति । यदाहु श्रीशिवशर्मसूरिप्रवरा.—"अवसेसा पयडीओ अघाइया घाइया-हिं पडिभागो ।" 'पडिभागु त्ति' सादृश्यं । घातित्व च प्रकृतीना रसविशेषाद्विज्ञेयम् । पुण्यप्रकृतयो जीवाह्लादजनका'

१ निजहेतुसभवेऽपि च यासा भवति प्रकृतीना । बधो भजनीयस्ता अध्रुवा अभजनीयबधा ध्रुवा । २ यासा प्रकृतीनामविच्छिन्न उदयस्ता ध्रुवोदया । यासा व्युच्छिन्नोपि च सभवति ता अध्रुवोदया । ३ अवशेषा प्रकृतयोऽघातिन्य पर ( घातिप्रकृतिसहगता ) घातिनीभि सदृश्य ।

शुभा उच्यन्ते । पापप्रकृतयः कटुकरसा अशुभा उच्यन्ते । याः प्रकृतयोऽन्यस्याः प्रकृतेर्बन्धमुदयमुभयं वा विनिवार्य स्वकीयं बन्धमुदयमुभयं वा दर्शयन्ति ताः परावर्तमानाः । यास्त्वन्यस्याः प्रकृतेर्बन्धमुदयमुभयं वाऽनिवार्य स्वकीयं बन्धमुदयमुभयं वा दर्शयन्ति ता न परावर्तन्त इति कृत्वाऽपरावर्तमाना उच्यन्ते । यत्प्रत्यपादि—"वि[1]णिवारिय जागच्छइ बंधं उदयं च अन्नपगईए । सा हु परियत्तमाणी अणिवारंती अ परियत्ता ॥ १ ॥" 'चउहविवाग त्ति' चतुर्धा क्षेत्रजीवभवपुद्गलाश्रितत्वेन चतुःप्रकारो विपाको विपचनं स्वशक्तिप्रदर्शनं यासां ताश्चतुर्धाविपाकाः—क्षेत्रविपाकाः, जीवविपाकाः, भवविपाकाः, पुद्गलविपाकाः, प्रकृतीर्वक्ष्ये । तथा 'बंधविह त्ति' विधानानि विधा भेदा बन्धस्य विधा बन्धविधाः प्रकृतिबन्धस्थितिबन्धरसबन्धप्रदेशबन्धलक्षणास्तान् वक्ष्ये । अत्र च मोदकदृष्टान्तं पूर्वसूरयो व्यावर्णयन्ति यथा—वातापहारिद्रव्यनिचयनिष्पन्नो मोदकः प्रकृत्या वातमपहरति, पित्तापहद्रव्यनिर्वृत्तः पित्तं, श्लेष्मापहद्रव्यसंजनितः श्लेष्माणमित्यादि । स्थित्या तु स एव कश्चिद्दिनमेकमवतिष्ठतेऽपरस्तु दिनद्वयमन्यस्तु दिवसत्रयं यावन्मासादिकमपि कालं कश्चिदवतिष्ठते ततः परं विनश्यति । स एवानुभावेन रसपर्यायेण स्निग्धमधुरत्वादिलक्षणेन कश्चिदेकगुणानुभावोऽपरस्तु द्विगुणानुभावोऽन्यस्तु त्रिगुणानुभाव इत्यादि । प्रदेशाः कणिक्कादिद्रव्यप्रमाणरूपास्तैः प्रदेशैः स एव कश्चिदेकप्रसृतिप्रमाणोऽपरस्तु प्रसृतिद्वयमानोऽन्यस्तु पुनः प्रसृतित्रयप्रमाण इत्यादि । एवं कर्मापि ज्ञानावरणादिपुद्गलैर्निर्वृत्तं प्रकृत्या किंचिज्ज्ञानमावृणोति किंचिद्दर्शनं किंचित्तु सुखदुःखे जनयतीत्यादि । स्थित्या तु तदेव त्रिंशत्सागरोपमकोटीकोट्यादिकालावस्थायि भवति ।

---

१ या अन्यप्रकृतीनां बंधमुदयं च विनिवार्यागच्छति ( बंधमुदयं च ) सा परावर्तिनी अनिवारिणी चापरावर्तिनी ।

श्रनुजायतस्तु तदेवैकस्थानिकद्विस्थानिकतीव्रमन्दादिकरसयुक्त । प्रदेशतस्तु तदेवाल्पबहुप्रदेशनिष्पन्नं स्यादिति । एप च प्रकृत्यादिस्वजावश्चतुर्विधोऽपि कर्मण उपादानकाल एव बध्यत इति बन्धश्चतुर्विध सिद्धो जवति । तथा डमरुकमणिन्यायेन बन्धशब्द इहापि योज्यते, ततो बन्धस्वामिनो वक्ष्ये क कस्या प्रकृते॰ स्थितेर्वा क कस्य रसस्य तीव्रमन्दादिरूपस्य कश्च कस्य प्रदेशाग्रस्य जघन्यत्वादिलक्षणस्य बन्धक इत्यादि स्वामित्वेन वक्ष्ये । चशब्दादुपशमश्रेणिक्षपकश्रेण्यादिक च वक्ष्य इत्यनेनाजिधेयमाह । संबन्धप्रयोजने तु सामर्थ्यगम्ये । तत्र सबन्ध साध्यसाधनलक्षण उपायोपेयलक्षणो गुरुपर्वक्रमलक्षणो वा वेदितव्य॰ । प्रयोजन तु प्रकरणकर्तृश्रोत्रोरनन्तरपरपरजेदेन द्वेधा, तत्र प्रकरणकर्तुरनन्तर सत्त्वानुग्रह प्रयोजनं, श्रोतुश्चानन्तर प्रयोजन प्रकरणार्थपरिज्ञान । परपरप्रयोजन तु द्वयोरपि परमपदप्राप्तिरिति । तथा चोक्तम्–"सम्यक्शास्त्रपरिज्ञानाद्विरक्ता जवतो जना । लब्ध्वा दर्शनसशुद्धि ते यान्ति परमा गतिम् ॥ १ ॥" तदेतेन मगलाद्यजिधानेन सकलशास्त्रकृता प्रवृत्तिरनुसृता जवति । तथा च तै॰ प्रणिजगदे–"प्रेक्षावता प्रवृत्त्यर्थमजिधेयप्रयोजने । मगल चैव शास्त्रादौ वाच्यमिष्टार्थसिद्धये ॥ १ ॥" इति ॥ १ ॥

श्रथ यथोद्देश निर्देश इति न्यायात्तत्प्रथमतो ध्रुवबन्धिनी प्रकृतीर्व्याचिख्यासुराह—

**वन्नचउतेयकम्मा गुरुलहुनिमिणोवघायजयकुच्छा । मिछकसायावरणा विग्घं धुववंधि सगचत्ता ॥ २ ॥**

टीका–प्राकृतत्वाल्लिंगवचनव्यत्ययेन ध्रुवबन्धिन्यः प्रकृतय 'सगचत्त त्ति' सप्तचत्वारिंशत्सख्या जवन्ति । तथाहि–वर्णेनोपलक्षित चतुष्क वर्णचतुष्क वर्णगन्धरसस्पर्शलक्षणं, ततो वर्णचतुष्क च तैजस च कार्मणं चागुरुलघु चेत्यादिद्वन्द्वे

वर्णचतुष्कतैजसकार्मणागुरुलघुनिर्माणोपघातभयकुत्साः, कुत्सा जुगुप्सा, तथा मिथ्यात्वं च कषायाश्चावरणानि च मिथ्यात्वकषायावरणानि । तत्र वर्णचतुष्कतैजसकार्मणागुरुलघुनिर्माणोपघातानि इत्येता नव नामप्रकृतयः, भयं कुत्सा मिथ्यात्वं कषायाः षोडशेत्येता एकोनविंशतिर्मोहनीयप्रकृतयः । आवरणानि ज्ञानावरणपंचकदर्शनावरणनवकरूपाणि चतुर्दश । विघ्नमन्तरायं दानलाभभोगोपभोगवीर्यान्तरायभेदात् पंचविधमिति । एवं सप्तचत्वारिंशदप्येता ध्रुवबन्धिन्यो निजहेतुसद्भावेऽवश्यं बन्धसद्भावादिति ॥ २ ॥

उक्ता ध्रुवबन्धिन्यः प्रकृतयः, सांप्रतमध्रुवबन्धिनीः प्रकृतीरभिधित्सुराह—

**तणुवंगागिइसंघयणजाइगइखगइपुव्विजिणसासं । उज्जोयायवपरघातसवीसागोयवेयणियं ॥ ३ ॥**
**हासाइजुयलडुगवेयआउ तेवुत्तरी अधुवबंधा । भंगा अणाइसाइ अणंतसंतुत्तरा चउरो ॥ ४ ॥**

टीका—तनवः शरीराणि औदारिकवैक्रियाहारकलक्षणास्तिस्रः, तैजसकार्मणयोर्ध्रुवबन्धित्वेनाभिहितत्वात् । उपांगानि औदारिकांगोपांगवैक्रियांगोपांगाहारकांगोपांगरूपाणि त्रीणि । आकृतयः संस्थानानि समचतुरस्रन्यग्रोधपरिमंडलसादिकुब्जवामनहुंडाख्याः षट् । संहननान्यस्थिनिचयात्मकानि वज्रऋषभनाराचऋषभनाराचनाराचार्धनाराचकीलिकासेवार्तलक्षणानि षट् । जातय एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपंचेन्द्रियरूपाः पंच । गतयो देवमनुषतिर्यङ्नारकगतिलक्षणाश्चतस्रः। खगतिर्विहायोगतिः प्रशस्ताप्रशस्तभेदाद्द्वेधा । 'पुव्वि त्ति' पदैकदेशे पदसमुदायोपचारादानुपूर्व्यो देवानुपूर्वीमनुष्यानुपूर्वीति-

र्भगानुपूर्वीनरकानुपूर्वीरूपाश्चतस्र । जिननाम तीर्थकरनाम । श्वासनाम उच्छ्वासनामेत्यर्थ । उद्योतनाम । आतपनाम । पराघातनाम । 'तसवीस त्ति' त्रसेनोपलक्षिता विंशतिस्त्रसविंशति । त्रसदशक स्थावरदशकमित्यर्थ । गोत्रमुच्चैर्गोत्रनीचैर्गोत्रभेदेन द्विधा । वेदनीय सातवेदनीयमसातवेदनीयमिति द्विधा । हास्यादियुगलद्विक हास्यरत्यरतिशोकाभिध । वेदा स्त्रीपुनपुंसकरूपास्त्रय । आयूंषि देवायुर्मनुजायुस्तिर्यगायुर्नरकायुरिति चत्वारि । इत्येतास्त्रिसप्ततिप्रकृतयोऽध्रुवबन्धा अध्रुवबन्धिन्यो भवन्तीति शेष । एतासा निजहेतुसद्भावेऽप्यवश्य बन्धाभावादध्रुवबन्धित्वम् । तथाहि–पराघातोच्छ्वासनाम्नो पर्याप्तनाम्नैव सह बन्धो नापर्याप्तनाम्नाऽतोऽध्रुवत्व, आतप पुनरेकेन्द्रियप्रायोग्यप्रकृतिसहचरितमेव नान्यदा, उद्योत तु तिर्यग्गतिप्रायोग्यबन्धेनैव सह बध्यते, आहारकद्विकजिननाम्नी अपि यथाक्रम संयमसम्यक्त्वप्रत्ययेनैव बध्येते नान्यथेत्यध्रुवबन्धित्व । शेषशरीरोपाङ्गत्रिकादीना षट्षष्टिप्रकृतीना सविपक्षत्वान्निजहेतुसद्भावेऽपि नावश्यं बन्ध इत्यध्रुवबन्धित्व सुप्रतीतमेव । उक्ता अध्रुवबन्धिन्य प्रकृतय , साम्प्रत ध्रुवबन्धिन्यध्रुवबन्धिनीना भगान् ग्रन्थलाघवार्थं च वक्ष्यमाणध्रुवोदयाध्रुवोदयप्रकृतीना च भगान् बन्धमाश्रित्योदयमाश्रित्य च चिन्तयन्नाह–'भंगा अणाइसाई' इत्यादि, भगा भगकाश्चत्वारो भवन्ति । कथमित्याह–अनादिसादयोऽनन्तसान्तोत्तरा । इदमुक्तं भवति–अनादिसादिशब्दावादी येषा तेऽनादिसादय , प्राकृतत्वादादिशब्दस्य लोपः । अनन्तसान्तशब्दावुत्तरे उत्तरपदे येषा तेऽनन्तसान्तोत्तरा , "ते लुग्वा" ( सिद्ध ३-२-१०८ ) इति सूत्रेण पदशब्दस्य लोप । यदि वा भगा अनादिसादयोऽनन्तसान्तोत्तरा सन्तश्चत्वारो भवन्ति । तद्यथा–अनाद्यनन्त , अनादिसान्त , साद्यनन्तः, सादिसान्तश्चेति ॥ ३–४ ॥

उक्ता भंगा अथ यत्रोदये बन्धे वा ये भंगका घटन्ते तानाह—

**पढमबिया धुवउदइसु धुवबंधिसु तइयवज्जभंगतिगं। मिच्छंमि तिन्नि भंगा दुहावि अधुवा तुरियभंगा ।५।**

टीका–प्रथमद्वितीयावनाद्यनन्तानादिसान्तलक्षणौ ध्रुवोदयासु प्रकृतिषु भंगकौ भवतः। तथा हि–न विद्यत आदिर्यस्यानादिकालात्संतानभावेन सततप्रवृत्तेः सोऽनादिः, अनादिश्चासावनन्तश्च कदाचिदप्यनुदयाभावादनाद्यनन्तः, अयं च भंगको निर्माणस्थिरास्थिरागुरुलघुशुभाशुभतैजसकार्मणवर्णचतुष्कज्ञानपंचकान्तरायपंचकदर्शनचतुष्कलक्षणानां षड्विंशतिप्रकृतीनां ध्रुवोदयानामभव्यानाश्रित्य वेदितव्यः, यतोऽभव्यानां ध्रुवोदयप्रकृत्यनुदयो न कदाचिद्भविष्यतीति। तथाऽनादिश्चासौ सान्तश्चानादिसान्तः, तत्र ज्ञानपंचकान्तरायपंचकदर्शनचतुष्करूपाणां चतुर्दशप्रकृतीनामनादिकालात्सन्तानभावेनानादिः सन् यदा क्षीणमोहचरमसमये उदयो व्यवच्छिद्यते तदाऽयमनादिसान्तभंगकः, निर्माणस्थिरास्थिरागुरुलघुशुभाशुभतैजसकार्मणवर्णचतुष्कलक्षणानां द्वादशानामपि नामध्रुवोदयप्रकृतीनां सततोदयेनानादिरुदयो भूत्वा सयोगिकेवलिचरमसमये यदोदयव्यवच्छेदमनुभवति तदाऽनादिसान्तभंगकः, इति ध्रुवबन्धिनीषु पूर्वोक्तस्वरूपासु सप्तचत्वारिंशत्संख्यासु तृतीयवर्जभंगत्रिकं भवति। तथा हि–यो बन्धोऽनादिकालादारभ्य सन्तानभावेन सततं प्रवृत्तो न कदाचन व्यवच्छेदमापन्नो न चोत्तरकालं कदाचिद्व्यवच्छेदमाप्स्यति सोऽनाद्यनन्तोऽभव्यानामेव भवति। यस्त्वनादिकालात्सततप्रवृत्तोऽपि पुनर्बन्धव्यवच्छेदं प्राप्स्यति, असावनादिसान्तोऽयं भव्यानाम्। साद्यनन्तलक्षणस्तु तृतीयभंगकः शून्य एव, न हि यो बन्धः सादिर्भवति स कदाचिदनन्तः संभवतीति तृतीयभंगवर्जनं। यः पुनः पूर्वं व्यवच्छिन्नः पुनर्बन्धनेन सादित्वमा-

साद्य कालान्तरे भूयोऽपि व्यवच्छेद प्राप्स्यति सोऽय सादिसान्तः । इत्येवस्वरूपं साद्यनन्तलक्षणतृतीयशून्यभंगकवर्जितं भगकत्रय ध्रुवबन्धिनीषु भवति । सूत्रे च पुंस्त्वं प्राकृतत्वात् । प्राकृते हि लिंगं व्यभिचार्यपि । यदाह पाणिनि –स्वप्राकृतलक्षणे "लिंग व्यभिचार्यपीति" । तत्र प्रथमभगकस्तासा सर्वासामप्यभव्याश्रित' सुप्रतीत एव, ध्रुवबन्धिनी प्रति बन्धस्यानाद्यनन्तत्वादिति । द्वितीयभंगकस्तु ज्ञानावरणपचकदर्शनावरणचतुष्कान्तरायपचकलक्षणाना चतुर्दशप्रकृतीनामनादिकालात्सन्तानभावेनानादि सन् सूक्ष्मसंपरायचरमसमये यदा बन्धो व्यवच्छिद्यते तदा भवति । आसामेन चतुर्दशप्रकृतीनामुपशान्तमोहे यदाऽबन्धकत्वमासाद्यायु क्षयेणाद्धाक्षयेण वा प्रतिपतित' सन् पुनर्बन्धेन सादिबन्धं विधाय भूयोऽपि सूक्ष्मसपरायचरमसमये बन्धविच्छेद विधत्ते, तदा सादिसान्तलक्षणश्चतुर्थ' । चतुर्दशाना च प्रकृतीना तृतीयो भगको न लभ्यत इति । सञ्ज्वलनकषायचतुष्कस्य तु सदैवावाप्तानादिबन्धभावो यदा तत्प्रथमतयाऽनिवृत्तिबादरादिर्बन्धव्यवच्छेद विधत्ते तदाऽनादिसान्तस्वभावस्तस्य द्वितीयभंग.। यदा तु तत' प्रतिपतित पुनर्बन्धेन सञ्ज्वलनबन्धसादि कृत्वा पुनरपि कालान्तरेऽनिवृत्तिबादरादिभावं प्राप्त सत्तान् न भन्त्स्यति तदा सादिसान्तस्वरूपः संज्वलनचतुष्कस्य चतुर्थ इति । निद्राप्रचलातेजसकार्मणवर्णचतुष्कागुरुलघूपघातनिर्माणभयजुगुप्सास्वरूपाणा त्रयोदशप्रकृतीनामनादिकालादनादिबन्ध विधाय यदापूर्वकरणाद्धाया यथास्थान बन्धोपरमं करोति तदा द्वितीयो भगक । यदा तु तत. प्रतिपतित. पुनर्बन्धविधानेन सादित्वमासाद्य भूयोऽपि कालान्तरेऽपूर्वकरणमारूढस्य बन्धाभावस्तदा चतुर्थ इति । चतुर्णां प्रत्याख्यानावरणाना बन्धो देशविरतगुणस्थानक यावदनादिस्तत प्रमत्तादौ बन्धोपरमात्सान्त इति द्वितीयभग । तत. प्रतिपतितो भूयोऽपि

बन्धनेन सादित्वमासाद्य यदा पुनः प्रमत्तादावबन्धको भवति तदा चतुर्थो भंगः। अप्रत्याख्यानावरणानां त्वविरतसम्यग्दृष्टिं यावदनादिबन्धं कृत्वा यदा देशविरतादावबन्धको भवति तदा द्वितीयः। ततः प्रतिपतितो भूयोऽपि तानेव बद्ध्वा पुनस्तेषां यदा देशविरतेष्वबन्धको भवति तदा चतुर्थ इति । मिथ्यात्वस्त्यानर्द्धित्रिकानन्तानुबन्धिनां तु मिथ्यादृष्टिरनादिबन्धको यदा सम्यक्त्वावाप्तौ बन्धोपरमं करोति तदा द्वितीयः। पुनर्मिथ्यात्वगमने तान् बद्ध्वा यदा भूयोऽपि सम्यक्त्वलाभे सति बन्धं न विधत्ते तदा चतुर्थः। इत्येवं ध्रुवबन्धिनीनां भंगकत्रयं निरूपितमिति। तथा मिथ्यात्वस्य ध्रुवोदयस्य भंगा अनाद्यनन्तानादिसान्तसादिसान्तस्वभावास्त्रयो भवन्ति । तत्रानाद्यनन्तोऽभव्यानां, यतस्तेषां न कदाचिन्मिथ्यात्वोदयविच्छेदः समपादि संपत्स्यते चेति। अनादिसान्तस्त्वनादिमिथ्यादृष्टेः, तत्प्रथमतया सम्यक्त्वलाभे मिथ्यात्वस्याभावात्। सादिसान्तः पुनः प्रतिपतितसम्यक्त्वस्य सादिके मिथ्यात्वोदये संपन्ने पुनरपि सम्यक्त्वलाभान्मिथ्यात्वोदयाभावे संभवतीति। 'दुहा वि अधुवा तुरियभंग त्ति' द्विधापि द्विभेदा अपि बन्धमाश्रित्योदयमाश्रित्याध्रुवा अध्रुवबन्धिन्योऽध्रुवोदयाश्चेत्यर्थः, तुरीयश्चतुर्थो भंगः सादिसान्तलक्षणो यासां तास्तुरीयभंगा भवन्ति । तत्राध्रुवबन्धिनीनां पूर्वोक्तत्रिसप्ततिसंख्यप्रकृतीनामध्रुवबन्धित्वादेव सादिसान्तलक्षण एक एव भंगको भवति। तथाऽध्रुवोदयानामुदयः सदादिनोदयविच्छेदे सति ततः प्रथमतयोदयभवनस्वभावेन वर्तत इति सादिः, स चासौ सान्तश्च, पुनरुदयव्यवच्छेदात् सपर्यवसानश्च सादिसान्तः, ततश्चाध्रुवोदयानामयमेवैको भंगको भवति, नान्यो, अध्रुवत्वादेवेति भावः॥ ५॥

उक्ताः सन्नावार्या ध्रुवबन्धिन्योऽध्रुवबन्धिन्यश्च प्रकृतयः प्रसगतो ध्रुवाध्रुवोदयाना प्रकृतीना जगकाश्च, सम्प्रति ध्रुवाध्रुवोदयप्रकृतिद्वारनिरूपणायाह—

**निमिण थिर अथिर अगुरुय सुहअसुह तेय कम्म चउ वन्ना। नाणंतरायदंसण मिछ धुवउदय सगवीसा ।६।**

टीका—'निमिण त्ति' प्राकृतत्वान्निर्माण, स्थिरास्थिर, 'अगुरुय त्ति' अगुरुलघु, शुभाशुभ, तैजसकार्मण, चतुर्वर्ण वर्णगन्धरसस्पर्शलक्षणमित्येता द्वादश नाम्नो ध्रुवोदया, ज्ञानावरणपचकमन्तरायपचक दर्शनचतुष्क मिथ्यात्वमिति सप्तविंशतिप्रकृतयो ध्रुवोदया नित्योदया', सर्वासामपि स्वोदयव्यवच्छेदकालं यावदव्यवच्छिन्नोदयत्वादिति ॥ ६ ॥

अभिहिता ध्रुवोदया· प्रकृतय , इदानीमध्रुवोदया प्रकृतीराह—

**थिरसुभियर विणु अधुवबंधी मिछ विणु मोहधुवबंधी। निद्दोवघायमीसं संमं पणनवइ अधुवुदया ॥७॥**

टीका—इतरशब्दस्य प्रत्येकं संबन्धात् स्थिरेतरशुभेतरप्रकृतिचतुष्कं विना स्थिरमस्थिरं शुभमशुभ विना शेषा एकोनसप्ततिसंख्या अध्रुवबन्धिन्यः प्रकृतय । तथाहि—तैजसकार्मणवर्जं शरीरत्रिकं, अगोपागत्रय, सस्थानषट्क, सहननषट्क, जातिपञ्चकं, गतिचतुष्क, विहायोगतिद्विकं, आनुपूर्वीचतुष्क, जिननाम, उच्छ्वासनाम, उद्योत, आतप, पराघात, त्रसबादरपर्याप्तप्रत्येकसुभगसुस्वरादेययश कीर्तिस्थावरसूक्ष्मापर्याप्तकसाधारणदुर्भगदु स्वरानादेयायश कीर्ति , उच्चैर्गोत्र, नीचैर्गोत्र, सातासातवेदनीयं, हास्यरती, अरतिशोकौ, स्त्रीपुंनपुसकरूप वेदत्रय, आयुश्चतुष्कमिति । तथा मिथ्यात्व विना मो-

दध्रुवबन्धिन्योऽष्टादश । तद्यथा–षोडश कषायाः, नयं, जुगुप्सा । निद्राः पंच, उपघातनाम, मिश्रं सम्यक्त्वमिति पंचनवतिरध्रुवोदयाः, व्यवच्छिन्नस्याप्युदयस्य पुनरुदयसद्भावादिति । यद्येवं मिथ्यात्वस्याप्यध्रुवोदयतैव युज्यते, सम्यक्त्वप्राप्तौ व्यवच्छिन्नस्यापि तदुदयस्य मिथ्यात्वगमने पुनः सद्भावादिति । अत्रोच्यते–यासां प्रकृतीनां येषु गुणस्थानकेषु गुणप्रत्ययतोऽद्याप्युदयव्यवच्छेदो न विद्यते, अथ च द्रव्यक्षेत्रकालाद्यपेक्षया तेष्वेव गुणस्थानकेषु कदाचिदसौ नवति कदाचिन्नेति ता एवाध्रुवोदयाः, यथा निद्राया मिथ्यादृष्टेरारन्य क्षीणमोहं यावदुदयोऽव्यवच्छिन्नो वर्तते, अथ च न सततमसौ नवतीति । मिथ्यात्वस्य तु नेदं लक्षणं, यतस्तस्य यत्र प्रथमगुणस्थानके नाद्याप्युदयव्यवच्छेदस्तत्र सततोदय एव न कादाचित्क इति ध्रुवोदयतैव तस्येति ॥ ७ ॥

उक्तमध्रुवोदयप्रकृतिद्वारं, संप्रति ध्रुवसत्ताकाध्रुवसत्ताकप्रकृतिद्वारद्वयं निरूपयन्नाह—

**तसवन्नवीससगतेयकम्म धुवबंधि सेस वेयतिगं। आगिइतिग वेयणियं डुजुयल सग उरल सास चऊ ।ण।**
**खगईतिरिडुग नीयं धुव संता संम मीस मणुयडुगं । विउविक्कार जिणाऊ हारसगुच्चा अधुवसंता ॥ए॥**

टीका–इह विंशतिशब्दस्य प्रत्येकं योगात्त्रसविंशतिर्वर्णविंशतिश्च । तत्र त्रसेनोपलक्षिता विंशतिस्त्रसविंशतिः । तथाहि–त्रसबादरपर्याप्तकप्रत्येकस्थिरशुनसुनगसुस्वरादेययशःकीर्तिनामेति त्रसदशकं, स्थावरसूक्ष्मापर्याप्तकसाधारणास्थिराशुनडुर्नगडुःस्वरानादेयायशःकीर्तिनामेति स्थावरदशकं, उनयमीलने त्रसविंशतिरियमुच्यते । वर्णविंशतिरियम्—

कृष्णनीललोहितहरिद्रसितभेदात्पंच वर्णाः, सुरभिगन्धदुरभिगन्धभेदेन द्वौ गन्धौ, तिक्तकटुकषायाम्लमधुरभे-
दात्पच रसाः, गुरुलघुमृदुखरशीतोष्णस्निग्धरूक्षस्पर्शभेदादष्टौ स्पर्शाः, सर्वमीलने वर्णविंशतिरियमुच्यते, वर्णेनोपल-
क्षिता विंशतिर्वर्णविंशतिरिति कृत्वा। 'सगतेयकम्म त्ति' तैजसकार्मणसप्तकं तैजसशरीरकार्मणशरीरतैजसतैजसबन्धनतै-
जसकार्मणबन्धनकार्मणकार्मणबन्धनतैजससंघातनकार्मणसंघातनलक्षणम्। 'धुववंधिसेस त्ति' वर्णचतुष्कतैजसकार्मण-
स्योक्तत्वाच्छेषाः एकचत्वारिंशद्ध्रुवबन्धिन्यः, तथाहि—अगुरुलघुनिर्माणोपघातभयजुगुप्सामिथ्यात्वकषायषोडशकज्ञानावरण-
पंचकदर्शनावरणनवकान्तरायपंचकमिति। वेदत्रिकं स्त्रीपुंनपुंसकलक्षणं। 'आगिइतिग त्ति' "तणुवंगागिइसंघयणजाइ-
गइखगइ" इत्यादिसंग्रहगाथोक्तमाकृतित्रिकं गृह्यते, तत आकृतयः संस्थानानि षट्, संहननानि षट्, जातयः पंच चेत्ये-
वमाकृतित्रिकशब्देन सप्तदश भेदा गृह्यन्ते। वेदनीयं सातासातभेदाद्द्विधा। द्वयोर्युगलयोः समाहारो द्वियुगलं हास्य-
रत्यरतिशोकरूपम्। 'सग उरल त्ति' औदारिकसप्तकं औदारिकशरीरौदारिकांगोपांगौदारिकसंघातनौदारिकौदारिक-
बन्धनौदारिकतैजसबन्धनौदारिककार्मणबन्धनौदारिकतैजसकार्मणबन्धनरूपम्। 'सासचउ त्ति' उच्छ्वासचतुष्कं उच्छ्वासो-
द्योतातपपराघाताख्यम्। 'खगइतिरिदुग त्ति' द्विकशब्दस्य प्रत्येकं संबन्धात् खगतिद्विकं प्रशस्ताप्रशस्तविहायोगतिलक्षणं,
तिर्यग्द्विकं तिर्यग्गतितिर्यगानुपूर्वीरूपम्। 'नीय ति' नीचैर्गोत्रम्। इत्येतास्त्रिंशदुत्तरशतसंख्याः प्रकृतयो ध्रुवसत्ताका
अभिधीयन्ते, ध्रुवसत्ताकत्वं चासां सम्यक्त्वलाभादर्वाक् सर्वजीवेषु सदैव सद्भावात्। अथानन्तानुबन्धिनां कषायाणा-
मुद्वलनसंभवादध्रुवसत्ताकतैव युज्यते, अत कथं ध्रुवसत्ताकप्रकृतीनां त्रिंशदधिकशतसंख्या संगच्छते? मैवं वोचः,

कस्यचिन्नेति। तथोच्चैर्गोत्रमसमाप्तत्रसत्वस्य बन्धाभावाद्विहितैतद्बन्धस्य स्थावरभावं गतस्य स्थितिक्षयेण वा सत्ताया न लभ्यते तेजोवायुकायिकजीवमध्यगतस्योद्वर्तनप्रयोगेण वा सत्ताया न लभ्यते, इतरस्य तु भवतीत्यासामध्रुवसत्ताकता ॥ ८-९ ॥

उक्तं ध्रुवसत्ताकाध्रुवसत्ताकप्रकृतिद्वारद्वयं, सम्प्रति गुणस्थानकेषु कासाचित्प्रकृतीनां ध्रुवाध्रुवसत्ता गाथात्रयेण निरूपयन्नाह—

**पढमतिगुणेसु मिच्छं नियमा,अजयाइअट्ठगे भज्जं। सासाणे खलु सम्मं,संतं मिच्छाइदसगे वा ॥ १० ॥**

टीका—प्रथमा आद्यास्त्रयस्त्रिसंख्या गुणा गुणस्थानकानि प्रथमत्रिगुणास्तेषु प्रथमत्रिगुणेषु मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्टिलक्षणेषु मिथ्यात्वं मिथ्यात्वलक्षणा प्रकृतिर्नियमान्निश्चयेन सद्विद्यमानं सत्ताया प्राप्यत इत्यर्थः । अयताद्यष्टकेऽविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयताप्रमत्तसंयतापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहलक्षणेष्वष्टसु गुणस्थानकेषु भाज्यं विकल्पनीयं कदाचिन्मिथ्यात्वं सत्तायामस्ति कदाचिन्नास्ति । तथाहि—अविरतसम्यग्दृष्ट्यादिना क्षपिते नास्ति, उपशमिते त्वस्ति । सास्वादने खलु नियमेन 'सम्मं' सम्यक्त्वं सम्यग्दर्शनमोहनीयलक्षणा प्रकृतिः सद्विद्यमानं सर्वदैव लभ्यत इत्यर्थः । यत औपशमिकसम्यक्त्वाद्धायां जघन्यतः समयावशेषायामुत्कृष्टतः षडावलिकावशिष्टायां सास्वादनो लभ्यते । तत्र च नियमादष्टाविंशतिसत्कर्मैवासाविति भावः । मिथ्यात्वादिदशके मिथ्यादृष्ट्यादिषु सास्वादनवर्जितोपशान्तमोहपर्यवसानगुणस्थानकेषु दशसंख्येषु वा विकल्पेन भजनया सम्यक्त्वं सत्ताया स्याल्लभ्यते स्यान्नेति ।

तथाहि–मिथ्यादृष्टौ जीवेऽनादिषड्विंशतिसत्कर्मण्युद्वलितसम्यक्त्वपुंजे वा मिश्रेऽप्युद्वलितसम्यग्दर्शनेऽविरतादौ चोपशान्तमोहान्ते क्षीणसप्तके सम्यग्दर्शनमोहनीयं सत्तायां न प्राप्यतेऽन्यत्र सर्वत्र लभ्यत इति ॥ १० ॥

**सासणमीसेसु धुवं मीसं मिच्छाइ नवसु भयणाए। आइदुगे अण नियमा भइया मीसाइ नवगंमि ॥११॥**

टीका–सास्वादनं च मिश्रं च सास्वादनमिश्रे तयोः सास्वादनमिश्रयोः, बहुत्वं च प्राकृतवशात्, यदाहुः श्रीहेमचन्द्रसूरिपादाः–"द्विवचनस्य बहुवचनं (सि–८–३–१३०) यथा हत्था पाया य इत्यादौ"। सास्वादनगुणस्थाने सम्यग्मिथ्यादृष्टिगुणस्थाने चेत्यर्थः। ध्रुवमवश्यंभावेन मिश्रं सम्यग्मिथ्यादर्शनमोहनीयं 'सदिति' पूर्वोक्तगाथातो डमरुकमणिन्यायादिहापि संबध्यते। इदमत्र हृदयम्–सासादनो नियमादष्टाविंशतिसत्कर्मैव भवति, मिश्रश्चाष्टाविंशतिसत्कर्मा, विसंयोजितसम्यक्त्वः सप्तविंशतिसत्कर्मा, उद्वलितानन्तानुबन्धिचतुष्कश्चतुर्विंशतिसत्कर्मा वा। तत एतेषु सत्तास्थानकेषु मिश्रसत्तावश्यं लभ्यते, षड्विंशतिसत्कर्मा तु मिश्रो न संभवत्येव, मिश्रपुंजस्य सत्तोदयाभ्यां व्यतिरेकेण मिश्रगुणस्थानकाप्राप्तेरिति। मिथ्यात्वादिनवसु सास्वादनसम्यग्मिथ्यात्वरहितेषु मिथ्यादृष्ट्याद्युपशान्तमोहपर्यवसाननवगुणस्थानकेष्वित्यर्थः, भजनया विकल्पेन मिश्रं स्यात् सत्तायामस्ति, स्यान्नेति। किमुक्तं भवति ? यो मिथ्यादृष्टिः षड्विंशतिसत्कर्मा, ये चाविरतसम्यग्दृष्ट्यादय उपशान्तमोहान्ताः क्षायिकसम्यग्दृष्टयस्तेषु मिश्रं सत्तायां नावाप्यतेऽन्यत्र प्राप्यत इति। तथाद्यद्विके प्रथमगुणस्थानकयुगले मिथ्यादृष्टिसास्वादनगुणस्थानकद्वय इत्यर्थः, 'अण त्ति' अनन्तानुबन्धिनः प्रथमकषायाः क्रोधमानमायालोभाख्या नियता अवश्यंभावेन सत्तायामवाप्यन्ते, यतो मिथ्यादृष्टिसास्वादनसम्यग्दृष्टी नियमेनानन्तानु-

वन्धिनो वध्नीत इति जाव । तथा जाज्या जक्तव्या विकल्पनीया मिश्रादिनवके सम्यग्मिथ्यादृष्टिप्रजृत्युपशान्तमोहपर्य-वसाननवगुणस्थानकेष्वनन्तानुवन्धिन' सत्तामाश्रित्य जक्तव्या इत्यर्थ' । इयमत्र जावना–विसयोजितानन्तानुवन्धिनश्चतुर्विंशतिसत्कर्मणः सम्यग्मिथ्यादृष्टे., क्षीणसप्तकस्यैकविंशतिसत्कर्मणोऽनन्तानुवन्धिरहितचतुर्विंशतिसत्कर्मणो वाविरत-सम्यग्दृष्ट्यादेरनन्तानुवन्धिन सत्ताया न सन्ति तदितरस्य तु सन्तीति । एतच्च शेपकर्मग्रन्थाजिप्रायेणोक्त, कर्मप्रकृतौ पुन श्रीशिवशर्मसूरिपादा एवमाहु –"वीयतइएसु मीस नियमा ठाणनवगमि जइयव । सजोयणा उ नियमा डुसु पचसु हुति जइयबा ॥ १ ॥ पूर्वार्धं सुगममेव, उत्तरार्धस्येयमक्षरगमनिका–संयोजयन्त्यात्मनोऽनन्तकालमिति "रम्यादिन्य कर्तरि (सि–५–३–१२६) अनट् प्रत्यये" संयोजना अनन्तानुवन्धिकपाया. । 'तु' पुनरर्थे नियमान्नियमेन द्वयोर्मिथ्यादृष्टिसास्वादनयो' सत्तामाश्रित्य जवन्ति, यत एतावश्यमनन्तानुवन्धिनो वध्नीत इति । पचसु पुनर्गुणस्थानकेषु सम्यग्मिथ्यादृष्टिप्रजृतिष्वप्रमत्तसयतपर्यन्तेषु सत्ता प्रतीत्य जक्तव्या' । यद्युद्वलितास्ततो न सन्तीतरथा तु सन्तीत्यर्थ' । तदुपरितनेषु पुनरपूर्वकरणादिषु सर्वथैव तत्सत्ता नास्ति, यतस्तदजिप्रायेण विसंयोजितानन्तानुवन्धिकपाय एवोपशमश्रेणिमपि प्रतिपद्यत इति ॥ ११ ॥✓

आहारगसत्तगं वा सवगुणे वितिगुणे विणा तित्थं । नोजयसंते मिछो अंतमुहुत्तं जवे तित्थे ॥ १२ ॥

टीका–आहारकसप्तक–आहारकशरीरतदगोपागाहारकसघातनाहारकाहारकवन्धनाहारकतैजसवन्धनाहारककार्मणवन्धनाहारकतैजसकार्मणवन्धनलक्षण वा विकल्पेन जजनया । सर्वगुणेषु सर्वगुणस्थानकेषु मिथ्यादृष्टिप्रजृत्ययोगिकेव-

लिपर्यवसानेषु। सूत्रे चैकवचनं प्राकृतत्वात्, ततश्च सर्वगुणस्थानकेषु विकल्पनया सत्तां प्रतीत्याहारकसप्तकं प्राप्यते। इदमत्र हृदयम्—योऽप्रमत्तसंयतादिः संयमप्रत्ययादाहारकसप्तकबन्धं विधाय विशुद्धिवशादुपरितनगुणस्थानकेषु समारोहति, यश्च कश्चिदविशुद्धाध्यवसायवशादुपरितनगुणस्थानकेभ्योऽधस्तनगुणस्थानकेषु प्रतिपतति तस्याहारकसप्तकं सर्वगुणस्थानकेषु सत्तायां प्राप्यते, यः पुनराहारकसप्तकं न बध्नात्येव तद्बन्धं विनैवोपरितनगुणस्थानकेष्वध्यारोहति तस्य जन्तोस्तत्तेषु सत्तायां नावाप्यत इति। तथा 'बितिगुणे विणा तित्थं ति' काकाक्षिगोलकन्यायेन सर्वगुणेषु चेत्यत्रापि संबन्धनीयं, सर्वगुणस्थानकेषु द्वितीयतृतीयगुणस्थाने विना सास्वादनमिश्रगुणस्थानकरहितेषु द्वादशस्वित्यर्थः, वा विभाषया भजनया तीर्थंकरनाम सत्तायां प्राप्यत इति। इदमत्र तात्पर्यम्—यदा कश्चिदविरतसम्यग्दृष्ट्यादिरपूर्वकरणषष्ठभागं याव-त्सम्यक्त्वप्रत्ययात्तीर्थंकरनामकर्म बद्ध्वोपरितनगुणस्थानकान्यधिरोहति, कश्चिच्च बद्धतीर्थंकरनामकर्माप्यविशुद्धिवशा-न्मिथ्यात्वमपि गच्छति तदा सास्वादनमिश्ररहितेषु द्वादशगुणस्थानकेषु तीर्थंकरनामकर्म सत्तायामवाप्यते, तीर्थंकरनाम-सत्ताको हि मिश्रसास्वादनभावं न प्रतिपद्यते स्वभावादेवेति तद्वर्जनम्। यदुक्तं बृहत्कर्मस्तवभाष्ये—"[1]तित्थयरेण विहीणं सीयालसयं तु संतए होइ। सासायणंमि उ गुणे संमामीसे य पयडीणं ॥ १ ॥" यः पुनर्विशुद्धसम्यक्त्वेऽपि सति तन्न बध्नाति तस्य सर्वगुणस्थानकेषु तत्सत्ता न लभ्यते, यतोऽनयोः संयमसम्यक्त्वलक्षणस्वप्रत्ययसद्भावेऽपि बन्धाभावान्ना-वश्यं सत्तासंभवो, यदुक्तं कर्मप्रकृतिसंग्रहिण्यां—"आहारग तित्थगरा भज्जन्ति" । आहारकसप्तकतीर्थंकरनाम्नी

१ तीर्थंकरेण विहीनं सप्तचत्वारिंशं शतं सत्तायां भवति। सास्वादने तु गुणस्थाने सम्यक्त्वं (सासादनं) मिश्रं च प्रकृतिषु (न तीर्थकृत इति शेषः)

सत्ता प्रति भाव्ये इति भाव । एवमाहारकसप्तके तीर्थंकरनामनि च प्रत्येक सत्तारूपेणावतिष्ठमाने मिथ्यादृष्टिरपि जन्तुर्भवतीति निश्चितम् । उभयसत्तायामसौ भवति न वेति विनेयाशंकायामाह–'नोभयसते मिच्छो त्ति' न नैवोभयस्याहारकसप्तकतीर्थंकरनामलक्षणद्विकस्य सत्त्वे सद्भावे सति 'मिच्छो त्ति' मिथ्यादृष्टिर्भवेत् । कोऽर्थः ? उभयसत्ताया मिथ्यात्व न गच्छतीति भाव. । तर्हि केवलतीर्थंकरनामकर्मसत्ताया कियन्त कालं मिथ्यादृष्टिर्भवतीत्याह–'अंतमुहुत्तं भवे तित्थे त्ति' अन्तर्मुहूर्तमन्तर्मुहूर्तमात्र काल भवेज्जायेत 'मिच्छो त्ति' इत्यस्यात्रापि सबन्धान्मिथ्यादृष्टिर्भवतीति । क्व सतीत्याह–'तित्थे त्ति' तीर्थंकरनामकर्मणि सत्ताया वर्तमान इति गम्यते । इदमुक्त भवति–यो नरके बद्धायुष्को वेदकसम्यग्दृष्टिर्बद्धतीर्थंकरनामकर्मा सस्तत्रोत्पित्सुरवश्य सम्यक्त्वं परित्यज्य तत्रोत्पद्यते, उत्पत्तिसमयानन्तरमन्तर्मुहूर्तादूर्ध्वमवश्य सम्यक्त्व प्रतिपद्यते, तस्यायमुक्तप्रमाण कालो लभ्यत इति ॥ १२ ॥

उक्त सप्रतिपक्ष ध्रुवसत्ताकप्रकृतिद्वारमधुना सप्रतिपक्षं सर्वदेशघातिक प्रकृतिद्वार प्रतिपादयन्नाह—

**केवलजुयलावरणा पण निद्दा बारसाइमकसाया । मिच्छं ति सव्वघाई चउनाणतिदंसणावरणा ॥ १३ ॥**
**संजलण नोकसाया विग्घं इय देसघाइअ (य) अघाई। पत्तेयतणुट्ठाऊ तसवीसा गोयदुगवन्ना ॥ १४ ॥**

टीका–केवलयुगलं केवलज्ञानकेवलदर्शनरूपं तस्यावरणे आच्छादके कर्मणी केवलयुगलावरणे केवलज्ञानावरणं केवलदर्शनावरण चेत्यर्थ । पच निद्रा –निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानर्द्धिरूपा. । द्वादशेति सख्या आदिमकषाया·

संज्वलनापेक्षया प्रथमकषायाः क्रोधमानमायालोभानामेकैकशोऽनन्तानुबन्ध्यप्रत्याख्यानावरणप्रत्याख्यानावरणलक्षण-नामत्रयेण द्वादशधात्वम् । मिथ्यात्वमित्यनेन प्रदर्शितप्रकारेण सर्वमपि स्वावार्यं गुणं घातयन्तीत्येवंशीलाः सर्वघातिन्यो विंशतिसंख्या भवन्तीत्यक्षरार्थः । भावार्थः पुनरयम्—इह केवलज्ञानावरणस्य स्वावार्यः केवलज्ञानलक्षणो गुणः, स च यद्यपि सर्वात्मनाऽऽव्रियते तथापि सर्वजीवानां केवलज्ञानस्यानन्तभागोऽनावृत एवावतिष्ठते, तदावरणे तस्य सामर्थ्याभावात् । यदाहुः श्रीदेवर्द्धिवाचकवराः—"सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाडिओ चिट्ठइ त्ति" । कथं तर्हि सर्वघातित्वमिति चेदभिधीयते—यथातिबहलजलदपटलेन समुन्नतेन बहुतराया आवृतत्वात् सर्वापि सूर्याचन्द्रमसोः प्रभाऽनेनावृतेति वचनरचना प्रवर्तते अथवाद्यापि काचित्तत्प्रभा प्रसरति "सुट्ठु वि मेहसमुदए होइ पहा चंदसूराणं" इति वचनादनुभवसिद्धत्वाच्च, तथात्रापि प्रबलकेवलज्ञानावरणावृतस्यापि केवलज्ञानस्यानन्तभागोऽनावृत एवास्ते । यदि पुनस्तमप्यावृणुयात्तदा जीवोऽजीवत्वमेव प्राप्नुयात् । यदुक्तं नंद्यध्ययने—"जइ पुण सो वि आवरिज्जा ता णं जीवो अजीवत्तणं पाविज्जा" । सोऽपि चावशिष्टोऽनन्तभागो जलधरानावृतदिनकरकरप्रसर इव कटकुड्यादिभिर्मतिश्रुतावधिमनःपर्यायज्ञानावरणैराव्रियते, तथापि काचिन्निगोदावस्थायामपि ज्ञानमात्रावतिष्ठतेऽन्यथाऽजीवत्वप्रसंगात् । मतिज्ञानादिविषयभूतांश्चार्थान् यन्न जानीते, स केवलज्ञानावरणोदयो न भवति, किं तर्हि ? मतिज्ञानावरणाद्युदय एवेति । केवल-

१ सर्वजीवानामपि चाक्षरस्यानन्ततमो भागो नित्योद्घाटितस्तिष्ठति । २ सुष्ठ्वपि मेघसमुदये भवति प्रभा चन्द्रसूर्ययोः । ३ यदि पुनः सोपि ( अनंततमो भागः ) आवृणीयात्तदा जीवोऽजीवत्वं प्राप्नुयात् ।

दर्शनावरणस्य समस्तवस्तुस्तोमसामान्यावबोध आवार्यस्त सर्वं हन्तीति सर्वघात्यभिधीयते, तदनन्तभाग त्विदमपि सामर्थ्याभावान्नावृणोति, सोऽपि चानावृतोऽनन्तभागश्चक्षुरचक्षुरवधिदर्शनावरणैराव्रियते, शेषो जलधरदृष्टान्तादिचर्चसर्वैव, यच्च चक्षुर्दर्शनादिविषयानर्थान्न पश्यति, स केवलदर्शनावरणोदयो न भवति, किं तर्हि ? चक्षुर्दर्शनावरणाद्युदय एवेति । यद्येव तर्हि केवलज्ञानावरणकेवलदर्शनावरणक्षये सत्यपि मतिज्ञानादिविषयाणामर्थानामवबोधो न प्राप्नोति भिन्नज्ञानविषयत्वादिति चेत्तदयुक्तम्–केवलालोकलाभे शेषाववोधलाभान्तर्भावात्, ग्रामलाभे क्षेत्रलाभान्तर्भाववदिति । निद्रापंचकमपि सर्वं वस्त्ववबोधमावृणोतीति सर्वघाति, यत्पुन स्वापावस्थायामपि किंचिच्चेतयति, तत्र धाराधरनिदर्शन वाच्यम् । तथानन्तानुबन्धिनोऽप्रत्याख्यानावरणा' प्रत्याख्यानावरणाश्च प्रत्येकं चत्वारो यथाक्रम सम्यक्त्वं देशविरतिचारित्र सर्वविरतिचारित्र च सर्वमेव घ्नन्तीति सर्वघातिनो द्वादशापि कषायाः, यत्पुनस्तेषा प्रबलोदयेऽप्ययोग्याहारादिविरमणमुपलभ्यते तत्र वारिवाहदृष्टान्तो वाच्य । तथा मिथ्यात्व तु जिनप्रणीततत्त्वश्रद्धानरूपसम्यक्त्व सर्वमपि हन्तीति सर्वघाति, यत्तु तस्य प्रबलोदयेऽपि मनुष्यपश्वादिवस्तुश्रद्धान तदपि जलधरोदाहरणादवसेयमिति । भाविताः सर्वघातिन्य' संप्रति देशघातिन्यो भाव्यन्ते–'चउनाणतिदसणावरण त्ति' आवरणशब्दस्य प्रत्येकं सबन्धाज्ज्ञानावरणचतुष्कं मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमन पर्यायज्ञानावरणलक्षण, दर्शनावरणत्रिकं चक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणरूपमिति । संज्वलनाश्चत्वार क्रोधमानमायालोभा । नोकषाया हास्यरत्यरतिशोकभयजुगुप्सास्त्रीवेदपुवेदनपुसकवेदस्वरूपा नव । विघ्नमन्तराय दानलाभभोगोपभोगवीर्यान्तरायलक्षण । इत्यमुना दर्शितप्रकारेण

देशघातिन्यः पंचविंशतिसंख्याः प्रकृतयो भवन्तीत्यक्षरार्थः । भावार्थस्त्वयम्—मतिज्ञानावरणादिचतुष्कं केवलज्ञानावरणानावृतं ज्ञानदेशं हन्तीति देशघातीदमुच्यते, मत्यादिज्ञानचतुष्टयविषयभूतानर्थान् यन्नाववुध्यते स हि मत्यावरणाद्युदय एव, तदविषयभूतांस्त्वनन्तगुणान् यन्न जानीते स केवलज्ञानावरणस्यैवोदय इति । चक्षुरचक्षुरवधिदर्शनावरणान्यपि केवलदर्शनावरणानावृतकेवलदर्शनैकदेशमावृण्वन्तीति देशघातीनि । तथाहि—चक्षुरचक्षुरवधिदर्शनविषयभूतानेवार्थानेतदुदयान्न पश्यति तदविषयभूतांस्त्वनन्तगुणान् केवलदर्शनावरणोदयादेव न समीक्षते । तथा संज्वलनाः, नव नोकषायाश्च लब्धस्य चारित्रस्य देशमेव घ्नन्तीति देशघातिनः, तेषां मूलोत्तरगुणानामतीचारजनकत्वात् । यदवादि श्रीमदाराध्यपादैः—"सव्वे वि य अइयारा संजलणाणं तु उदयओ हुंति । मूलच्छिज्जं पुण होइ वारसण्हं कसायाणं ॥ १ ॥ इति" दानान्तरायादीनि पंचान्तरायाण्यपि देशघातीन्येव । तथाहि—दानलाभभोगोपभोगानां तावद्ग्रहणधारणयोग्यान्येव द्रव्याणि विषयस्तानि च समस्तपुद्गलास्तिकायस्यानन्तभागरूपे देश एव वर्तन्तेऽतो यदुदयात्तानि पुद्गलास्तिकायदेशवर्तीनि द्रव्याणि यद्दातुं लब्धुं भोक्तुमुपभोक्तुं च न शक्नोति तानि दानलाभभोगोपभोगान्तरायाणि तावद्देशघातीन्येव, यत्तु सर्वलोकवर्तीनि द्रव्याणि न ददाति, न लभते, न भुंक्ते, नाप्युपभुंक्ते, तन्न दानान्तरायाद्युदयात्, किं तु तेषामेव ग्रहणधारणाविषयत्वेनाशक्यानुष्ठानत्वादिति मन्तव्यम् । वीर्यान्तरायमपि देशघात्येव सर्ववीर्यं न घातयतीति कृत्वा । तथाहि—सूक्ष्मनिगोदस्य वीर्यान्तरायकर्मणोऽभ्युदये वर्तमानस्याप्याहारपरिणमनकर्मदलिकग्रहणगत्यन्तरगमनादिविषय

१ सर्वेऽपि चातिचाराः संज्वलनानां तूदयाद्भवन्ति । मूलच्छेद्यं पुनर्भवति द्वादशानां कषायाणां (उदय इति शेषः) ।

एतावान् वीर्यान्तरायकर्मक्षयोपशमो विद्यते तत्क्षयोपशमविशेषतश्च निगोदजीवानादौ कृत्वा यावत् क्षीणमोहस्तावद्वीर्यमल्पं बहुतर बहुतम वा तारतम्याद्भवतीति । केवलिनश्च तत्कर्म क्षयसद्भूतं सर्व वीर्य भवतीति देशघातीदम् । यदि पुन. सर्वघाति स्यात्तदा यथैव मिथ्यात्वस्य कषायद्वादशकस्य चोदये तदावार्य सम्यक्त्वगुण देशसर्वसयमगुण च जघन्यमपि न लभते, तथैव च तदुदयेऽपि तदावार्य जघन्यमपि वीर्यगुणं न लभेत, न चैवमस्ति, तस्मादिदमपि देशघातीति स्थितम् । इत्युक्ता' सर्वदेशघातिन्य सम्प्रति तत्प्रतिपक्षभूता अघातिनीर्व्याचिख्यासुराह–'अघाई' इत्यादि अघातिन्य एता' पचसप्ततिसख्या. प्रकृतयोऽभिधीयन्ते, तद्यथा–'पत्तेय त्ति' प्रत्येकप्रकृतयः पराघातोच्छ्वासातपोद्योतागुरुलघुतीर्थकरनिर्माणोपघातरूपा अष्टौ । 'तणु त्ति' तन्वा (नु) शब्देनोपलक्षितमष्टक "तणुवगागिइसघयण जाइ गइ खगइ पुव्वि" त्ति लक्षण तन्वष्टक, तत्र तनव औदारिकवैक्रियाहारकतैजसकार्मणलक्षणा' पच, उपागानि त्रीणि, आकृतय सस्थानानि षट्, सहननानि षट्, जातय पंच, गतयश्चतस्र', खगती द्वे, पूर्व्य आनुपूर्व्यश्चतस्रः, एव तन्वष्टके प्रकृतय पचत्रिशत्, आयुषि चत्वारि, त्रसविंशतिस्त्रसदशकस्थावरदशकमीलनात्, 'गोयदुग त्ति' गोत्रशब्देनोपलक्षितं द्विकं "गोयवेयणीयमिति" गाथाशेन प्रतिपादित गोत्रमुच्चैर्गोत्र नीचैर्गोत्रमिति, सातासातभेदाद्वेदनीयं द्विधा, तदेवं गोत्रद्विकशब्देन प्रकृतिचतुष्टयमभिधीयते । 'वन्न त्ति' वर्णगन्धरसस्पर्शाख्याश्चतस्र प्रकृतयो गृह्यन्ते, इत्येता' प्रकृतयोऽघातिन्यो न कंचन ज्ञानादिगुण घातयन्तीति कृत्वा, केवलं सर्वदेशघातिनीभि. सह वेद्यमानास्तत्सदृश्योऽनुभूयन्ते । अयमर्थ –सर्वघातिनीभि सह वेद्यमाना एता अघातिन्योऽपि सर्वघातिरसविपाकं दर्शयन्ति, देशघातिनीभि सह पुनर्वेद्यमाना देशघातिरसम् ।

यथा स्वयमचौरोऽपि चौरैः सह वर्तमानश्चौर इवावज्ञासते । यदुक्तं—"जाणय न विसउ घाइत्तणंमि ताणं पि सव्व-घाइरसो । जायइ घाइसगासेण चोरया वेहचोराणं ॥ १ ॥" ॥ १४ ॥

उक्तं सप्रतिपक्षं सर्वदेशघातिद्वारं, संप्रति पुण्यपापप्रकृतीर्विवरीषुराह—

**सुरनरतिगुच्च सायं तसदस तणुवंग वइर चउरंसं । परघासग तिरिआउं वन्नचउ पणिंदि सुभखगई ॥ १५ ॥**

टीका—त्रिकशब्दस्य प्रत्येकं संबन्धात्सुरत्रिकं देवगतिदेवानुपूर्वीदेवायुर्लक्षणं, नरत्रिकं नरगतिनरानुपूर्वीनरायुर्लक्षणं, 'उच्च त्ति' उच्चैर्गोत्रं, सातं, त्रसदशकं त्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तिलक्षणं, तनव औदारिक-वैक्रियाहारकतैजसकार्मणरूपाः पंच, उपांगानि औदारिकांगोपांगवैक्रियांगोपांगाहारकांगोपांगलक्षणानि त्रीणि, 'वइर त्ति' वज्रऋषभनाराचसंहननं, चतुरस्रं समचतुरस्रं, 'परघासग त्ति' पराघातसप्तकं पराघातोच्छ्वासातपोद्योतागुरुलघुतीर्थकरना-मनिर्माणरूपं, तिर्यगायुः वर्णचतुष्कं वर्णगन्धरसस्पर्शाख्यं, पंचेन्द्रियजातिः, शुभखगतिः प्रशस्तविहायोगतिरिति ॥ १५ ॥

**बायाल पुन्नपगई अपढमसंठाणखगइसंघयणा । तिरियदुग असाय नीउवघाय इग विगल निरयतिगं १६**

**थावरदस वन्नचउक्क घाइ पणयाल सहिय बासीई । पावपयडि त्ति दोसु वि वन्नाइगहा सुहा असुहा ॥ १७ ॥**

टीका—सुरत्रिकप्रभृतयः शुभखगतिपर्यन्ता एता द्विचत्वारिंशत्संख्याः पुण्याः शुभाः प्रकृतय उच्यन्ते । उक्ताः पुण्य-

---

१ यासामपि च न विषयो घातित्वे तासामपि सर्वघातिरसः । जायते घातिसकाशात् चौरतेवेहाचौराणां ।

प्रकृतय इदानीं पापप्रकृतीराह–'अपढमसगणेत्यादि,' संस्थानानि च खगतिश्च संहननानि च संस्थानखगतिसंहननानि, अप्रथमानि च प्रथमवर्जानि तानि संस्थानखगतिसंहननानि चाप्रथमसंस्थानखगतिसंहननानि । तत्राप्रथमसंस्थानानि न्यग्रोधपरिमण्डलसादिकुब्जवामनहुण्डाख्यानि पञ्च, अप्रथमखगतिरप्रशस्तविहायोगतिः, अप्रथमसंहननानि ऋषभनाराच-नाराचार्धनाराचकीलिकासेवार्तरूपाणि पञ्च । तिर्यग्द्विकं तिर्यग्गतितिर्यगानुपूर्वीरूपं, असातं, नीचैर्गोत्रं, उपघातं, 'इग त्ति' एकेन्द्रियजातिः, 'विगल त्ति' द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातयः, नरकत्रिकं नरकगतिनरकानुपूर्वीनरकायुर्लक्षणं, स्थावरदशकं स्थावरसूक्ष्मापर्याप्तकसाधारणास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिरूपं, वर्णचतुष्कं वर्णगन्धरसस्पर्शाख्यं, 'घाइपणयाल त्ति' सर्वघातिन्यो विंशतिः, देशघातिन्यः पञ्चविंशतिः, उभया अपि मिलिताः सामान्येन घातिन्यः पञ्च-चत्वारिंशद्भवन्ति, ताभिः सहिता युक्ताः पूर्वोक्ता अप्रथमसंस्थानादिका वर्णचतुष्कपर्यवसानाः सप्तत्रिंशत्संख्या द्व्यशी-तयः पापप्रकृतयो भवन्ति । इतिशब्दः परिसमाप्तौ द्व्यशीतय एव पापप्रकृतयो नाधिका इत्यर्थः । ननु द्विचत्वारिंशत्पु-ण्यप्रकृतयो भवन्ति द्व्यशीतिश्च पापप्रकृतयो मिलिताश्चतुर्विंशत्युत्तरं प्रकृतिशतं जातं, बन्धे तु विंशत्युत्तरमेव शतमधि-क्रियते "बंधे विसुत्तरसयं"मितिवचनात्, तत्कथं न विरोधः ? इत्याह–'दोसु वि वन्नाइगह त्ति' द्वयोरपि पुण्यपापप्र-कृतिराश्योर्वर्णादिग्रहाद्वर्णरसगन्धस्पर्शग्रहणान्न कश्चनापि विरोधः । अयमभिप्रायः–वर्णादयो हि पुण्यस्वभावाः पापस्व-भावाश्च वर्तन्ते, ततः पुण्यवर्णचतुष्टयं पुण्यप्रकृतिषु मध्ये गृह्यते, पापवर्णचतुष्टयं तु पापप्रकृतिषु । ततः पुण्यपापप्रकृति-

राश्योर्वर्णादिचतुष्कं यत्तदेकमेव सत्प्रशस्ताप्रशस्तभेदेनोभयत्रापि विवक्ष्यत इत्यदोषः। तथैता एव पुण्यप्रकृतयः शुभकारणजन्यत्वाच्छुभा उच्यन्ते, पापकृतयस्त्वशुभकारणजन्यत्वादशुभा अभिधीयन्त इति ॥ १६–१७ ॥

उक्तं पुण्यप्रकृतिपापप्रकृतिद्वारद्वयं, संप्रति परावर्तमानापरावर्तमानप्रकृतिद्वारद्वयं व्याचिख्यासुर्द्वारगाथायां परावर्तमानप्रकृतीनां पूर्वनिर्देशेऽपीहाल्पसंख्याकत्वेन प्रथममपरावर्तमानाः प्रकृतीराह—

**नामधुवबंधिनवगं दंसण पणनाण विग्घ परघायं। भय कुच्छ मिच्छ सासं जिण गुणतीसा अपरियत्ता ॥१८॥**

टीका—नाम्नो ध्रुवबन्धिनवकं वर्णचतुष्कतैजसकार्मणागुरुलघुनिर्माणोपघातलक्षणं, दर्शनचतुष्कं चक्षुरचक्षुरवधिकेवलदर्शनरूपं, पंच ज्ञानानि मतिश्रुतावधिमनःपर्यायकेवलज्ञानाभिधानि, काकाक्षिगोलकन्यायादत्रापि पंचशब्दस्य संबन्धात्पंच विघ्नान्यन्तरायाणि दानलाभभोगोपभोगवीर्यान्तरायाख्यानि, पराघातं, भयं, कुत्सा जुगुप्सा, मिथ्यात्वं, 'सासं ति' उच्छ्वासं, जिननाम, इत्येता एकोनत्रिंशत्प्रकृतयोऽपरिवृता अपरावर्तमाना भवन्ति। अयमत्र भावः—या नामध्रुवबन्धिनवकप्रभृतय एकोनत्रिंशत्प्रकृतयस्ताः स्वबन्धोदयोभयकालेषु नान्यस्याः प्रकृतेर्बन्धमुदयमुभयं वा निरुध्य प्रवर्तन्तेऽतोऽपरावर्तमाना इति ॥ १८ ॥

उक्ता अपरावर्तमानाः प्रकृतयः, सांप्रतं परावर्तमानप्रकृतीराह—

**तणुअट्ठ वेय दुजुयल कसाय उज्जोयगोयदुग निद्दा। तसवीसा उ परित्ता, खित्त विवागाणुपुव्वीउ ॥ १९ ॥**

टीका–तनुशब्देनोपलक्षितमष्टक "तणुवगागिइ सधयण जाइ गइ खगइ पुवी" तिगाथावयवेन प्रतिपादित तन्वष्टकं, तत्र तनवस्तैजसकार्मणयोरपरावर्तमानासु प्रतिपादितत्वाच्छेषा औदारिकवैक्रियाहारकरूपास्तिस्र॰, उपागानि त्रीणि, आकृतय षट्, सहननानि षट् , जातय पच, चतस्रो गतय॰, खगतिद्वय, आनुपूर्वीचतुष्कमिति तन्वष्टकशब्देन त्रयस्त्रिंशत्प्रकृतयो गृह्यन्ते। वेदा॰ स्त्रीपुंनपुसकरूपास्त्रय , द्वियुगल हास्यरत्यरतिशोकरूप, कपाया षोडश, 'उज्जोयगोयदुगं ति' द्विकशब्दस्य प्रत्येक सवन्धादुद्योतद्विक "उज्जोयायवेति" वचनादुद्योतातपाख्यं, गोत्रद्विक "गोयवेयणीयमिति" वचनाद्गोत्रवेदनीयस्वरूप तत्र गोत्रमुच्चैर्गोत्रनीचैर्गोत्रभेदाद्द्विधा, सातासातभेदाद्वेदनीयमपि द्विधा, इत्येताश्चतस्र॰ प्रकृतयो गोत्रद्विकशब्देन गृह्यन्ते। निद्रापचक, त्रसविंशतिस्त्रसदशकस्थावरदशकरूपा, आयूंपि चत्वारि, इत्येता एकनवतिप्रकृतय॰ 'परित्त त्ति' प्राकृतत्वात्परिवृता॰ परावर्तमाना भवन्तीति शेष । तत्र षोडश कपाया निद्रापचक च यद्यप्येता एकविंशतिप्रकृतयो ध्रुवबन्धित्वाद्बन्ध प्रति परोपरोध न कुर्वन्ति, तथापि स्वोदये स्वजातीयप्रकृत्युदयनिरोधात्परावर्तमाना भवन्ति। स्थिरशुभास्थिराशुभप्रकृतयश्चतस्रश्च यद्यप्युदयं प्रति न विरुद्धास्तथापि बन्ध प्रति परावर्तमाना , शेषाश्च गतिचतुष्कजातिपचकशरीरत्रिकागोपागत्रिकसस्थानपट्कसहननपट्कानुपूर्वीचतुष्कातपोद्योतविहायोगतिद्विकत्रसादिषोडशकवेदत्रिकहास्यरत्यरतिशोकयुगलद्वयसातासातोच्चनीचायुश्चतुष्टयलक्षणा॰ षट्पष्टि॰ प्रकृतयो बन्धोदयाभ्यामपि परस्पर विरुद्धा अत परावर्तमाना इत्युक्ता परावर्तमानप्रकृतयस्तल्लक्षणेन च समर्थितं परावर्तमानापरावर्तमानप्रकृतिद्वारद्वय, तदेव समर्थितं "धुवबंधोदयसत्ताघाइपुन्नपरियत्ता सेयर" इति मूलद्वारगाथोपन्यस्त द्वारद्वादशक, सप्रति यदुक्त "चउह

विवागा वुत्तमिति" तद्विवरणिषुः प्रथमं क्षेत्रविपाकाः प्रकृतीराह–'खित्तविवागाणुपुव्वीउं त्ति' क्षेत्रमाकाशं तत्रैव विपाक उदयो यासां ताः क्षेत्रविपाकाः, आनुपूर्व्यश्चतस्रो नरकतिर्यग्नरामरानुपूर्वीलक्षणा यतस्तासां चतसृणामपि विग्रहगतावेवोदयो भवतीति। उक्तं च बृहत्कर्मविपाके–"नरयाउयस्स उदए नरए वक्केण गच्छमाणस्स। नरयाणुपुव्वियाए तहिं उदउं अन्नहिं नत्थि ॥ १ ॥ एवं तिरिमणुदेवे तेसु वि वक्केण गच्छमाणस्स। तेसिमणुपुव्वियाणं तहिं उदउं अन्नहिं नत्थि ॥ २ ॥" ननु विग्रहगत्यभावेऽप्यानुपूर्वीणामुदयः संक्रमकरणेन विद्यते, अतः कथं क्षेत्रविपाकिन्यस्ता न गतिवज्जीवविपाकिन्यः? इत्यत्रोच्यते–विद्यमानेऽपि संक्रमे यथा तासां क्षेत्रप्राधान्येन स्वकीयो विपाकोदयो न तथाऽन्यासामतः क्षेत्रविपाकिन्य एवेति ॥ १९ ॥

उक्ताः क्षेत्रविपाकाः प्रकृतयः, सांप्रतं जीवविपाका भवविपाकाश्च प्रकृतीराह–

घणघाइ, दुगोय, जिणा, तसियरतिग, सुभगदुभगचउ, सासं।
जाइतिग, जियविवागा, आऊ चउरो भवविवागा ॥ २० ॥

टीका–घनघातिन्यः प्रकृतयः सप्तचत्वारिंशत्, तद्यथा–ज्ञानावरणं पंचधा, दर्शनावरणं नवधा, मोहनीयमष्टाविंशतिधा,

---

१ निरयायुषं उदये नरके वक्रं गच्छतः नारकानुपूर्व्यास्तत्रोदयोऽन्यत्र नास्ति ॥ १ ॥ एवं तिर्यङ्मनुजदेवाः तेष्वपि वक्रं गच्छतां तेषामानुपूर्वीणां तत्रोदयोन्यत्र नास्ति।

अन्तराय पञ्चधेति । 'दुगोय त्ति' "दुगोयवेयणियमिति" वचनाद्गोत्रद्विकं गोत्रवेदनीयरूपं, तत्र गोत्रमुच्चैर्गोत्रनीचैर्गोत्र-भेदाद्द्विधा, वेदनीयं सातासातभेदेन द्विभेदमिति दुगोयशब्देन प्रकृतिचतुष्टयं गृह्यते । जिननाम । 'तसियरतिग त्ति' त्रिकशब्दस्य प्रत्येकं सम्बन्धात्त्रसत्रिकं त्रसबादरपर्याप्तकरूपं, इतरत्रिकं स्थावरत्रिकं स्थावरसूक्ष्मापर्याप्तकलक्षणं । 'सुभग-दुभगचउ त्ति' चतुःशब्दस्य प्रत्येकं सम्बन्धात् सुभगचतुष्कं सुभगसुस्वरादेययशःकीर्तिरूपं, दुर्भगचतुष्कं दुर्भगदुःस्व-रानादेयायशःकीर्तिलक्षणं । 'सास त्ति' उच्छ्वास, 'जाइतिग त्ति' जातिशब्देनोपलक्षितं त्रिकं "जाइगइखगइ" इति गाथा-वयवोक्तं जातित्रिकं, तत्र जातयः एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियाख्याः पञ्च, गतयः सुरनरतिर्यग्नरकरू-पाश्चतस्रः, खगतिः प्रशस्ताप्रशस्तविहायोगतिभेदेन द्विधा, इत्येवं जातित्रिकशब्देनैकादश प्रकृतयो गृह्यन्ते । इत्येता अष्टासप्ततिप्रकृतयो जीव एव विपाकः स्वशक्तिदर्शनलक्षणो विद्यते यासां ता जीवविपाका ज्ञातव्या । तथाहि–पञ्चविध-ज्ञानावरणोदयाज्जीव एवाज्ञानी स्यात् न पुनः शरीरपुद्गलादिषु तत्कृतः कश्चिदुपघातोऽनुग्रहो वास्तीति । एवं नवविधदर्श-नावरणोदयाज्जीव एवादर्शनी भवति, सातासातोदयाज्जीव एव सुखी दुःखी वा सम्पद्यते, अष्टाविंशतिविधमोहनीयोद-याज्जीव एवादर्शन्यचारित्री वा जायते, पञ्चविधान्तरायोदयाज्जीव एव न दानादि कर्तुं पारयति, उच्चैर्गोत्रनीचैर्गोत्रग-तिचतुष्कजातिपञ्चकविहायोगतिद्विकजिनत्रसबादरपर्याप्तकस्थावरसूक्ष्मापर्याप्तकसुभगचतुष्कदुर्भगचतुष्कोच्छ्वासनामोदया-ज्जीव एव तं तं भावमनुभवति न शरीरपुद्गला, इत्येताः सर्वा अपि जीवविपाकिन्य इति । या अपि क्षेत्रविपाकिन्य उक्ता याश्च भवविपाकाः पुद्गलविपाकाश्च वक्ष्यन्ते, ता अपि परमार्थतो जीवविपाका एव, यतो जीवस्यैव पारम्पर्येणानु-

ग्रहमुपघातं च कुर्वन्ति, केवलं मुख्यतया क्षेत्रभवपुद्गलेषु तत्तद्विपाकस्य विवक्षितत्वात्तत्तद्विपाका उच्यन्त इति। आयूंषि चत्वारि नारकायुष्कादीनि, पुंस्त्वं च प्राकृतवशात्, प्राकृते हि लिंगमतंत्रमेव, यदवादि प्रवादिसर्पदर्पसौपर्णेयैः श्रीहेमचन्द्रसूरिपादैः स्वप्राकृतलक्षणे "लिंगमतंत्रमिति"। भवन्ति कर्मवशवर्तिनः प्राणिनोऽस्मिन्निति भवो नारकादिपर्यायः, स च पूर्वायुर्विच्छेदे विग्रहगतेरप्यारभ्य वेदितव्यः, यदाह भगवान् श्रीसुधर्मस्वामी भगवत्यां—"नेरइए नेरइएसु उववज्जइ त्ति" तस्मिन् भवे नारकतिर्यङ्नरामररूप एव विपाक उदयो विद्यते येषां तानि भवविपाकीनि। तथाहि—यथासंभवं पूर्वभवे बद्धान्यागामिनि भवे विपच्यन्त इति भावः। ननु यथायुषां देवादिभवेऽवश्यं विपाको भवति, एवं गतीनामपि, अतस्ता अपि भवविपाकिन्यः प्राप्नुवन्ति। अत्रोच्यते—आयुर्यद्यस्य भवस्य योग्यं निबद्धं तत्तस्मिन्नेव भवे वेद्यत इत्यायुषो भवविपाकदानाद्भवविपाकित्वं, गतयस्तु विभिन्नभवयोग्या निबद्धा अप्येकस्मिन्नपि भवे सर्वाः संक्रमेण संवेद्यन्ते। तथाहि—मोक्षगामिनोऽशेषा गतयो मनुष्यभवे क्षयं यान्ति, अतो भवं प्रति गतीनां नैयत्याभावान्न भवविपाकिन्यः, किंतु जीवविपाकिन्य एवेति॥ २०॥

उक्ता जीवविपाका भवविपाकाश्च प्रकृतय इदानीं पुद्गलविपाकिनीः प्रकृतीः प्रचिकटयिषुराह—

**नामधुवोदय चउतणुवघायसाहारणियर जोयतिगं। पुग्गलविवागि बंधो पयइठिइरसपएस त्ति॥२१॥**

टीका—नाम्नो नामकर्मणो ध्रुवोदया नित्योदया नामध्रुवोदया द्वादश प्रकृतयस्तद्यथा—निर्माणस्थिरास्थिरागुरुलघुशुभाशुभतैजसकार्मणवर्णचतुष्कमिति। 'चउतणु त्ति' तनुशब्देनोपलक्षितं चतुष्कं "तणुवंगागिइसंघयण" इति गाथावयवेन

प्रतिपादित तनुचतुष्क, तत्र तैजसकार्मणयोर्ध्रुवोदयमध्ये पठितत्वादिह तनत्र औदारिकवैक्रियाहारकलक्षणास्तिस्र परिगृह्यन्ते, उपागानि त्रीणि, आकृतय सस्थानानि पद्, सहननानि पद्, तदेव तनुचतुष्कशब्देनैता अष्टादश प्रकृतयो गृह्यन्ते । उपघात, साधारण, इतरच्च तत्प्रतिपक्षभूत प्रत्येक 'जोयतिग ति' "उज्जोयायवपरघाय" इति वचनाद्धुद्योतातपपराघातलक्षणमित्येता॰ पट्त्रिंशत्प्रकृतय, 'पुग्गलविवाग त्ति' पुद्गलेषु शरीरतया परिणतेषु परमाणुषु विपाक उदयो यासा ता पुद्गलविपाकिन्य, शरीरपुद्गलेष्वेवात्मीया शक्ति दर्शयन्तीत्यर्थ । तथाहि–निर्माणस्थिरास्थिराद्युदयाच्छरीरतया परिणताना पुद्गलानामगप्रत्यगादिनियमन, दन्तास्थ्यादीना स्थिरत्वं, जिह्वादीनामस्थिरत्व, शिर प्रभृतीना शुभत्व, पादादीनामशुभत्वमित्यादि तनूदयाच्छरीरतया पुद्गला एव परिणमन्ति । अगोपागोदयाच्च तेषा शिरोग्रीवाद्यवयवविभागो जायते । आकृतिनामोदयात्तेष्वेवाकारविशेष सपनीपद्यते । सहननोदयात्तेषामेव वज्रऋषभनाराचादितया विशिष्टा परिणतिर्भवति । उपघातसाधारणप्रत्येकोद्योतातपादीनामपि सर्वेषा शरीरपुद्गलेष्वेव स्वविपाकस्य दर्शनात्सुप्रतीतमेवासा पुद्गलविपाकित्वमिति । उक्ताश्चतुर्विधविपाका प्रकृतय॰, सप्रति यदुक्त "बुन्ध बधविहसामीय त्ति" तन्निर्वाहणार्थं बन्धविधा व्याचिख्यासुराह–'बंधो पयइठिइरसपएस त्ति' बन्धशब्दस्य प्रत्येकमभिसबन्धात्प्रकृतिबन्ध, स्थितिबन्ध, रसबन्धः, प्रदेशबन्ध इत्यमुना प्रकारेण बन्धश्चतुर्धा भवति । तत्र स्थित्यनुभागप्रदेशबन्धाना य॰ समुदाय स प्रकृतिबन्ध, अध्यवसायविशेषगृहीतस्य कर्मदलिकस्य यत् स्थितिकालनियमन स स्थितिबन्ध, कर्मपुद्गलानामेव शुभोऽशुभो वा घात्यघाती वा यो रस सोऽनुभागबन्धो रसबन्ध इत्यर्थ, कर्मपुद्गलानामेव यद्ग्रहण स्थितिरसनिरपेक्षं दलिकसख्याप्राधान्येनैव

करोति स प्रदेशबन्धः । उक्तं च–"ठिइबंध दलस्स ठिई पएसबंधो पएसगहणं जं । ताण रसो अणुभागो तस्समुदाओ पगइबंधो ॥ १ ॥" अन्यत्राप्युक्तम्–"प्रकृतिः समुदायः स्यात्स्थितिः कालावधारणम् । अनुभागो रसः प्रोक्तः प्रदेशो दलसंचयः ॥ १ ॥" इति ॥ २१ ॥

उक्ताः सामान्यतो बन्धभेदाः, अथ मूलप्रकृतिबन्धस्थानानि तेषु च भूयस्काराल्पतरावस्थितावक्तव्यलक्षणान् बन्धभेदविशेषान्निरूपयन्नाह—

**मूलपयडीण अडसत्तछेगबंधेसु तिन्नि भूगारा । अप्पतरा तिय चउरो अवठिया न हु अवत्तवो ॥ २२ ॥**

टीका–मूलप्रकृतीनां ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तरायलक्षणानामष्टसप्तषडेकबन्धेषु त्रयो भूयःकाराः, त्रयोऽल्पतरा अबहुतराः, चत्वारोऽवस्थितबन्धा भवन्ति । 'न हु' नैवावक्तव्योऽवक्तव्यबन्धो भवतीत्यक्षरार्थः । भावार्थस्त्वयम्–इह मूलप्रकृतीनां चत्वारि बन्धस्थानानि भवन्ति, तद्यथा–अष्टविधबन्धः, सप्तविधबन्धः, षड्विधबन्धः, एकविधबन्धश्च । सर्वप्रकृतिसमुदायबन्धोऽष्टविधबन्धः, आयुर्वर्जसप्तप्रकृतिबन्धः सप्तविधबन्धः, आयुर्मोहनीयवर्जषट्प्रकृतिबन्धः षड्विधबन्धः, एकस्याः सातवेदनीयलक्षणायाः प्रकृतेर्बन्ध एकविधबन्धः । ततश्चाष्टविधसप्तविधषड्विधैकविधबन्धेषु त्रयो भूयःकारबन्धाः, त्रयोऽल्पतरबन्धाः, चत्वारोऽवस्थितबन्धाः, अवक्तव्यबन्धो नास्ति । तत्र भूयःकारादीनां स्वरूपमिदम्–तत्रैकविधाद्यल्पतरबन्धको भूत्वा यत्र पुनरपि षड्विधादिबहुबन्धको भवति स प्रथमसमये भूयस्कारबन्धः, यत्र त्वष्टविधादिबहुबन्धको भूत्वा पुनरपि सप्तविधाद्यल्पतरबन्धको भवति स प्रथमसमय एवाल्पतरबन्धः, यत्र तु

प्रथमसमये एकविधादिबन्धको भूत्वा द्वितीयसमयादिष्वपि तावन्मात्रमेव बध्नाति सोऽवस्थितबन्धः, यत्र तु सर्वथाऽबन्धको भूत्वा पुनः प्रतिपत्य बन्धको भवति स आद्यसमयेऽवक्तव्यबन्धोऽयं पुनरुत्तरप्रकृतीनामेव भवति, न मूलप्रकृतीनां, तासां सर्वथाऽबन्धकस्यायोगिकेवलिनः सिद्धस्य वा प्रतिपाताभावेन पुनर्बन्धाभावात् । अथ कथं त्रयो भूयस्कारबन्धास्त्रयोऽल्पतरबन्धाश्चत्वारोऽवस्थितबन्धा भवन्तीति चेदुच्यते—इहैकविधं बध्नोपशान्तमोहावस्थातः प्रतिपत्य सूक्ष्मसंपराये पुनः षड्विधं बध्नत आद्यसमये प्रथमो भूयस्कारबन्धः, द्वितीयादिसमयेषु त्ववस्थितबन्धः, ततोऽप्यधस्तात्प्रतिपत्य सप्तविधं बध्नत आद्यसमये द्वितीयो भूयस्कारबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्धः, आयुर्बन्धकाले त्वष्टविधबन्धं गतस्य प्रथमसमये एव तृतीयो भूयस्कारबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्ध इति त्रयो भूयस्काराः । तथायुर्बन्धकालेऽष्टविधं बध्वा पुनरप्यायुर्बन्धोपरमे सप्तविधं बध्नत आद्यसमये प्रथमोऽल्पतरबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्धः, सप्तविधादपि सूक्ष्मसंपरायावस्थायां षड्विधबन्धं गतस्य प्रथमसमये द्वितीयोऽल्पतरबन्धो (आयुषोऽबन्धकाले सप्तविधं बध्वा सूक्ष्मसंपराये षड्विधं बध्नतः द्वितीयोऽल्पतरबन्धः) द्वितीयादिसमयेषु त्ववस्थितबन्धः, षड्विधबन्धादप्युपशान्तमोहाद्यवस्थायामेकविधबन्धं गतस्याद्यसमये तृतीयोऽल्पतरबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्ध इति त्रयोऽल्पतरबन्धाः । तथा मूलप्रकृतिबन्धविषयाण्येकविधबन्धादीनि चत्वारि बन्धस्थानानि, तेषु चतुर्ष्वपि बन्धस्थानेष्ववस्थितबन्धोऽस्त्येवेति चत्वारोऽवस्थितबन्धाः, अवक्तव्यबन्धस्तु मूलप्रकृतिषु न संभवतीत्युक्तमेवेति ॥ २२ ॥

अथैतदेव भूयःकारादिस्वरूपं व्याचिख्यासुराह—

**एगादहिगे भूओ एगाईऊणगंमि अप्पतरो। तम्मत्तोऽवठियओ पढमे समए अवत्तव्वो ॥ २३ ॥**

टीका–एकादिभिरेकद्वित्र्यादिभिः प्रकृतिभिरधिके बन्धे 'भूय त्ति' भूयःकारनामबन्धो भवति, यथा एकां बध्ध्वा षड् बध्नाति, षड् बध्ध्वा सप्त बध्नाति, सप्त वा बध्ध्वाऽष्टौ बध्नातीति। तथा एकादिभिरेकद्वित्र्यादिभिः प्रकृतिभिरूने हीने बन्धेऽल्पतरोऽल्पतरनामबन्धो भवति, यथा अष्टौ बध्ध्वा सप्त बध्नाति, सप्त बध्ध्वा षड् बध्नाति, षड् बध्ध्वा एकां बध्नाति। तथा स एव भूयस्कारोऽल्पतरो वा द्वितीयादिसमयेषु तन्मात्रस्तावन्मात्रतया प्रवर्तमानोऽवस्थितबन्धो भवति। एते त्रयोऽपि प्रकारा मूलप्रकृतीनां संभवन्ति। तथा यः सर्वथाऽबन्धको भूत्वा भूयोऽपि बन्धकः संजायते तदा तस्य प्रथमसमयेऽवक्तव्यः संभवतीत्येतदेवाह–'पढमे समए अवत्तव्वो' इति स्पष्टं, न चायं मूलप्रकृतिषु संभवति, न हि मूलप्रकृतीनां सर्वासां बन्धव्यवच्छेदे सत्ययोगिकेवलिनः सिद्धस्य वा भूयोऽपि बन्धः संभवतीत्येषोऽवक्तव्यबन्ध उत्तरप्रकृतिष्वेव भवति, तं चोत्तरप्रकृतिषु यथास्थानं दर्शयिष्यामः ॥ २३ ॥

उक्ता मूलप्रकृतीरधिकृत्य भूयस्कारादिबन्धा अधुनोत्तरप्रकृतीः प्रतीत्य तान् प्रचिकटयिषुराह—

**नव छ चउ दंसे, दु दु ति दु मोहे, दु इगवीस सत्तरस। तेरस नव पण चउ ति दु इक्को नव अठ दस दुन्नि।**

---

१ सकारविसर्गयोरन्यतरेण नियतेन भाव्यं यतो भूयसोनव्ययत्वेऽतःकृकमीत्यादिनाऽव्ययत्वे कस्कादेराकृतिगणतया तदन्तर्गतताविवक्षणे भ्रातुष्पुत्रकस्कादय इतिसूत्रेण वा नित्य सकारभावात् अव्ययत्वे कस्काद्यनंतर्गतत्वे वा घोषप्राग्वृत्तितया सकारस्य नियतं विसर्गभावाच्च ।

टीका—'दसि त्ति' नामा सत्यजामेति न्यायात् पदैकदेशेऽपि पदसमुदायोपचार इति दर्शनावरणोत्तरप्रकृतीना त्रीणि बन्धस्थानानि, कथमित्याह—'नव छ चउ त्ति' नवविध बन्धस्थान, षड्विध बन्धस्थान, चतुर्विध बन्धस्थान चेति। तत्र निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानर्द्धिलक्षणं निद्रापंचक, चक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणकेवलदर्शनावरणचतुष्टयं चेत्येतन्नवविध, एतच्च मिथ्यादृष्टिसास्वादनगुणस्थानक यावद्बध्यते, तत· पर स्त्यानर्द्धित्रिक निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिरूप व्यवच्छिद्यते, अत· सम्यग्मिथ्यादृष्टिगुणस्थानकादिषु षड्विध बध्नत· प्रथमसमये प्रथमोऽल्पतरबन्ध , एतच्च षड्विधमपूर्वकरणप्रथमसप्तजाग यावद्बध्नाति, तत· पर निद्राप्रचलाबन्धव्यवच्छेदे सति शेषं चतुर्विध बध्नत आद्यसमये द्वितीयोऽल्पतरबन्धः, एतच्चतुर्विध सूक्ष्मसंपरायगुणस्थानक यावद्बध्यते, तत· कस्यचित्पुनरपि प्रतिपत्य षड्विध बध्नत प्रथमसमये प्रथमो जूयस्कारबन्धः, ततोऽपि प्रतिपत्य नवविधं बध्नत आद्यसमये द्वितीयो जूयस्कारबन्ध', अत्र च नवविधादिषु त्रिष्वपि बन्धस्थानेषु द्वितीयादिसमयेषु तदेव बध्नतोऽवस्थितबन्ध इति त्रयोऽवस्थितबन्धाः। यदा तूपशान्तमोहावस्थाया दर्शनावरणप्रकृतीना सर्वथाऽबन्धको जूत्वा पुनरद्धाक्षयेणैव प्रतिपत्य चतुर्विध बध्नाति तदा प्रथमसमयेऽवक्तव्यबन्धो जूयस्काराद्युचितलक्षणायोगात्, जूयस्कारादिजिर्विकल्पैर्वक्तुं न शक्यत इत्यवक्तव्य', द्वितीयादिसमयेषु त्वत्राप्यवस्थितबन्ध , यदा पुनरुपशान्तमोहावस्थायामेवायु क्षयेणानुत्तरसुरेषूत्पद्यते तदा तत्र प्रथमसमय एव षड्विध बध्नतो द्वितीयोऽवक्तव्यबन्धो द्वितीयादिसमयेषु त्ववस्थितबन्ध'। तदेवमत्र द्वौ जूयस्कारबन्धौ, द्वावल्पतरबन्धौ, अवस्थितबन्धास्तु गणनया षड् जवन्तोऽपि बन्धस्थानानि त्रीण्येवेति तद्भेदास्त्रय एव जवन्ति, अवक्तव्यबन्धौ द्वौ, इत्ये-

तदेवाह—'दु दु ति दु त्ति' द्वौ भूयस्कारबन्धौ, द्वावल्पतरबन्धौ, त्रयोऽवस्थितबन्धाः, द्वाववक्तव्यबन्धाविति, भावार्थः पूर्वोक्त एवेति। उक्ता दर्शनावरणोत्तरप्रकृतिषु भूयस्कारादिबन्धाः, इदानीमेतानेव मोहनीयोत्तरप्रकृतिषु विचिन्तयन्नाह—'मोहे दुइगवीस सत्तरसेत्यादि,' मोहे मोहनीयकर्मणि दश बन्धस्थानानि भवन्ति, तद्यथा—'दुइगवीस त्ति' विंशतिशब्दस्य प्रत्येकं संबन्धाद्द्वाविंशतिः, एकविंशतिः, सप्तदश, त्रयोदश, नव, पंच, चतस्रः, तिस्रः, द्वे, एका च। उक्तं च सप्ततिकायाम्—"बावीस इक्कवीसा सत्तरसा तेरसेव नव पंच। चउ तिग दुगं च एगं बंधट्ठाणाणि मोहस्स ॥ १ ॥" तत्र सम्यक्त्वसम्यग्मिथ्यात्वे बन्धे न भवतः "न य बंधे सम्ममीसाइं" इति वचनात्। न च त्रयाणां वेदानां युगपद्बन्धः, किं त्वेककालमेकस्यैव, हास्यरतियुगलारतिशोकयुगले अपि न युगपद्बन्धमायातः, किं त्वेकतरमेव युगलं। ततो मोहनीयस्योत्कर्षतः प्रभूतप्रकृतिबन्धो द्वाविंशतिः—मिथ्यात्वं, षोडश कषायाः, एको वेदः, अन्यतरयुगलं, भयं जुगुप्सेति। सा च मिथ्यादृष्टिगुणस्थानके प्राप्यते, ततः सास्वादनसम्यग्दृष्टिगुणस्थानके मिथ्यात्वबन्धाभावादेकविंशतिः। यद्यप्यत्र नपुंसकवेदस्यापि बन्धो न भवति तथापि तत्स्थाने स्त्रीवेदः पुरुषवेदो वा प्रक्षिप्यते, इत्येकविंशतेरेव बन्धः। ततो मिश्राविरतसम्यग्दृष्टिस्थानकयोरनन्तानुबन्धिनामपि बन्धाभावात्सप्तदश। ततोऽपि देशविरतिगुणस्थानकेऽप्रत्याख्यानावरणकषायाणां बन्धाभावात्त्रयोदश। ततोऽपि प्रमत्ताप्रमत्तापूर्वकरणगुणस्थानकेषु प्रत्याख्यानावरणकषायाणां बन्धाभावान्नव। यद्यप्यरतिशोकरूपं युगलं प्रमत्तगुणस्थानक एव व्यवच्छिन्नं तथापि तत्स्थाने हास्यरतियुगलं प्रक्षिप्यत इत्यप्रमत्तापूर्वक-

१ द्वाविंशतिः एकविंशतिः सप्तदश त्रयोदशैव नव पञ्च। चत्वारि त्रीणि द्वे चैकं बंधस्थानानि मोहस्य। २ न च बंधे सम्यक्त्वमिश्रे।

रणयोर्नवबन्धको न विरुध्यते । ततो हास्यरतिभयजुगुप्सा अपूर्वकरणचरमसमये च बन्धमाश्रित्य व्यवच्छिद्यन्त इत्यनिवृत्तिबादरसंपरायगुणस्थानके प्रथमभागे पञ्चाना बन्ध., द्वितीयभागे पुरुषवेदस्याभावाच्चतसृणा बन्धः, तृतीयभागे संज्वलनक्रोधस्य बन्धाभावात्तिसृणा बन्ध, चतुर्थभागे सञ्ज्वलनमानस्य बन्धाभावाद्द्वयोर्बन्ध., पञ्चमभागे सञ्ज्वलनमायाया अपि बन्धाभावादेकस्या. सञ्ज्वलनलोभप्रकृतेर्बन्ध., तत' पर बादरसंपरायाभावात्तस्या अपि न बन्ध' । उक्तानि मोहनीयस्य दश बन्धस्थानानि, अथैतेषु दशसु बन्धस्थानेषु भूयस्कारादीनाह—'नव अठ्ठ दस दुन्निसि नव भूयस्कारबन्धा, अष्टावल्पतरबन्धा, दशावस्थितबन्धा, द्वाववक्तव्यबन्धौ । इयमत्र भावना—एकविधबन्धात्प्रतिपत्योक्तस्वरूपं द्विविध बध्नत आद्यसमये प्रथमो भूयस्कारबन्ध, द्विविधात्त्रिविधबन्धं गतस्य द्वितीयो भूयस्कारबन्ध', त्रिविधाच्चतुर्विधबन्ध गतस्य तृतीयो भूयस्कारबन्ध, चतुर्विधात्पञ्चविधबन्धं गतस्य चतुर्थो भूयस्कारबन्ध', पञ्चविधान्नवविधबन्धं गतस्य पञ्चमो भूयस्कारबन्ध', नवविधात्त्रयोदशविधबन्ध गतस्य षष्ठो भूयस्कारबन्ध', त्रयोदशविधात्सप्तदशविधबन्ध गतस्य सप्तमो भूयस्कारबन्धः, सप्तदशविधादेकविंशतिविधबन्ध गतस्याष्टमो भूयस्कारबन्ध, एकविंशतिविधाद्द्वाविंशतिविधबन्ध गतस्य नवमो भूयस्कारबन्ध । अल्पतराः पुनरेवमष्टौ भवन्ति, तथाहि—द्वाविंशतिविधबन्धात्सप्तदशविधबन्ध गतस्य प्रथमोऽल्पतरबन्ध', सप्तदशविधात्त्रयोदशविधबन्ध गतस्य द्वितीयोऽल्पतरबन्ध, त्रयोदशविधबन्धान्नवविधबन्धं गतस्य तृतीयोऽल्पतरबन्ध., नवविधबन्धात्पंचविधबन्ध गतस्य चतुर्थोऽल्पतरबन्ध, पञ्चविधबन्धाच्चतुर्विधबन्ध गतस्य पंचमोऽल्पतरबन्ध, चतुर्विधबन्धात्त्रिविधबन्ध गतस्य षष्ठोऽल्पतरबन्धः, त्रिवि-

धबन्धाद्द्विविधबन्धं गतस्य सप्तमोऽल्पतरबन्धः, द्विविधबन्धादेकविधबन्धं गतस्याष्टमोऽल्पतरबन्धः । ननु द्वा-
विंशतिबन्धादेकविंशतिगमने नवमोऽल्पतरबन्धः कस्मान्नोक्त इति चेन्नैवं, असंभवादेव, तथाहि–द्वाविंशतिं मि-
थ्यादृष्टिरेव बध्नाति, एकविंशतिं तु सासादनसम्यग्दृष्टिरेवेत्युक्तम् । न च मिथ्यादृष्टिरनन्तरभावेन सास्वादनत्वं व्रजति,
येन द्वाविंशतेरेकविंशतिगमनं स्यात्, किं तु उपशमसम्यग्दृष्टिरेव सासादनभावं प्रतिपद्यते, तस्माद्द्वाविंशतेः सप्तदश-
बन्धगमनमेव भवतीत्यष्टावेवाल्पतरबन्धाः । तथा दशस्वपि मोहनीयबन्धस्थानेषु द्वितीयादिसमयेष्ववस्थितबन्धो ल-
भ्यत इति अवस्थितबन्धा दश । अवक्तव्यबन्धौ पुनरेवं—यदा ह्युपशान्ते मोहनीयस्याबन्धको भूत्वोपशान्ताद्धाक्षयेण
प्रतिपत्य पुनरेकं संज्वलनलोभं बध्नाति तदाद्यसमये प्रथमोऽवक्तव्यबन्धः, यदि चोपशान्तमोहावस्थायामेवायुःक्षयेण
मृत्वाऽनुत्तरसुरेषु समुत्पद्यते तदा प्रथमसमय एव सप्तदशविधबन्धं बध्नतो द्वितीयोऽवक्तव्यबन्धः । तदेवं मोहनीये नव
भूयस्कारबन्धाः, अष्टावल्पतरबन्धाः, दशावस्थितबन्धाः, द्वाववक्तव्यबन्धाविति भावितम् । उक्तं च—"[1]नव भूअगार-
बन्धा अट्ठेव हवंति अप्पतरबंधा । दो अवत्तगबन्धा अवट्ठिया दस उ मोहंमि त्ति ॥ १ ॥" ॥ २४ ॥

संप्रति नामकर्मप्रकृतिषु भूयस्कारादिबन्धान् प्रतिपिपादयिषुराह—

**तिपणछअट्ठनवहिया वीसा तीसेगतीस इग नामे । छस्सगअट्ठतिबंधा सेसेसु य ठाणमिक्किक्कं ॥२५॥**

टीका—'नामि त्ति' नामकर्मणि बन्धस्थानान्यष्टौ भवन्ति, तद्यथा—विंशतिशब्दस्य प्रत्येकं सबन्धात्त्रयोविंशतिः, पंच-

---

१ नव भूयस्कारबंधा अष्टैव च भवन्त्यल्पतरबंधाः । द्वाववक्तव्यबंधौ अवस्थिता दशैव मोह इति ।

विंशति , पड्विंशति , अष्टाविंशति , एकोनत्रिंशत् , त्रिंशत् , एकत्रिंशत् , एका चेति । उक्तं च सप्ततिकायाम्–"तेवीसं पन्नवीसा छव्वीसा अट्ठवीस गुणतीसा । तीसेगतीसमेक्कं बंधट्ठाणाणि नामस्स ॥ १ ॥" तत्र वर्णचतुष्कतैजसकार्मणागुरुलघुनिर्माणोपघातमित्येता नव प्रकृतयो ध्रुवबन्धिन्यः सर्वैरपि चतुर्गतिकजीवैरप्राप्तविशिष्टगुणैः प्रतिसमयमवश्यं बध्यमानत्वात् । तथा तिर्यग्गति , तिर्यगानुपूर्वी, एकेन्द्रियजाति , औदारिकशरीर, हुंडकसंस्थानं, स्थावर, बादरसूक्ष्मयोरन्यतरत्, अस्थिरनाम, अशुभनाम, दुर्भगनाम, अनादेयनाम, अयशःकीर्तिनामेत्येताश्चतुर्दश प्रकृतयो ध्रुवबन्धिनीभिर्नवभिः सह त्रयोविंशतिरित्येतासां त्रयोविंशतिप्रकृतीनां समुदाय एकं बन्धस्थानमेवमुत्तरत्रापि भावनीयम् । एतां च त्रयोविंशतिमेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपंचेन्द्रियाणामन्यतरो मिथ्यादृष्टिरेवापर्याप्तैकेन्द्रियप्रायोग्यां बध्नाति । पंचविंशतिं पुनः पर्याप्तैकेन्द्रियप्रायोग्यां तत्रोत्पादयोग्या नानाजीवा बध्नन्ति, तत्र च त्रयोविंशतिः पूर्वोक्तैव पराघातोच्छ्वासाभ्यां सह पंचविंशतिर्भवति, नवरमपर्याप्तकस्थाने पर्याप्तकं, स्थिरास्थिरशुभाशुभयशःकीर्तीनां परावृत्तिर्वाच्या, एवमेषा पंचविंशतिरन्येषामपि विकलेन्द्रियादिजीवानां प्रायोग्या नानाभङ्गैः संभवति, केवलं ग्रन्थविस्तरभयान्नेहोच्यते । सप्ततिकाटीकायां तद्विस्तरोऽन्वेषणीयः । एवमुत्तरेष्वपि बन्धस्थानेषु । गमनिकामात्रमेवाभिधास्यत इति । एषैव पंचविंशतिरातपोद्योतयोरेकतरप्रक्षेपे षड्विंशतिर्भवति सा च पर्याप्तैकेन्द्रियप्रायोग्यैव बध्यते नान्यप्रायोग्या, बन्धकाश्च तत्रोत्पादयोग्या जीवा द्रष्टव्याः । अष्टाविंशतिं तु देवगतिप्रायोग्यां तिर्यङ्मनुष्यास्तत्प्रायोग्यविशुद्धा बध्नन्ति, तद्यथा–देवगतिः, देवानु-

---

१ त्रयोविंशतिः पंचविंशतिः षड्विंशतिः अष्टाविंशतिः एकोनत्रिंशत् । त्रिंशदेकत्रिंशदेकं ( च ) बंधस्थानानि नाम्नः ।

पूर्वी, पंचेन्द्रियजातिः, वैक्रियशरीरं, वैक्रियांगोपांगं, समचतुरस्रसंस्थानं, उच्छ्वासनाम, पराघातनाम, प्रशस्तविहायोगतिनाम, त्रसनाम, बादरनाम, पर्याप्तनाम, प्रत्येकनाम, स्थिरास्थिरयोः शुभाशुभयोर्यशःकीर्त्ययशःकीर्त्योः पृथगेकैकमन्यतरच्चाच्यं, सुभगनाम, सुस्वरनाम, आदेयनाम, वर्णचतुष्कतैजसकार्मणागुरुलघुनिर्माणोपघातमित्यष्टाविंशतिर्भवति । एषा च मिथ्यादृष्टिसास्वादनमिश्राविरतानां देवगतिप्रायोग्यं बध्नतामेवावसेया । एषैवाष्टाविंशतिस्तीर्थकरनामसहिता एकोनत्रिंशत्तां चाविरतसम्यग्दर्शनिनो मनुष्या एव बद्धतीर्थकरनामानो देवगतिप्रायोग्यां बध्नन्ति, यदि वा पर्याप्तपंचेन्द्रियतिर्यक्प्रायोग्यापीयमेकोनत्रिंशद्बध्यते । तद्यथा—तिर्यग्गतिः, तिर्यगानुपूर्वी, पंचेन्द्रियजातिः, औदारिकशरीरं, औदारिकांगोपांगं, तैजसकार्मणे, षण्णां संस्थानानामेकतमत्संस्थानं, षण्णां संहननानामेकतमत्संहननं, वर्णचतुष्टयं, अगुरुलघु, उपघातं, उच्छ्वासनाम, प्रशस्ताप्रशस्तविहायोगत्योरेकतरा, त्रसनाम, बादरनाम, पर्याप्तकनाम, प्रत्येकनाम, स्थिरास्थिरयोरेकतरं, शुभाशुभयोरेकतरं, सुभगदुर्भगयोरेकतरं, सुखदुःखयोरेकतरं, आदेयानादेययोरेकतरं, यशःकीर्त्ययशःकीर्त्योरेकतरं, निर्माणमिति । त्रिंशत्पुनरियम्—देवगतिः, देवानुपूर्वी, पंचेन्द्रियजातिः, वैक्रियशरीरं, वैक्रियांगोपांगं, आहारकशरीरं, आहारकांगोपांगं, तैजसकार्मणे, समचतुरस्रसंस्थानं, वर्णचतुष्कं, अगुरुलघु, उपघातं, पराघातं, उच्छ्वासं, प्रशस्तविहायोगतिः, त्रसं, बादरं, पर्याप्तकं, प्रत्येकं, स्थिरं, शुभं, सुभगं, सुस्वरं, आदेयं, यशःकीर्तिनाम, निर्माणनामेति । इदं च देवगतिप्रायोग्यं बध्नतोऽप्रमत्तसंयतस्यापूर्वकरणस्य वा वेदितव्यं, अथवा कश्चिद्बद्धतीर्थकरनामकर्मा दिवि समुत्पन्नः पुनरपि मनुष्येषु समुत्पत्स्यत इति मनुष्यगतिप्रायोग्यां तीर्थकरनामसहितां त्रिंशतं देवो बध्नाति, तद्यथा—मनुष्यगतिमनुष्यानुपूर्व्यौ,

पंचेन्द्रियजाति, औदारिकशरीर, औदारिकांगोपांग, समचतुरस्रसंस्थान, वज्रऋषभनाराचसंहनन, पराघातं, उच्छ्वासं, प्रशस्तविहायोगति, त्रस, बादरं, पर्याप्त, प्रत्येक, स्थिरास्थिरयोरेकतर, शुभाशुभयोरेकतर, यशःकीर्त्ययशःकीर्त्योरेकतरं, सुभग, सुस्वर, आदेय, तीर्थंकरनाम, वर्णचतुष्क, तैजसकार्मणागुरुलघुनिर्माणोपघातनामेति। एकत्रिंशत्पुनरेवम्—देवगतिदेवानुपूर्व्यौ, पंचेन्द्रियजाति, वैक्रियशरीर, वैक्रियांगोपांग, आहारकशरीर, आहारकांगोपांग, तैजसकार्मणे, समचतुरस्रसंस्थान, वर्णचतुष्क, अगुरुलघु, उपघात, पराघात, उच्छ्वासं, प्रशस्तविहायोगति, त्रसं, बादर, पर्याप्त, प्रत्येक, स्थिर, शुभ, सुभग, सुस्वर, आदेय, यशःकीर्तिनाम, निर्माण, तीर्थंकरनामेति। ता च प्रमत्तयतिः कियन्तमपि च भाग यावदपूर्वकरणश्च देवगतिप्रायोग्यामेव बध्नाति। एकविधबन्धं तु यशःकीर्तिस्वरूपमपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपराया स्वरूपेणैव बध्नन्ति, न तु कस्यचित्प्रायोग्य, देवगतिप्रायोग्यस्यापि बन्धस्यापूर्वकरणमध्ये व्यवच्छिन्नत्वात्। तदेव स्वरूपतोऽष्टावप्युक्तानि नामकर्मणो बन्धस्थानानि, साम्प्रतमेतेषु प्रकृता भूयस्कारादिबन्धा भाव्यन्ते—'छस्सग अट्ठ तिगं बंधन्ति' बन्धशब्दो भूयस्कारादिषु योजनीयस्ततो भूयस्कारबन्धा षट्, अल्पतरबन्धा सप्त, अवस्थितबन्धा अष्टौ, अवक्तव्यबन्धास्त्रयः इति। तत्र भूयस्कारबन्धाः एवम्—कस्यचिदपर्याप्तैकेन्द्रियप्रायोग्या त्रयोविंशति बद्ध्वा तत्प्रायोग्यविशुद्धिवशात् पंचविंशतिविधबन्धं गतस्याद्यसमये प्रथमो भूयस्कारबन्धः, ततोऽपि पंचविंशतिबन्धात्तत्प्रायोग्यविशुद्धिवशात् षड्विंशतिबन्धं गतस्य प्रथमसमये द्वितीयो भूयस्कारबन्ध, षड्विंशतिविधबन्धादष्टाविंशतिबन्धं गतस्य प्रथमसमये तृतीयो भूयस्कारबन्ध, अष्टाविंशतिबन्धादेकोनत्रिंशद्बन्ध गतस्य प्रथमसमये चतुर्थो भूयस्कारबन्ध, एकोनत्रिंशद्बन्धात्त्रिंशत बध्नत आद्यसमये पंचमो

भूयस्कारबन्धः, आहारकद्विकसहितां त्रिंशतं बद्ध्वा एकत्रिंशद्बन्धं गतस्याद्यसमये षष्ठो भूयस्कारबन्धः, अथवा यशः-
कीर्तिलक्षणमेकविधबन्धं बद्ध्वा श्रेणेर्निपततः पुनरपूर्वकरणे एकत्रिंशदादिबध्नत आद्यसमये षष्ठ एव भूयस्कारबन्धो न
सप्तमः, एकत्रिंशल्लक्षणस्थानकस्योभयथाप्येकत्वादिति । अल्पतरबन्धाः सप्त पुनरेवम्—अपूर्वकरणे देवगतिप्रायोग्यामष्टा-
विंशतिमेकोनत्रिंशतं वा त्रिंशतं वा एकत्रिंशतं वा बद्ध्वा तद्बन्धव्यवच्छेदे एकविधबन्धं गतस्याद्यसमये प्रथमोऽल्पतरबन्धः,
एकत्रिंशद्बन्धाच्च त्रिंशद्बन्धं गतस्याद्यसमये द्वितीयोऽल्पतरबन्धः, एतच्च कथं संभवतीत्युच्यते—इह कश्चिदाहारकद्विक-
तीर्थकरनामसहितां पूर्वाभिहितामेकत्रिंशतं बद्ध्वा दिवि समुत्पन्नस्तस्य प्रथमसमय एव मनुष्यगतिप्रायोग्यां पूर्वोक्तामेव
त्रिंशतं बध्नत एकत्रिंशतस्त्रिंशति गमनं संभवति, ततस्तस्यैव दिवश्च्युत्वा मनुष्येषु समुत्पन्नस्य पुनरपि देवप्रायोग्यां
तीर्थंकरनामसहितां पूर्वाभिहितामेवैकोनत्रिंशतं बध्नतः प्रथमसमये तृतीयोऽल्पतरबन्धः, यदा तु तिर्यङ्मनुष्याणामन्य-
तरस्तिर्यक्प्रायोग्यां पूर्वोक्तामेकोनत्रिंशतं बद्ध्वा तथाविधविशुद्धिवशाद्देवगतिप्रायोग्यामष्टाविंशतिं बध्नाति तदा प्रथमस-
मये चतुर्थोऽल्पतरबन्धः, अष्टाविंशतेश्च तथाविधसंक्लेशवशादेकेन्द्रियप्रायोग्यषड्विंशतिबन्धं गतस्याद्यसमये पंचमोऽल्प-
तरबन्धः, षड्विंशतिबन्धात् पंचविंशतिबन्धं गतस्याद्यसमये षष्ठोऽल्पतरबन्धः, पंचविंशतिबन्धादपि त्रयोविंशतिबन्धं
गतस्याद्यसमये सप्तमोऽल्पतरबन्धः । एतेष्वष्टस्वपि बन्धस्थानेषु द्वितीयादिसमयेषु सर्वत्रावस्थितबन्धो लभ्यत इत्यव-
स्थितबन्धा अष्टौ । अथावक्तव्यकबन्धास्त्रयः पुनरेवम्—उपशान्तमोहावस्थायां नामकर्मणः सर्वथाऽबन्धको भूत्वा इहै-
वोपशान्ताद्धाक्षयेण प्रतिपत्य यदा पुनरप्येकविधं बध्नाति तदाद्यसमये प्रथमोऽवक्तव्यबन्धः, अथवोपशान्तमोहावस्था-

यामेवायुःक्षयेणानुत्तरसुरेषु समुत्पद्यते, उपात्ततीर्थंकरनामा च भवति, तदा तस्य प्रथमसमय एव मनुष्यगतिप्रायोग्या पूर्वोक्तरूपा तीर्थंकरसहिता त्रिंशतं बध्नतो द्वितीयोऽवक्तव्यबन्धः, अथवाऽनुपात्ततीर्थंकरनामा यदा भवति तदा तस्य तीर्थंकरनामरहिता तत्रैव मनुष्यगतिप्रायोग्यामेकोनत्रिंशत बध्नतः प्रथमसमये तृतीयोऽवक्तव्यबन्ध । तदेव भाविता नामकर्मणि षड् भूयस्कारबन्धा , सप्ताल्पतरबन्धा , अष्टाववस्थितबन्धा , त्रयोऽवक्तव्यबन्धा । उक्तं च–"[1]छ्न्भूयगारबन्धा सत्तेव हवति अप्पतरबधा । तिन्नवत्तगबधा अवट्ठिया अट्ठ नामंमि ॥ १ ॥" उक्ता नामकर्माश्रित्य भूयस्कारादिबन्धाः, साम्प्रत शेषकर्माण्याश्रित्य तानाह–'सेसेसु ठाणमिक्कि ति' शेषेषु भणितोद्धरितेषु ज्ञानावरणवेदनीयायुर्गोत्रान्तरायलक्षणेषु पंचसु कर्मसु स्थान बन्धस्थानमेकैकमेव भवति । तत्राद्यकर्मणि मतिज्ञानावरणाद्युत्तरप्रकृतिपचकस्य समुदितमेवैक बन्धस्थान मिथ्यादृष्टेरारभ्य सूक्ष्मसपराय यावद्भवति, एवमन्तरायपचकस्यापि वाच्य । वेदनीयस्याप्येकमेव बन्धस्थान सातमसात वा । आयुषश्चतुर्णामायुषामन्यतरैकायुष्कलक्षणमेकमेव बन्धस्थानं । गोत्रस्य तु नीचैर्गोत्रमुच्चैर्गोत्रं वा एक बन्धस्थान । अत्र च सूचकत्वात्सूत्रस्यैतत्स्वयमेव द्रष्टव्यम् । यथात्र कर्मपचकेऽपि भूयस्काराल्पतरबन्धौ न सम्भवत, तल्लक्षणायोगात् । अवक्तव्यबन्धावस्थितबन्धौ तु वेदनीयवर्जकर्मचतुष्टये सम्भवत , तथाहि–ज्ञानावरणान्तरायगोत्राणामुपशान्तमोहावस्थाया सर्वथाऽबन्धको भूत्वा प्रतिपत्य यदा पुनस्तान्येव बध्नाति तदा प्रथमसमयेऽवक्तव्यबन्ध', आयुषस्तु यदा त्रिभागादिसमयादौ बन्धकस्तदा प्रथमसमयेऽवक्तव्यबन्ध , द्वितीयादिसमयेषु त्ववस्थितबन्ध' । वेदनीयद्विकस्य

---

१ षट् भूयस्कारबधा सप्तैव भवन्त्यल्पतरबन्धा । त्रयोऽवक्तव्यबन्धा अवस्थिता अष्ट नाम्नि ।

त्ववस्थितबन्धोऽस्ति, प्रभूतकालमवस्थितत्वेन बध्यमानत्वात्, अवक्तव्यबन्धस्तु न संभवति, स हि सर्वथाऽबन्धको भूत्वा यदा प्रतिपत्य पुनस्तदेव बध्नाति तदा संभवति, न चैतद्वेदनीयेऽस्ति, तस्य सर्वथाऽबन्धकत्वमयोगिकेवलिचरमसमय एव, न चायोगिकेवलिनो भगवतो भूयो बन्धोस्तीति । उक्तं च–"नाणावरणे तह आउयंमि गोयंमि अंतराए य । ठिय अव्वत्तग बंधा अवठिया वेयणिज्जंमि ॥ १ ॥" इति ॥ २५ ॥

तदेवं भूयस्कारादिप्रकारैश्चिंतितः प्रकृतिबन्धः, सांप्रतं स एव स्वामित्वद्वारेण चिन्तनीयः, स च गुणस्थानकान्याश्रित्य लघुकर्मस्तवटीकायां, मार्गणास्थानकान्याश्रित्य पुनः स्वोपज्ञबन्धस्वामित्वटीकायां विस्तरेण निरूपितस्तत एवावधारणीय इति प्रकृतिबन्धः समासः ।

इदानीं स्थितिबन्धं व्याचिख्यासुः प्रथमं मूलप्रकृतीनामुत्कृष्टेतरं तावदाह—

**वीसयरकोडिकोडी नामे गोए य सत्तरी मोहे । तीसयर चउसु उदही निरयसुराउंमि तित्तीसा ॥२६॥**

टीका—अतिमहत्त्वाद्धदधिवत्तरीतुमचिरात्पारं नेतुं न शक्यन्त इत्यतराणि सागरोपमाणि तेषां कोटिकोटयोऽतरकोटिकोटयः । कियन्त्य इत्याह—विंशतिर्विंशतिसंख्या भवन्ति । क्वेत्याह 'नामे त्ति' नामकर्मणि, गोत्रे चोत्कृष्टा स्थितिरुत्तरगाथायां जघन्यस्थितिर्भणिष्यमाणत्वादिहोत्कृष्टा स्थितिर्लभ्यते । ततोऽयमर्थः—नामकर्मणि गोत्रे चोत्कृष्टा स्थितिर्विंशतिकोटिकोटयः सागरोपमाणाम् । सप्तति कोटीकोटयः सागरोपमाणां मोहे मोहनीये । इतरेषु आयुषो भणिष्यमाणत्वेन

१ ज्ञानावरणीये तथायुषि गोत्रेंतराये च । स्थितोऽवक्तव्यश्च बंधोवस्थितो वेदनीये ।

जणितोद्धरितेषु ज्ञानावरणदर्शनावरणवेदनीयान्तरायलक्षणेषु चतुर्षु कर्मसु त्रिंशत्कोटीकोटयः सागरोपमाणि प्रत्येकमुत्कृष्टा स्थितिर्जवति । आयु शब्दस्य प्रत्येक सबन्धात् 'निरय त्ति' निरयायुषि सुरायुषि चोत्कृष्टा स्थितिस्त्रयस्त्रिंशदुदधय साग-रोपमाणि जवन्तीति ॥ २६ ॥

**मुत्तु अकसाय ठिइं वार मुहुत्ता जहस्र वेयणिए । अठ ठ नामगोयेसु सेसएसुं मुहुत्तंतो ॥ २७ ॥**

टीका–इह वेदनीयकर्मणो हि स्थितिर्द्विधा सञ्जवति, अकषायिण' प्रतीत्य सकषायिणश्च, तत्राकषायिणो वेदनीयस्य स्थितिर्द्विसमयस्थितिका, यतस्तत्कर्म प्रथमसमये बद्ध द्वितीयसमये वेदित तृतीयसमयेऽकर्मतामनु जवति, सा चेह नाधिक्रि-यते, सकषायिस्थितिबन्धस्यैवेहाधिकृतत्वात्।अत उक्त–मुक्त्वा त्यक्त्वाऽकषायिणामुपशान्तमोहक्षीणमोहसयोगिकेवलिना जघन्या वेदनीयस्थितिं । तर्हि सकषायिणा जघन्या किंप्रमाणेत्याह–द्वादशमुहूर्ता चतुर्विंशतिघटिका जघन्या लघीयसी वेदनीये तृतीये कर्मणि स्थितिर्जवतीति । 'अठ ठ नामगोएसु त्ति' मुहूर्तशब्दस्यात्रापि संबन्धात्प्रत्येकमष्टावष्टौ मुहूर्ता नामगोत्रयोर्जघन्या स्थितिर्जवति । शेषेषु जणितोद्धरितेषु ज्ञानावरणदर्शनावरणमोहनीयायुरन्तरायलक्षणेषु पंचसु कर्मसु 'मुहुत्ततो त्ति' मीयत इति मुहूर्तः, मुहुरियर्तीति वा मुहूर्त, पृषोदरादित्वादिष्टरूपसिद्धिः । घटिकाद्वयप्रमाण कालो मुहूर्तस्यान्तर्मध्य मुहूर्तान्तः अन्तर्मुहूर्तप्रमाणा जघन्या स्थितिर्जवति । इह च 'सेसएसु' इत्यत्र ककार' स्वार्थिक इति ।

१ पुतपित्तनिमित्तोतशुक्रतिक्तलिप्तसूरतमुहूर्त्तादय ( २०४ ) वृत्तिश्चात्र हूर्छेर्मुश्चधात्वादिरिति वचनात् किंत्ते निपातित सूरिपादै शब्दानुशासनेऽय प्रमाण चात्र वैयाकरणा पक्षस्यास्यापि सर्वथा युक्त्यनतिरेकित्वात्

तथेहाबाधाकालः कर्मणोऽनुदयलक्षणो य उत्तराः प्रकृतीरुद्दिश्य एव 'इयावाह वाससय त्ति' गाथावयवेन वक्ष्यते । स एव तदनुसारतो मूलप्रकृतिष्वपि द्रष्टव्यः, तत्र ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां त्रीणि वर्षसहस्राणि अबाधा द्रष्टव्या, बद्धमपीत्थमेतत्कर्म वर्षसहस्रत्रयं यावद्विपाकोदयलक्षणं बाधां न करोतीत्यर्थः । तथा च वर्षसहस्रत्रयलक्षणयाऽबाधयोना हीना कर्मस्थितिः कर्मनिषेको द्रष्टव्यः, निषेको नाम प्रथमसमये बहु द्वितीयसमये हीनं तृतीयसमये हीनतरं ततो हीनतमं कर्मदलिकं रच्यते यत्र स एवंभूतः कर्मदलिकरचनाविशेष उच्यते । अबाधां विहाय तत ऊर्ध्वं वेदनार्थं कर्मनिषेको भवतीति भावना स्थापना । मोहनीयस्य सप्त वर्षसहस्राण्यबाधा, अबाधोना च कर्मस्थितिः कर्मनिषेको निगदितलक्षणो द्रष्टव्यः । नामगोत्रयोर्द्वे द्वे वर्षसहस्रे अबाधा, अबाधोना च कर्मस्थितिः कर्मनिषेकः । आयुष्कस्य तु नरकायुःसुरायुर्लक्षणस्योत्कृष्टा स्थितिस्त्रयस्त्रिंशदतराणि पूर्वकोटीत्रिभागोऽबाधा, अबाधोना च कर्मस्थितिः कर्मनिषेकः । अत्र च सूत्रेऽबाधां प्रपात्य 'निरयसुराउंमि तित्तीसा' इति निषेककाल एवोक्तः । अत एव श्रीशिवशर्मसूरिपादैः शतके—"तित्तीसुदही आउंमि केवला होइ एवमुक्कोसा" इत्यत्र केवला बाधारहितेत्युक्तं । तथा मूलप्रकृतिस्थितिबन्धप्रस्तावेऽपि 'निरयसुराउम्मि तित्तीसा' इति यदुत्तरप्रकृतिस्थितिप्रतिपादनं तद्ग्रंथलाघवार्थमिति परिभावनीयम् । जघन्या त्वबाधा सर्वासामप्यन्तर्मुहूर्तात्मिकेति ॥ २१ ॥

---

१ त्रयस्त्रिंशदुदधय आयुष्के केवला भवत्येवमुत्कृष्टास्थितिरिति शेषः ।

प्ररूपिता मूलप्रकृतीनामुत्कृष्टेतरभेदा स्थिति , साम्प्रतमुत्तरप्रकृतीनामुत्कृष्टा स्थितिं प्रतिपादयन्नाह–

विग्घावरणअसाए तीसं,अट्ठार सुहुमविगलतिगे। पढमागिइसंघयणे दस द(दु)सुवरिमेसु दुगवुड्ढी २८

टीका—"नपुकुखगइसासचउग" इति गाथोक्तकोटाकोटीशब्दस्य सर्वत्रसम्बन्धादेव प्रयोजनीय–विघ्नानि च दान-लाभभोगोपभोगवीर्यान्तरायाख्यानि पञ्च, आवरणानि च ज्ञानावरणपञ्चकदर्शनावरणनवकलक्षणानि चतुर्दश, असातं चासातवेदनीयं समाहारद्वन्द्वे विघ्नावरणासाते। विघ्नेषु पञ्चसु, ज्ञानावरणेषु पञ्चसु, दर्शनावरणेषु नवसु, असातवेदनीये च त्रिंशत्कोटीकोट्य उत्कृष्टा स्थिति सागरोपमाणामिति सर्वत्र योज्यम्। अष्टादशकोटीकोट्य उत्कृष्टा स्थितिर्भवति, क्वे-त्याह–त्रिकशब्दस्य प्रत्येक संबन्धात्सूक्ष्मत्रिके सूक्ष्मापर्याप्तकसाधारणरूपे, विकलत्रिके द्वीन्द्रियत्रीन्द्रियचतुरिंद्रियलक्षणे। तथा प्रथमशब्दस्य प्रत्येक योगात्प्रथमाकृतौ प्रथमसंस्थाने समचतुरस्रनामनि, प्रथमसंहनने वज्रऋषभनाराचाभिधे दशकोटी-कोट्य उत्कृष्टा स्थितिर्भवति 'उपरिमेसु दुगवुड्ढि त्ति' उपरितनेषु न्यग्रोधपरिमण्डलादिसंस्थानेषु, ऋषभनाराचादिसंहननेषु च द्विकवृद्धि सागरोपमकोटाकोटीदशकोपरि द्विकवृद्धिर्द्रष्टव्या। तद्यथा–न्यग्रोधपरिमण्डलसंस्थानर्षभनाराचसंहननयोर्द्वा-दशसागरोपमकोटीकोट्य उत्कृष्टा स्थिति। सादिसंस्थाननाराचसंहननयोश्चतुर्दशसागरोपमकोटीकोट्य उत्कृष्टास्थिति। कुब्जसंस्थानार्धनाराचसंहननयो षोडशसागरोपमकोटीकोट्य उत्कृष्टा स्थिति। वामनसंस्थानकीलिकासंहननयोरष्टादशसा-गरोपमकोटीकोट्य उत्कृष्टा स्थिति। हुण्डसंस्थानसेवार्तसंहननयोर्विंशतिसागरोपमकोटीकोट्य उत्कृष्टास्थितिरिति ॥२८॥

चालीस कसाएसु, मिउलहुनिद्धुण्हसुरहिसियमहुरे। दस,दोसड्ढसमहिया ते हालिद्दविलाईणं ॥ २९ ॥

टीका–चत्वारिंशत्सागरोपमकोटीकोट्यः कषायेष्वनन्तानुबन्धिचतुष्काप्रत्याख्यानावरणचतुष्कप्रत्याख्यानावरणचतुष्कसंज्वलनचतुष्कलक्षणेषु षोडशसूत्कृष्टा स्थितिः । मृदुलघुस्निग्धोष्णानां चतुर्णां शुभानां स्पर्शानां, सुरभिगन्धस्य, 'सिय त्ति' सितवर्णस्य, मधुरस्य च, 'दस त्ति' दशसागरोपमकोटाकोट्य उत्कृष्टा स्थितिः । तथा त एव दश द्विकसार्धसमधिकाः सन्तो हारिद्राम्लादीनां पश्चानुपूर्व्या उत्कृष्टा स्थितिर्वेदितव्या । इयमत्र भावना–हारिद्रवर्णस्याम्लरसस्य चार्धत्रयोदशसागरोपमकोटाकोटय उत्कृष्टा स्थितिः, लोहितवर्णकषायरसयोः पंचदशसागरोपमकोटाकोटय उत्कृष्टा स्थितिः, नीलवर्णकटुकरसयोः सार्धसप्तदशसागरोपमकोटाकोट्य उत्कृष्टा स्थितिः, कृष्णवर्णतिक्तरसयोर्विंशतिसागरोपमकोटाकोटय उत्कृष्टा स्थितिर्भवति । यद्यपि वर्णगन्धरसस्पर्शचतुष्कमेवाविवक्षितभेदं बन्धेऽधिक्रियते भेदरहितस्यैव च तस्य कर्मप्रकृत्यादिषु विंशतिसागरोपमकोटाकोटीरूपा स्थितिर्निरूपिता, तथापि वर्णादिचतुष्कभेदानां विंशतेरपि पृथक् पृथक् स्थितिः पंचसंग्रहेऽभिहिताऽतोऽस्माभिरपि तथैवाभिहिता । बन्धं तु प्रतीत्य वर्णादिचतुष्कमेवाविशेषितं गणनीयमिति॥२९॥

**दस सुह विहगइउच्चे सुरदुग थिरछक्क पुरिसरइहासे । मिच्छे सत्तरि मणुदुग इत्थी साए सु पन्नरस ॥३०॥**

टीका–दश सागरोपमकोटीकोट्य उत्कृष्टा स्थितिर्भवति । क्वेत्याह–शुभविहायोगतौ प्रशस्तविहायोगतौ, उच्चैर्गोत्रे, सुरद्विके सुरगतिसुरानुपूर्वीलक्षणे, स्थिरषट्के स्थिरशुभसुभगसुस्वरादेययशःकीर्तिसंज्ञिते, पुरुषे पुरुषवेदे, रतौ, हास्ये, तथा मिथ्यात्वे, सप्ततिसागरोपमकोटीकोट्य उत्कृष्टा स्थितिः । तथा मनुजद्विके मनुजगतिमनुजानुपूर्वीस्वरूपे, स्त्रीवेदे, साते सातवेदनीये, पंचदशसागरोपमकोटीकोटय उत्कृष्टा स्थितिः ॥ ३० ॥

नयकुछअरइसोए विउविति रिउरलनिरयडुगनीए।तेयपण अथिरछके तसचउ थावर इग पणिंदी॥३१॥
नपु-कुखगइ-सासचउ-गुरुकक्खरुक्खसीयडुग्गंधे । वीसं कोडाकोडी एवइयावाह् वाससया ॥ ३२ ॥

टीका–नये, कुत्साया जुगुप्सायाम्, अरतिशोके, द्विकशब्दस्य प्रत्येक सबन्धाद्वैक्रियद्विके वैक्रियशरीरवैक्रियागोपाग-रूपे, तिर्यग्द्विके तिर्यग्गतितिर्यगानुपूर्वीलक्षणे, औदारिकद्विक औदारिकशरीरौदारिकागोपागाख्ये, नरकद्विके नरक-गतिनरकानुपूर्वीस्वरूपे, नीचैर्गोत्रे, तैजसपचके तैजसकार्मणागुरुलघुनिर्माणोपघाताभिधे, अस्थिरषट्केऽस्थिराशुभदुर्भग-दु स्वरानादेयायश कीर्तिलक्षणे, त्रसचतुष्के त्रसबादरपर्याप्तप्रत्येकरूपे, स्थावरे, 'इग त्ति' एकेन्द्रियजातौ, पंचेन्द्रियजातौ, 'नपु त्ति' नपुसकवेदे कुखगतावप्रशस्तविहायोगतौ, 'सासचउ त्ति' उच्छ्वासचतुष्के उच्छ्वासोद्योतातपपराघातलक्षणे, गुरुक-र्कशरूक्षशीतेष्वशुभस्पर्शेषु, दुर्गन्धे दुरभिगन्धे चेत्येतासु द्विचत्वारिंशत्सख्यासु प्रकृतिषु विशतिसागरोपमकोटीकोट्य उत्कृष्टा स्थितिर्भवति। तत्राहारकवर्जितानामौदारिकादिशरीराणा ये बन्धनसंघातास्तेषामपि स्थिति' स्वशरीरस्थिति-तुल्यैव विज्ञेया, तेन बन्धनादीनामपि विशतिसागरोपमकोटीकोट्य उत्कृष्टा स्थितिरिति हृदयम्। तथा चोक्तं पचस-ग्रहटीकायाम्–"स्थित्युदयबन्धकाला सघातनबन्धनाना स्वशरीरतुल्या ज्ञेया" तदत्र स्थितितुल्यतया प्रयोजनमिति। सम्प्रत्युक्तोत्तरप्रकृतीनामेवोत्कृष्टाबाधामाह–'एवइयावाह वाससय त्ति' लिगव्यत्ययादेतावन्ति वर्षशतान्यबाधा कर्मण' प्रदेशविपाकाभ्यामनुदयकाल इत्यक्षरघटना। भावार्थस्त्वयम्–यासा प्रकृतीना यावन्त्य॰ कोटीकोटय स्थितिरुक्ता तासा

तावन्ति वर्षशतान्यबाधेति तावन्मात्रेषु समयेषु न वेद्यदलिकनिक्षेपं करोतीतियावत् । तद्यथा–पंचानां विघ्नप्रकृतीनां पंचानां ज्ञानावरणप्रकृतीनां नवानां दर्शनावरणप्रकृतीनामसातवेदनीयस्य त्रिंशत्सागरोपमकोटीकोट्य उत्कृष्टा स्थितिरुक्ता तस्या अबाधाकालोऽप्युत्कृष्टस्त्रिंशद्वर्षशतानि वेदितव्यः । यथा दानान्तरायमुत्कृष्टस्थितिकं बद्धं सत्रिंशद्वर्षशतानि यावन्न कांचिदपि स्वोदयतो जीवस्य बाधामुत्पादयति, अबाधाहीनश्च कर्मदलिकनिषेकः । एवं सर्वप्रकृतिष्वपि वाच्यम् । यथा सूक्ष्मत्रिके विकलत्रिके चाष्टादश वर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । समचतुरस्रसंस्थानवज्रऋषभनाराचसंहननयोर्दशवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । न्यग्रोधपरिमंडलसंस्थानऋषभनाराचसंहननयोर्द्वादशवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । सादिसंस्थाननाराचसंहननयोश्चतुर्दशवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । कुब्जसंस्थानार्धनाराचसंहननयोः षोडशवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । वामनसंस्थानकीलिकासंहननयोरष्टादशवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । हुंडसंस्थानसेवार्तसंहननयोर्विंशतिवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । षोडशसु कषायेषु चत्वारि वर्षसहस्राण्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । मृदुलघुस्निग्धोष्णसुरभिगन्धश्वेतवर्णमधुररसलक्षणानां सप्तानां वर्षसहस्रमेकमबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । हारिद्रवर्णाम्लरसयोः सार्धद्वादशवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । लोहितवर्णकषायरसयोः पंचदशवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । नीलवर्णकटुकरसयोः सार्धसप्तदशशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । कृष्णवर्णतिक्तरसयोर्वर्षसहस्रद्वयमबाधा, अबाधाहीनश्च कर्मदलिक-

निपेक ।तथा प्रशस्तविहायोगतिउच्चैर्गोत्रसुरगतिसुरानुपूर्वीस्थिरशुभसुभगसुस्वरादेययश कीर्तिपुरुषवेदहास्यरतिलक्षणाना त्रयोदशप्रकृतीनामेक वर्षसहस्रमबाधा, अबाधाहीनश्च कर्मदलिकनिपेक । मिथ्यात्वस्य सप्त वर्षसहस्राण्यबाधा, अबाधाहीनश्च कर्मदलिकनिपेक । मनुष्यगतिमनुष्यानुपूर्वीस्त्रीवेदसातवेदनीयलक्षणाना चतसृणा प्रकृतीना पचदशवर्षशतान्यबाधा, अबाधाहीनश्च कर्मदलिकनिपेकः । तथा भयजुगुप्साऽरतिशोकवैक्रियशरीरवैक्रियागोपागतिर्यगतितिर्यगानुपूर्व्यौदारिकशरीरौदारिकागोपागनरकगतिनरकानुपूर्वीनीचैर्गोत्रतैजसकार्मणागुरुलघुनिर्माणोपघातास्थिराशुभदुर्भगदु स्वरानादेयायश.कीर्तित्रसबादरपर्याप्तप्रत्येकस्थावरैकेन्द्रियजातिपचेन्द्रियजातिनपुंसकवेदाप्रशस्तविहायोगतिउच्छ्वासोद्योतातपपराघातगुरुकर्कशरूक्षशीतदुरभिगन्धलक्षणाना द्विचत्वारिंशत्प्रकृतीना द्वे वर्षसहस्रे अबाधा, अबाधाहीनश्च कर्मदलिकनिपेक इति ॥ ३१ ॥

गुरु कोडिकोडि अंतो तित्थाहाराण भिन्नमुहु बाहा। लहुठिइ संखगुणूणा नरतिरियाणाउ पल्ल तिगं ॥३३॥

टीका–स्थितिशब्दस्योत्तरपदस्येहापि सबन्धाद्गुर्गरीयसी उत्कृष्टा स्थिति सागरोपमाणा कोटीकोट्या अन्तर्मध्ये 'तित्थाहाराण त्ति' तीर्थंकरनामाहारकशरीराहारकागोपागलक्षणाना तिसृणा प्रकृतीना भवतीति शेष । किमुक्त भवति? तीर्थंकरनाम्न आहारकद्विकस्य च सागरोपमाणामन्त कोटीकोटीप्रमाण एवोत्कृष्ट स्थितिबन्धकालो भवति नोपरिष्टादिति। 'भिन्नमुहु बाह त्ति' प्राकृतत्वादकारलोपे भिन्नमुहूर्तमन्तर्मुहूर्तमात्रमेव कालमबाधाऽनुदयावस्था उत्कृष्टा, जघन्याप्यन्तर्मुहूर्तमात्रैव तत पर दलिकरचनाया सद्भावेनावश्य प्रदेशोदयस्य सम्भवादिति । केचित्तीर्थकरनामकर्मान्तर्मुहूर्तादूर्ध्व

कस्यचित्प्रदेशत उदेति, तदुदये चाङ्गैश्वर्यादय ऋद्धिविशेषा अन्यजीवेभ्यो विशिष्टतरास्तस्य संभवन्तीति संभावयाम इति व्याचक्षते । उत्कृष्टा तीर्थकराहारकयोः स्थितिरुक्ता, अथैतयोरेव जघन्यां स्थितिमाह—'लहुठिइ संखगुणूण त्ति' लघुस्थितिस्तीर्थकराहारकयोः संख्येयेन संख्यातकलक्षणेन गुणेन गुणकारेणोना हीना संख्यगुणोना उत्कृष्टस्थितिबन्धकाल एव सागरोपमान्तःकोटाकोटीरूपः संख्येयगुणहीनो जघन्यस्थितिबन्धः सागरोपमान्तःकोटीकोटीप्रमाण इति तात्पर्यम् । तथेहाप्याहारकस्य ये बन्धनसंघातास्तेषामपि स्वशरीरस्थितिप्रमाणैव स्थितिर्विज्ञेयेति । ननु तीर्थकरनामकर्म तीर्थकरभवादर्वाक् तृतीयभव एव बध्यते । यदागमः—"बंधइ तं तु भगवओ तइयभवे सक्कइत्ताणं" तत्कथं जघन्यतोऽप्यन्तःसागरोपमकोटाकोटीप्रमाणा तस्य स्थितिरुपपद्यते ? तदयुक्तमभिप्रायापरिज्ञानात् 'बंधइ तं तु' इत्यादिकं निकाचनापेक्षयोक्तमितरथा तु तृतीयभवादर्वाक्तरामपि बध्यते । यदाहुः संशयशतशाखिशातनानिशिताकुंठकुठारकल्पाः श्रीजिनभद्रगणिक्षमाश्रमणपादाः विशेषणवत्याम्—"कोडाकोडी अयरोवमाण तित्थयरनामकम्मठिई । बंधइ य तं अणंतरभवंमि तइयंमि निद्दिट्ठं ॥ १ ॥" ततः कथमेतत्परस्परं युज्यते ? अत्रोत्तरं—"जं बंधइत्ति भणियं निकाइयं तं तु तत्थ नियमोयं । तदवंझफलं नियमा भयणा अनिकाइयावत्थे ॥ १ ॥" आह—यदि तीर्थकरनाम्नो जघन्यापि स्थितिरन्तःसागरोपमकोटीकोटीप्रमाणा तर्हि तावत्याः स्थितेस्तिर्यग्भवभ्रमणमन्तरेण पूरयितुमशक्यत्वात्तिर्यग्गतावपि तीर्थकरनामसत्कर्मा जन्तुः

---

१ बध्यते तत्तु भगवतस्तृतीयभवेऽवष्वष्कयित्वा । २ कोटाकोट्यतरोपमाणां तीर्थकरनामकर्मस्थितिः । बध्यते च तदनन्तरे भवे तृतीये (इति) निर्दिष्टम् । ३ यद्बध्यत इति भणितं तत्तु निकाचितं तत्रायं नियमः ॥ (यत्) तदवन्ध्यफलं नियमाद्भजनाऽनिकाचितावस्थे ॥

कियन्तं कालं यावज्जीवेत्तथा च सत्यागमविरोधः, आगमे तिर्यग्गतौ तीर्थकरनामसत्कर्मा सन् प्रतिषिध्यते । अत्रोच्यते—निकाचितस्यैव तीर्थकरनामकर्मणस्तिर्यग्गतौ सतः प्रतिषेधात् । उक्तं च—"जमिह निकाइयतित्थं तिरियभवे तं निसेहिय संतं । इयरमि नत्थि दोसो उवट्टणावट्टणासज्झे ॥ १ ॥" अस्या अक्षरगमनिका—इहास्मिन् प्रवचने यत्तीर्थकरनामकर्म निकाचितमवश्यंवेद्यतया व्यवस्थापितं तदेव स्वरूपेण सद्विद्यमानं तिर्यग्गतौ निषिद्धं, इतरस्मिन् पुनरनिकाचिते उद्वर्तनापवर्तनासाध्ये तिर्यग्गतावपि विद्यमाने न कश्चिद्दोषः, यतस्तत्प्रभूतस्थितिकमप्यपवर्तनाकरणेन लघुस्थितिकं क्रियते, उद्वर्तनया वा तदन्यप्रकृतित्वेनावस्थाप्यत इति । 'नरतिरियाणाउ पल्लतिग ति' नरतिरश्चामायुषो पल्यत्रिकं पल्योपमत्रिकमुत्कृष्टा स्थितिरिति । यद्यपि मूलप्रकृत्युत्कृष्टस्थितिज्ञापनप्रस्तावे देवनारकायुषोस्त्रयस्त्रिंशत्सागरोपमलक्षणैव स्थितिरुक्ता, नरतिर्यगायुषोस्तु पल्योपमत्रयप्रमाणैव, तथापि पूर्वकोटित्रिभागाधिकैवासौ सर्वा बध्यते इत्यवसेयम् । नन्वेवं तर्हि सूत्रे पूर्वकोटीत्रिभागाधिकत्वं कस्मान्नोक्तं ? सत्यम्, असौ पूर्वकोटीत्रिभागोऽबाधारूपतयैवोपयाति न पुनरुदयमायाति, अतो यावती स्थितिरायुषो वेद्यते तावत्प्रमाणैवाबाधारहिता सूत्रे उपात्तेत्यदोष इति ॥ ३३ ॥

**इगविगलपुव्वकोडिं पलियासंखंस आउचउ अमणा। निरुवकमाण छमासा अबाह सेसाण भवतंसो॥३४॥**

टीका—एकेन्द्रिया विकलेन्द्रियाश्च पूर्वाण्यागमप्रतीतानि तद्यथा "पुव्वस्स उ परिमाणं सयरिं खलु हुंति कोडिलक्खाउ । छप्पन्नं च सहस्सा बोधव्वा वासकोडीणं ॥ १ ॥" तेषां पूर्वाणां कोटी पूर्वकोटी तां पूर्वकोटीं यावदायुष उत्कृष्टा

१ पूर्वस्य तु प्रमाणं सप्तति खलु भवन्ति कोटिलक्षाणां । षट्पञ्चाशच्च सहस्राणि बोद्धव्यानि वर्षकोटीनां ।

इदमत्र हृदयम्–एकेन्द्रिया विकलेन्द्रियाश्चोत्कृष्टतोऽपि पूर्वकोट्यायुष्केष्वेव नरतिर्यक्षु समुत्पद्यन्ते न नारकदेवासंख्येयवर्षायुष्कतिर्यङ्मनुष्येषु, अत एकेन्द्रियविकलेन्द्रियाणामुत्कृष्टायुर्बन्धः पूर्वकोटीस्वस्वभवत्रिभागाभ्यधिको वेदितव्यः। एषां स्वस्वभवत्रिभागोऽबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः। यदुक्तं कर्मप्रकृतौ–"सेसाण पुव्वकोडी साउतिभागो अबाहा सिं" अत्र टीका–शेषाणां चैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणां पर्याप्तापर्याप्तानामसंज्ञिपंचेन्द्रियसंज्ञिपंचेन्द्रियाणां चापर्याप्तपर्याप्तानामायुष उत्कृष्टस्थितिबन्धकानां परभवायुष उत्कृष्टस्थितिबन्धः पूर्वकोटीस्वस्वभवत्रिभागाभ्यधिको वेदितव्यः। आयुष उत्कृष्टस्वभवत्रिभागोऽबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेक इति। 'पलियासंखंस आउचउ अमण त्ति' अमनसो मनोयोगरहिता असंज्ञिनः पर्याप्ता इत्यर्थः पल्योपमासंख्यांशं पल्योपमासंख्येयभागं आयुषां चतुष्कं बध्नन्ति, विभक्तिलोपश्च प्राकृतत्वात्। किमुक्तं भवति ? असंज्ञिपंचेन्द्रियेषु आयुरुत्कृष्टस्थितिबन्धकेषु चतुर्णामप्यायुषां परभवसंबन्धिनामुत्कृष्टा स्थितिः पल्योपमासंख्येयभागमात्रा पूर्वकोटित्रिभागाधिका भवति पूर्वकोटित्रिभागश्चाबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः। यदवादि कर्मप्रकृतौ श्रीमदाराध्यपादैः–"आउचउक्कुक्कोसं पल्लासंखिज्जभाग अमणेसु" इति। आयुषामुत्कृष्टां स्थितिमभिधाय तेषामेवोत्कृष्टामबाधामाह–'निरुवकमाण छमासा अबाह त्ति' निरुपक्रमाणां सत्या सत्यभामेति न्यायात् निरुपक्रमायुषां देवनारकाणामसंख्येयवर्षायुषां नरतिरश्चां च भवान्तरस्थितिं बध्नन्ति, न पूर्वकोट्यभ्यधिकामपीति। आयुःशब्दश्च 'आउचउ अमणा' इति पदाद्योजनीयः।

---

१ आयुश्चतुष्कमुत्कृष्टं पल्योपमासंख्यांशोऽमनस्केषु।

प्रायोग्यायुर्बन्धकारिणा षण्मासप्रमाणाऽबाधा व्यावर्णितस्वभावा भवतीति शेषः । यतस्ते षण्मासावशेषायुष एवो-त्तरभवप्रायोग्यमायुर्बध्नन्ति । यदाह भाष्यपीयूषपयोधि —"देवा नेरइया वा असंखवासाउया य तिरिमणुया । छम्मासवसेसाऊ परभवियं आउ बंधंति ॥ १ ॥" इति । यथोक्त एवाबाधाकालः । केचित्तु मन्यन्ते—युगलधा-र्मिकाः पल्योपमासंख्येयभागे निजायुष्यवशिष्यमाणे परभवायुष्कं बध्नन्ति, तन्मतेनाबाधापि युगलधार्मिकानुद्दिश्य पल्योपमासंख्येयभागप्रमाणैवेति मन्तव्यम् । तदुक्तम् "पलियासंखिज्जंस जुगधम्मीण वयंतन्ने"[1] इति । 'सेसाण भवतंसो त्ति' शेषाणां संख्येयवर्षायुषां सोपक्रमनिरुपक्रमायुषां नरतिरश्चां भवस्य स्वस्वकीयजन्मनस्त्र्यंशस्त्रिभागो भवत्र्यंशोऽबाधे-त्यत्रापि संबन्धनीयः, यतस्ते निजजन्मनि त्रिभाग एवावशिष्टे "सेसा पुणो तिभाए" इति वचनादुत्कृष्टतः परभवप्रायो-ग्यमायुर्बन्धं विदधतीति ॥ ३४ ॥

प्रतिपादिता सर्वोत्तरप्रकृतीनामबाधान्वितोत्कृष्टा स्थितिः, इदानीं तासामेव जघन्यां स्थितिं निरूपयितुकाम आह—

**लहुठिइबंधो संजलणलोहपणविग्घनाणदंसेसु । भिन्नमुहुत्तं ते अठ जसुच्चे बारस य साए ॥ ३५ ॥**

टीका—लघुस्थितिबन्धो जघन्यस्थितिबन्धो भिन्नमुहूर्तं भवति, केष्वित्याह—सञ्ज्वलनलोभे प्रतीते, पणशब्दस्य प्रत्येकं संबन्धाद्विघ्नपञ्चके दानलाभभोगोपभोगवीर्यान्तरायरूपे, ज्ञानावरणपञ्चके मतिश्रुतावधिमनःपर्यायकेवलज्ञानावरणलक्षणे, 'दंसेसु त्ति' दर्शनचतुष्के चक्षुरचक्षुरवधिकेवलदर्शनावरणस्वभावे । कोऽर्थः ? ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनचतु-

१ पल्यासंख्यांश युग्मधर्मिणामन्ये वदन्ति ( अबाधामिति शेषः ) ।

ष्कसंज्वलनलोभलक्षणानां पंचदशप्रकृतीनां जघन्यस्थितिबन्धोऽन्तर्मुहूर्तमात्र एव, यतः संज्वलनलोभस्यानिवृत्तिबादर-गुणस्थानके शेषचतुर्दशप्रकृतीनां सूक्ष्मसंपरायगुणस्थानकचरमसमये स्वबन्धव्यवच्छेदकालेऽन्तर्मुहूर्तमात्रैव स्थितिर्बध्यते। 'ते अट्ठ त्ति' व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात्ते मुहूर्ता घटिकाद्वयप्रमाणा अष्टावष्टसंख्या यशःकीर्तिनामोच्चै-र्गोत्रयोर्जघन्यस्थितिर्भवति । 'बारस य त्ति' द्वादश मुहूर्ताः, 'चः' पुनरर्थे स च भिन्नक्रमः, ततः साते पुनः सातवेद-नीये कर्मणीति । उक्तं च कर्मप्रकृतौ—"भिन्नमुहुत्तं आवरणविग्घदंसणचउक्कलोहेसु । बारस साइ मुहुत्ता अट्ठ य जसकित्तिउच्चेसु ॥ १ ॥" इति ॥ ३५ ॥

**दो इगमासो पक्खो संजलणतिगे पुमट्ठवरिसाणि । सेसाणुक्कोसाओ मिच्छत्तठिईइ जं लद्धं ॥ ३६ ॥**

टीका—द्वौ मासौ, एको मासः, पक्षश्च जघन्या स्थितिः, क्वेत्याह—संज्वलनत्रिके क्रोधमानमायारूपे । एतदुक्तं भव-ति—संज्वलनक्रोधे द्वौ मासौ जघन्या स्थितिः, संज्वलनमाने एको मासो जघन्या स्थितिः, संज्वलनमायायां पक्षः पंचद-शदिनात्मको जघन्या स्थितिः । 'पुमट्ठवरिसाणि त्ति' पुंवेदेऽष्टौ वर्षाणि जघन्या स्थितिः । यतश्चतसृणामप्येतासां प्रकृ-तीनामनिवृत्तिबादरगुणस्थाने निजनिजबन्धव्यवच्छेदसमये प्रतिपादितप्रमाणैव स्थितिर्बध्यत इति । यासां द्वाविंशतेः प्रकृ-तीनां स्वबन्धव्यवच्छेदसमये जघन्या स्थितिरन्तर्मुहूर्तादिका संभवति तासां तथैव सा प्रतिपादिता, आहारकद्विकतीर्थ-करलक्षणप्रकृतित्रयस्य तदुत्कृष्टस्थितिप्रतिपादनप्रस्ताव एव जघन्याप्यसावभिहिता, आयुश्चतुष्टयस्य स्वामित्वप्रस्तावे

१ अन्तर्मुहूर्तमावरणान्तरायदर्शनचतुष्कलोभेषु । साते द्वादश मुहूर्ता अष्टौ च यशःकीर्त्युच्चैर्गोत्रयोः ।

वैक्रियषट्कस्य च जघन्यस्थितिर्वंद्यते, शेषपचाशीते प्रकृतीना बादरपर्याप्तैकेन्द्रियेष्वेव प्राप्यमाणजघन्यस्थितिबन्धाना जघन्यस्थितिनिरूपणार्थं करणमाह—'सेसाणुक्कोसाओ' इत्यादि गाथार्धं, शेषाणा जणितवक्ष्यमाणपचत्रिशत्प्रकृतिभ्योऽवशिष्टाना निद्रापचकादीना पचाशीतिप्रकृतीनामुत्कृष्टात् सर्वप्रकृतीना निजनिजोत्कृष्टस्थितिबन्धान्मिथ्यात्वस्थित्या सप्ततिकोटीकोटीरूपया जागे हृते यल्लब्ध यदवाप्तं सा जघन्या स्थिति'। एव च सति निद्रापचकेऽसाते च सागरोपमस्य त्रय सप्तजागाः, मिथ्यात्वस्य सागरोपम, सज्वलनवर्जद्वादशकषायाणा चत्वार सप्तजागा', स्त्रीवेदमनुष्यद्विकयोस्त्रयश्चतुर्दशजागा', यत' पचदशाना पचमे जागे त्रय', सप्ततेश्च पचमे जागे चतुर्दश लभ्यन्ते। सूक्ष्मत्रिके विकलेन्द्रियजातित्रिके च नव पचत्रिंशज्जागा, यत एतेषामष्टादशकोटीकोट्य उत्कृष्टा स्थितिरुक्ता, तस्या सप्तत्या जागे हृते लब्धा अष्टादश सप्ततिजागा, अनयोश्च जाज्यजागहारकराश्योरप्यर्धीकरणे सपन्ना । एवमन्यत्रापि निज निजमुत्कृष्टस्थितिक जाज्यराशि मिथ्यात्वस्थितिरूप जागहारकराशि चार्धीकृत्य जघन्या स्थितिर्वाच्या । तथा स्थिरशुजसुजगसुस्वरादेयहास्यरतिशुजविहायोगतिवज्रर्षजनाराचसहननसमचतुरस्रसस्थानसुरजिगन्धशुक्लवर्णमधुररसमृदुलघुस्निग्धोष्णस्पर्शलक्षणस्य प्रकृतिसप्तदशकस्यैक' सप्तजाग, शेषस्य च शुजाशुजवर्णादिचतुष्कस्य द्वौ सप्तजागौ, केवल वर्णादिचतुष्क बन्धेऽविशेषितमेवाधिक्रियते इति प्रागेवोक्तम् । तत' सप्तजागद्वयमेव चतुर्णामपि सामान्येन द्रष्टव्यम् । द्वितीययो. संस्थानसंहननयो' षट् पंचत्रिशज्जागा', तृतीययो' संस्थानसहननयो. सप्त पचत्रिशज्जागा, चतुर्थयोः संस्थानसहननयोरष्टौ पंचत्रिशज्जागा, पचमयो सस्थानसहननयोर्नव पचत्रिशज्जागाः । शेषाणा त्रसबादरपर्याप्तप्रत्येकागुरुलघूपघातपराघातोच्छ्वासास्थिराशुज-

दुर्भगदुःस्वरानादेयायशःकीर्त्यौदारिकशरीरौदारिकांगोपांगतिर्यग्गतितिर्यगानुपूर्व्यैकेन्द्रियजातिपंचेन्द्रियजातिनिर्माणात-पोद्योताप्रशस्तविहायोगतिस्थावरहुंडकसंस्थानसेवार्तसंहननतैजसकार्मणनीचैर्गोत्रारतिशोकभयजुगुप्सानपुंसकवेदलक्षणानां पंचात्रिंशत्प्रकृतीनां सागरोपमस्य द्वौ सप्तभागौ, इयं चासां जघन्या स्थितिरेकेन्द्रियानेवोद्दिश्य प्राप्यते, न शेषजीवानिति। तथा जघन्यस्थितिप्रस्तावादेकेन्द्रियाणामुत्कृष्टोऽपि स्थितिबन्धो वाच्यः, यथाऽयमेव जघन्यस्थितिबन्धः पल्योपमासंख्येयभागमात्राभ्यधिक उत्कृष्टो भवतीति। तथा चोक्तम्–"जा एगिंदि जहन्ना पलियासंखंससंजुया सा उ। तेसिं जिट्ठत्ति" इति पंचसंग्रहाभिप्रायेण व्याख्यातम्। अथ चेदमेव गाथार्धं कर्मप्रकृत्यभिप्रायेणान्यथा व्याख्यायते–'सेसाणमित्यादि' शेषाणामवशिष्टानां पंचाशीतेः प्रकृतीनामित्यर्थः। 'उक्कोसाउ त्ति' सूचनात्सूत्रमिति न्यायादुत्कृष्टादिति सामान्योक्तावपि वर्गोत्कृष्टात् स्थितिबन्धादिति दृश्यम्। अथ कोऽयं वर्गोत्कृष्टः स्थितिबन्धः? उच्यते, सजातीयप्रकृतीनां समुदायो वर्गः। यथा मतिज्ञानावरणादिप्रकृतिसमुदायो ज्ञानावरणवर्गः, चक्षुर्दर्शनावरणादिप्रकृतिसमुदायो दर्शनावरणवर्गः, वेदनीयादिप्रकृतिसमुदायो वेदनीयवर्गः, दर्शनमोहनीयप्रकृतिसमुदायो दर्शनमोहनीयवर्गः, कषायमोहनीयप्रकृतिसमुदायः कषायमोहनीयवर्गः, नोकषायमोहनीयप्रकृतिसमुदायो नोकषायमोहनीयवर्गः, नामप्रकृतिसमुदायो नामवर्गः, गोत्रप्रकृतिसमुदायो गोत्रवर्गः, अन्तरायप्रकृतिसमुदायोऽन्तरायवर्गः। इत्येवंविधस्य वर्गस्य संबन्धी उत्कृष्टो वर्गोत्कृष्टः स्थितिबन्धोऽभिधीयते, तस्माद्वर्गोत्कृष्टात् स्थितिबन्धान्मिथ्यात्वस्थित्या सागरोपमकोटीकोटीसप्ततिरूपया भागे हृते

---

१ यैकेन्द्रियाणां जघन्या सैव पल्योपमासंख्यांशसंयुता तेषां ज्येष्ठेति।

यल्लब्ध यद्भाग तत्पल्योपमासंख्येयभागोनं सज्जघन्यस्थितितया भवतीति गम्यते । अत्र च वर्गोत्कृष्टादिति व्याख्याने-नैतदवसीयते—वर्गान्तर्गतानामर्धस्थितिकानामपि सातवेदनीयादीनां प्रकृतीनां जघन्यस्थित्यानयनाय निजवर्गस्यैवोत्कृष्टा त्रिंशत्कोटीकोट्यादिका स्थितिर्विभजनीया न तु स्वकीया पञ्चदशकोटीकोट्यादिकेति । तथा यद्यपि पल्योपमासंख्येयभागोनमिति नोक्तं तथापि 'पलियासंखसहीण लहुबंधो त्ति' अनन्तरगाथावयवेनैकेन्द्रियाणां लब्धसप्तभागाः पल्योपमासंख्येयभागोना एव जघन्यस्थितितयाऽभिधास्यन्ते । अतोऽत्रापि जघन्यस्थितिप्रस्तावात्पल्योपमासंख्येयभागोनत्वमवसीयते। यदवादि दुर्वादिकुम्भिकुम्भस्थलदलनकेसरिवरिष्ठैः शिवशर्मसूरिपादैः कर्मप्रकृतौ—"वग्गुक्कोसठिईणं मिच्छत्तुक्कोसगेण जं लद्धं । सेसाणं तु जहन्ना पल्लासंखिज्जभागूणा ॥ १ ॥" अस्या अक्षरगमनिका टीका—इह ज्ञानावरणप्रकृतिसमुदायो ज्ञानावरणीयवर्गः, एवं दर्शनावरणवर्गः, वेदनीयवर्गः, दर्शनमोहनीयवर्गः, कषायमोहनीयवर्गः, नोकषायमोहनीयवर्गः, नामवर्गः, गोत्रवर्गः, अन्तरायवर्गः । एतेषां वर्गाणां या आत्मीया स्थितिस्त्रिंशत्सागरोपमकोटीकोट्यादिलक्षणा तस्या मिथ्यात्वस्योत्कृष्टया स्थित्या सागरोपमसप्ततिकोटीकोटीरूपया भागे हृते सति यल्लभ्यते तत्पल्योपमासंख्येयभागोनं सदुक्तशेषाणां ( पञ्चाशीतेः ) प्रकृतीनां जघन्यस्थितेः परिमाणमवसेयम् । तथाहि—दर्शनावरणवेदनीयवर्गयोरुत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीकोटीप्रमाणा तस्या मिथ्यात्वस्थित्या सप्ततिसागरोपमकोटीकोटीप्रमाणया भागे हृते सति "शून्यं शून्येन पातयेदिति" वचनाल्लब्धास्त्रयः सागरोपमसप्तभागाः, ते पल्योपमासंख्येयभागोना निद्रापञ्चकासातवेदनीययोर्जघन्यस्थितितया मन्तव्याः । दर्शनमोहनीयवर्गस्य चोत्कृष्टा स्थितिः सागरोपमकोटाकोटीसप्ततिरूपा तस्या मिथ्यात्व-

स्थित्या तावत्यैव भागे हृते लब्धाः सप्त सागरोपमसप्तभागाः, ते च पल्योपमासंख्येयभागोना मिथ्यात्वस्य जघन्यस्थिति-तयाऽवसेयाः । कषायमोहनीयवर्गस्य चोत्कृष्टा स्थितिश्चत्वारिंशत्सागरोपमकोटीकोट्यस्तस्या मिथ्यात्वस्थित्या भागे हृते लब्धाश्चत्वारः सागरोपमसप्तभागाः, ते च पल्योपमासंख्येयभागोनाः संज्वलनरहितकषायद्वादशकस्य जघन्यस्थितितया बोद्धव्याः । नोकषायमोहनीयस्य तु वर्गोत्कृष्टा स्थितिर्विंशतिसागरोपमकोटीकोट्यस्तस्याश्च मिथ्यात्वस्थित्या भागे हृते लब्धौ द्वौ सागरोपमसप्तभागौ, तौ च पल्योपमासंख्येयभागोनौ पुरुषवेदवर्जानामष्टानां नोकषायाणां जघन्यस्थितित-याऽवसेयौ । नामगोत्रयोश्च प्रत्येकं विंशतिसागरोपमकोटीकोट्यो वर्गोत्कृष्टा स्थितिः, तस्याश्च मिथ्यात्वस्थित्या भागे हृते लब्धौ द्वौ सागरोपमसप्तभागौ, तौ च पल्योपमासंख्येयभागोनौ देवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियशरीरवै-क्रियांगोपांगाहारकशरीराहारकांगोपांगतीर्थंकरनामयशःकीर्तिवर्जानां नाम्नः शेषसप्तपंचाशत्प्रकृतीनां नीचैर्गोत्रस्य च जघ-न्यस्थितितया बोद्धव्याविति ॥ ३६ ॥

उक्ता सर्वप्रकृतीनां जघन्या स्थितिरिदानीमेकेन्द्रियाणां सर्वस्वप्रायोग्योत्तरप्रकृतीरुद्दिश्योत्कृष्टां जघन्यां च स्थितिमाह—

**अयमुक्कोसो गिंदिसु पलियासंखंसहीणलहुबंधो । कमसो पणवीसाए पन्ना सय सहस्स संगुणिओ ॥ ३७ ॥**

टीका—अयमित्यनन्तरोद्दिष्टो वर्गोत्कृष्टस्थितिबन्धान्मिथ्यात्वस्थित्या भागे हृते लब्धसप्तभागरूप उत्कृष्टस्थितिबन्ध एकेन्द्रियेषु ज्ञातव्यः । तथाहि—ज्ञानावरणपंचकदर्शनावरणनवकवेदनीयद्विकान्तरायपंचकलक्षणानामेकविंशतेः प्रकृतीनां

त्रय सागरोपमसप्तभागा। यत एतद्वर्गाणा त्रिंशत्सागरोपमकोटीकोट्य उत्कृष्टा स्थितिस्तस्या मिथ्यात्वस्थित्या भागे हृते त्रय एव सागरोपमसप्तभागा लभ्यन्ते। इत्येवमन्यत्रापि भागभावना कार्या। ततश्च मिथ्यात्वस्य सप्त सागरोपमसप्तभागा, कषायषोडशकस्य चत्वार सागरोपमसप्तभागा, नोकषायनवकस्य द्वौ सागरोपमसप्तभागौ, एकेन्द्रियबन्धयोग्यदेवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियशरीरवैक्रियागोपागाहारकद्विकतीर्थकरनामयश कीर्तिवर्जाना शेषाणा नाम्नोऽष्टपचाशत्प्रकृतीना गोत्रद्वयस्य च प्रत्येक द्वौ द्वौ सागरोपमसप्तभागाविति। उक्त एकेन्द्रियाणामुत्कृष्टस्थितिबन्धः, इदानीं तेषामेव जघन्यस्थितिबन्धमाह—'पल्लासखसे'त्यादि पल्यस्य पल्योपमस्यासंख्याशेनासंख्येयभागेन हीनो न्यून' पल्यासख्याशहीनोऽयमेवोत्कृष्टस्थितिबन्ध सप्तभागत्रयादिक., किमित्याह—लघुबन्धो जघन्यस्थितिबन्धो भवतीति। अयमभिप्राय —यासा प्रकृतीना यावत्प्रमाण' सप्तभागरूप. एकेन्द्रियाणामुत्कृष्टस्थितिबन्ध उक्तस्तासा तावत्प्रमाणः सप्तभागरूप एव पल्योपमासख्येयभागहीनस्तेषा जघन्यस्थितितया मन्तव्य इति। निरूपित एकेन्द्रियाणामुत्कृष्टो जघन्यश्च स्थितिबन्धो गाथापूर्वार्धेन, सम्प्रत्ययमेव एकेन्द्रियोत्कृष्टस्थितिबन्धो यैर्गुणकारै. संगुणितस्ताडितो द्वीन्द्रियादीनामसञ्ज्ञिपर्यन्ताना प्रायोग्यस्थितितया भवति तान् गुणकारानुत्तरार्धेनाह—'कमसो पणवीसाए' इत्यादि क्रमश क्रमेण यथासख्यमित्यर्थः। पंचविंशत्या सगुणित, प्राकृतत्वाद्विभक्तिलोपे पंचाशता सगुणित', शतेन सगुणित, सहस्रेण संगुणित.॥ ३७॥

ततः किमित्याह—

**विगलि असन्निसु जिठो कणिठओ पल्लसंखन्नागूणो। सुरनरयाउ समादससहस्स सेसाउ खुड्डन्नवं॥२८॥**

टीका–विकलेषु विकलेन्द्रियेषु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेषु, असंज्ञिषु संमूर्छजपंचेन्द्रियतिर्यङ्मनुष्येषु ज्येष्ठः उत्कृष्टः स्थितिबन्धो न्नवति। इयमत्र न्नावना–एकेन्द्रियाणामुत्कृष्टः स्थितिबन्धः सागरोपमसप्तन्नागत्रयादिकः पंचविंशत्या संगुणितो द्वीन्द्रियाणां ज्येष्ठः संन्नवत्सर्वप्रकृतीरुद्दिश्य स्थितिबन्धो न्नवति। स एवैकेन्द्रियाणामुत्कृष्टः स्थितिबन्धः पंचाशता संगुणितस्त्रीन्द्रियाणां ज्येष्ठः स्थितिबन्धो न्नवति, स एवैकेन्द्रियाणामुत्कृष्टः स्थितिबन्धः शतेन संगुणितश्चतुरिन्द्रियाणां ज्येष्ठः स्थितिबन्धो न्नवति, सहस्रेण गुणितोऽसंज्ञिपंचेन्द्रियाणां स्वप्रायोग्यसर्वप्रकृतीरधिकृत्य ज्येष्ठः स्थितिबन्धो न्नवतीति। द्वीन्द्रियादीनामेव जघन्यस्थितिबन्धमानमाह–'कणिठओ पल्लसंखन्नागूणु त्ति' पल्यस्य पल्योपमस्य संख्यन्नागेन संख्याततमन्नागेनोनो न्यूनः उत्कृष्ट एव स्थितिबन्धः कनिष्ठको जघन्यस्थितिबन्धो न्नवति। एतदुक्तं न्नवति–द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिपंचेन्द्रियाणामात्मीय आत्मीय उत्कृष्टः स्थितिबन्धः पल्योपमसंख्येयन्नागहीनः कनिष्ठकबन्धो न्नवति, आयुश्चतुष्टयस्य जघन्यस्थितिमानमाह–सुरनारकायुषोर्देवनारकायुष्कयोः समा वर्षाणि तासां दशसहस्राणि समादशसहस्राणि दशवर्षसहस्राणीत्यर्थः, जघन्या स्थितिर्न्नवतीति प्रक्रमः। 'सेसाउ खुड्डन्नवं ति' शेषायुषोस्तिर्यङ्मनुष्यायुष्कयोः 'खुड्डन्नवं ति' क्षुल्लकः सर्वन्नवापेक्षया लघीयान्, लिंगव्यत्ययाद्भवो जन्म क्षुल्लकन्नवः स जघन्या स्थितिर्न्नवति इति॥ २८॥

प्ररूपिता जघन्यस्थितिरिदानीं सर्वोत्तरप्रकृती प्रतीत्य जघन्याबाधामाह–

सव्वाण वि लहुबंधे भिन्नमुहू अबाह आउजिट्ठे वि। केइ सुराउसमं जिणमंतमुहू विंति आहारं ॥ ३९ ॥

टीका–सर्वासामपि सर्वप्रकृतीनां विंशत्युत्तरशतसंख्यानामपि लघुबन्धे जघन्यस्थितिबन्धे भिन्नमुहूर्तमन्तर्मुहूर्तमबाधाऽनुदयकालः । किं सर्वप्रकृतीनां जघन्यबन्ध एवेय जघन्याऽबाधा, आहोश्विदस्ति कासाचिदियमुत्कृष्टेऽपीत्याह–'आउजिट्ठे वि' आयुषा ज्येष्ठेऽपि ज्येष्ठबन्धेऽपि, न केवलं जघन्य एवेत्यपिशब्दार्थः । जघन्याबाधाऽन्तर्मुहूर्तप्रमाणा भवतीति योगः । एतेनायुषश्चतुर्भंगकैरबाधेति सूचितं, तद्यथा–ज्येष्ठे आयुःस्थितिबन्धे ज्येष्ठाऽबाधा, ज्येष्ठे आयुःस्थितिबन्धे जघन्याऽबाधा, जघन्ये आयुःस्थितिबन्धे ज्येष्ठाऽबाधा, जघन्ये स्थितिबन्धे जघन्याबाधेति । अधुना तीर्थंकराहारकद्विकयोः प्राग्निरूपितामपि जघन्यां स्थितिं पुनर्मतान्तरेणाह– 'केइ सुराउसमं' इत्यादि केचिदाचार्याः सुरायुषा देवायुषा देवायुष्केण दशवर्षसहस्रप्रमाणेन समं तुल्यं सुरायुःसमं देवायुस्तुल्यस्थितिकं जघन्यतो बध्यते । किं तदित्याह–'जिण त्ति' तीर्थंकरनामकर्म ब्रुवते । तथा च तैरभ्यधायि–"सुरनारयाउयाणं दसवाससहस्स लहु सतित्थाणं ।" 'लहु त्ति' जघन्या स्थितिः सतीर्थयोस्तीर्थंकरनामयुक्तयोरित्यर्थः । तथा 'आहार त्ति' आहारकद्विकमाहारकशरीराहारकाङ्गोपाङ्गलक्षणमन्तर्मुहूर्तं जघन्यतो बध्यते, किंचिदूनमुहूर्तस्थितिकं जघन्येन बध्यत इति ब्रुवते । तथा च तैरुक्तम्–"आहारकविग्घावरणाण किंचूणं" 'किंचूण त्ति' किंचिदूनं मुहूर्तं जघन्या स्थितिरिति ॥ ३९ ॥

तिर्यङ्मनुष्यायुषोर्जघन्या स्थितिः क्षुल्लकभवप्रमाणा भवतीति प्रागुक्तम् । ततस्तं क्षुल्लकभवं सप्रपंचं निरूपयितुकामो गाथायुगलमाह–

**सत्तरस समहिया किर इगाणुपाणुंमि हुंति खुड्डभवा । सगतीससयतिहुत्तर पाणू पुण इगमुहुत्तंमि ॥४०॥**

**पणसठिसहस्स पणसय छत्तीसा इगमुहुत्त खुड्डभवा । आवलियाणं दोसय छप्पन्ना एग खुड्डभवे ॥ ४१ ॥**

टीका–सप्तभिरधिका दश सप्तदश समभ्यधिकाः किंचित्समर्गलाः । किलेत्याप्तोक्ताविव्येवं ब्रुवते । एकानप्राणे हृष्टानवकल्पादिगुणोपेतस्य जन्तोरेकस्मिन्नुच्छ्वासनिःश्वासरूपे भवन्ति क्षुल्लकाः । सूत्रे च 'आणुपाणुंमि त्ति' उकारः "स्वराणां स्वरा" (सि० ८–४–२३७) इति प्राकृतसूत्रेण । अयमर्थः–एकस्मिन् प्राणापाने क्षुल्लकभवाः सप्तदश भवन्तीति किलाप्ता ब्रुवते, एते च साधिकसप्तदश क्षुल्लकभवा मुहूर्तगतक्षुल्लकभवग्रहणराशेर्वक्ष्यमाणगाथोपन्यस्तस्य भाज्यस्य मुहूर्तगतप्राणापानराशिनैव भागे हृते लभ्यन्ते, अतः प्रथमं मुहूर्तान्तर्गतप्राणापानराशेर्भागहारकरूपस्य प्रमाणनिरूपणार्थमाह–'सगतीससयतिहुत्तरेत्यादि' सप्तत्रिंशच्छतानि त्रिसप्तत्यधिकानि, अंकतोऽपि ३७७३ 'पाणु त्ति' प्राकृतत्वात्प्राणापाना उच्छ्वासनिःश्वासाः पुनरेकमुहूर्ते घटिकाद्वयरूपे भवन्ति । उक्तो भागहारको राशिरधुना भाज्यस्य मुहूर्तगतक्षुल्लकभवग्रहणराशेः प्रमाणमाह–'पणसठीत्यादि' विभक्तिलोपात्पंचषष्टिसहस्राणि पंचशतानि षट्त्रिंशानि षट्त्रिंशदधिकानि, अंकतोऽपि ६५५३६ एकमुहूर्ते क्षुल्लकभवा एकमुहूर्तक्षुल्लकभवग्रहणानि भवन्तीत्यर्थः । पंचषष्टिसहस्रपंचशतषट्त्रिंशदधिकलक्षणस्य मुहूर्तगतक्षुल्लकभवग्रहणराशेर्भाज्यस्य मुहूर्तगतप्राणापानराशिना त्रिसप्तत्यधिकसप्त-

त्रिंशच्छतप्रमाणेन भागे हृते सति यल्लभ्यते, तदेकत्र प्राणापाने क्षुल्लकभवग्रहणप्रमाणं भवतीति । तानि तु सप्तदश । तथा यैर्भागहाराकमानैरशै क्षुल्लकभवग्रहण भवति,ते त्वत्रैकत्र प्राणापानेऽष्टादशस्यापि क्षुल्लकभवग्रहणस्यांशाः पञ्चनवत्यधिकत्रयोदशशतप्रमाणा अवशिष्यन्ते, अष्टसप्तत्यधिकत्रयोविंशतिशतानि चांशाना न पूर्यन्ते इति । स्थापना १७ अंशा १३९५ शेषांशा' २३७८ । अतो यदुक्तम्–'सत्तरससमहिया किर इगाणुपाणुमि हुंति खुड्डुभवा' इति तद्युक्तमिति । क्षुल्लकभवग्रहण च सर्वेषामप्यौदारिकशरीरिणा भवतीत्यवसेयम्, भगवत्यामेवमेवोक्तत्वात्, कर्मप्रकृत्यादिषु औदारिकशरीरिणा तिर्यग्मनुष्याणामायुषो जघन्यस्थिति' क्षुल्लकभवग्रहणरूपाया' प्रतिपादनाच्च । यत्पुनरावश्यकटीकाया क्षुल्लकभवग्रहण वनस्पतिष्वेव प्राप्यत इत्युक्तं तन्मतान्तरमित्यवसीयत इति । साम्प्रतमेकस्मिन् क्षुल्लकभवग्रहणे आवलिकाद्वारेण कालमान निरूपयितुकामो यावत्य आवलिका एकस्मिन् क्षुल्लकभवग्रहणे भवन्त्येतदेवाह–'आवलियाणं दो सयेत्यादि' आवलिकाना "असंखिज्जाण समयाणं समुदयसमिईसमागमेणं सा एगा आवलिय त्ति वुच्चइ" इत्यागमप्रतिपादितस्व रूपाणा द्वे शते षट्पञ्चाशदधिके भवत । एकक्षुल्लकभवे एकक्षुल्लकभवग्रहण इति ॥ ४० ॥ ४१ ॥

प्रतिपादितं स्थितिबन्धप्रसङ्गागत क्षुल्लकभवग्रहणप्रमाणं, उक्त उत्कृष्टस्थितिबन्धो वैक्रियषट्कवर्जो जघन्यस्थितिबन्धश्च सर्वाः प्रकृतीराश्रित्य, संप्रत्येता एव प्रकृती· प्रतीत्योत्कृष्टस्थितिबन्धस्वामिनो निरूपयन्नाह–

**अविरयसम्मो तित्थं आहारदुगामराउ य पमत्तो । मिच्छद्दिठी बंधइ जिट्ठठिइं सेसपयडीणं ॥ ४२ ॥**

---

१ असख्येयाना समयानां समुदयसमितिसमागम ( य ) स एकावलिकेत्युच्यते ।

टीका–अविरतसम्यक्त्वोऽविरतसम्यग्दृष्टिर्व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायान्मनुष्यः पूर्वं नरकबद्धायुष्को नरकं जिगमिषुरवश्यं मिथ्यात्वं यत्र समये प्रतिपद्यते, ततोऽनन्तरेऽर्वाक्स्थितिबन्धे 'तित्थं ति' तीर्थकरनाम उत्कृष्टस्थितिकं बध्नाति "तित्थयरं पि मणुस्सो अविरयसंमे समज्जेइ" इति वचनात्। इयमत्र भावना–तीर्थंकरनाम्नो ह्यविरतसम्यग्दृष्ट्यादयोऽपूर्वकरणावसाना बन्धका भवन्ति किं तूत्कृष्टा स्थितिरुत्कृष्टसंक्लेशेन बध्यते स च तीर्थकरनामबन्धकेष्वविरतस्यैव यथोक्तविशेषणविशिष्टस्य लभ्यत इति शेषव्युदासेनास्यैवोपादानमिति भावः। तत्र तिर्यंचस्तीर्थकरनाम्नः पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्च भवप्रत्ययेनैव न भवन्तीति मनुष्यग्रहणं, बद्धतीर्थकरनामकर्मा च पूर्वमबद्धनरकायुर्नरकं न व्रजतीति पूर्वं नरकबद्धायुष्कस्य ग्रहणं, क्षायिकसम्यग्दृष्टिश्च श्रेणिकादिवत्ससम्यक्त्वोऽपि कश्चिन्नरकं प्रयाति किं तु तस्य विशुद्धत्वेनोत्कृष्टस्थित्यबन्धकत्वात्तस्या एव चेह प्रकृतत्वान्नासौ गृह्यतेऽतस्तीर्थकरनामकर्मोत्कृष्टस्थितिबन्धकत्वान्मिथ्यात्वाभिमुखस्यैव ग्रहणमिति। तथा आहारकद्विकमाहारकशरीराहारकांगोपांगलक्षणं 'पमत्तु त्ति' प्रमत्तसंयतोऽप्रमत्तभावान्निवर्तमान इति विशेषो दृश्यः, उत्कृष्टस्थितिकं बध्नाति। अशुभा हीयं स्थितिरित्युत्कृष्टसंक्लेशेनैवोत्कृष्टा बध्यते, तद्बन्धकश्च प्रमत्तयतिरप्रमत्तभावान्निवर्तमान एवोत्कृष्टसंक्लेशयुक्तो लभ्यत इतीत्थं विशिष्यते। तथाऽमरायुर्देवायुष्कं प्रमत्तसंयतः पूर्वकोट्यायुरप्रमत्तभावाभिमुखो वेद्यमानपूर्वकोटीलक्षणायुषो भागद्वये गते सति तृतीयभागस्याद्यसमये उत्कृष्टस्थितिकं पूर्वकोटित्रिभागाधिकत्रयस्त्रिंशत्सागरोपमलक्षणं बध्नाति, पूर्वकोटीत्रिभागस्य द्वितीयादिषु समयेषु

१ तीर्थकरनामापि मनुष्योऽविरतसम्यग्दृष्टिः समर्जयति।

बध्नतो नोत्कृष्ट लभ्यते, अबाधाया परिगलितत्वेन मध्यमत्वप्राप्तेरित्याद्यसमयग्रहणम् । अप्रमत्तभावाभिमुखताविशेषण तर्हि किमर्थमिति चेदुच्यते–शुभेय स्थितिर्विशुद्ध्या बध्यते सा चौत्कृष्टाऽप्रमत्तभावाभिमुखस्यैव लभ्यत इति । तर्ह्यप्रमत्त एव कस्मादेतद्बन्धकत्वेन नोच्यत इति चेदुच्यते–अप्रमत्तस्यायुर्बन्धारम्भनिषेधात् "देवाउय पमत्तो" इति वचनात् प्रमत्तेनै-वारब्धमायुर्बन्धमप्रमत्त॰ कदाचित्समर्थयते "देवाउय च, इक नायव्व अपमत्तमि" इति वचनात् । शेषाणा षोडशोत्तर-शतसख्यप्रकृतीना ज्येष्ठस्थितिमुत्कृष्टस्थिति मिथ्यादृष्टि सर्वपर्याप्तिपर्याप्तः सर्वसक्लिष्टो बध्नाति । यत स्थितिरशुभा सक्लेशप्रत्यया च, सक्लिष्टश्च बन्धकेषु मध्ये मिथ्यादृष्टिरेव भवतीति भाव । अत्र च प्रायोवृत्त्या सर्वसक्लिष्टत्वमुच्यते यावता तिर्यङ्मनुष्यायुषी उत्कृष्टे तत्प्रायोग्यविशुद्धो बध्नातीति द्रष्टव्यम्, तयो॰ शुभस्थितिकत्वेन विशुद्धिजन्यत्वात् । उक्त च–"सव्वठिईण उक्कोसओ उ उक्कोससकिलेसेण । विवरीए य जहन्नो आउगतिगवज्ज सेसाणं ति ॥ १ ॥" ननु यदि विशुद्धित इदमायुष्कद्वय बध्यते, तर्हि मिथ्यादृष्टे॰ सकाशात् सास्वादनो विशुद्धतर प्राप्यते, स कस्मादेतद्बन्धक-त्वेन नोक्त ? न च वक्तव्य तिर्यङ्मनुष्यायुषी सास्वादनो न बध्नाति, तद्बन्धस्य सप्ततिकोटिष्वस्यानुज्ञानात्तथा चोक्त-मायु सवेधभगकावसरे सप्ततिटीकाया–"तिर्यगायुषो बन्धो मनुष्यायुष उदयस्तिर्यङ्मनुष्यायुषी सती" एष विकल्पो मि-थ्यादृष्टे सास्वादनस्य वा, मनुष्यायुषो बन्धो मनुष्यायुष उदयो मनुष्यमनुष्यायुषी सती, एषोऽपि विकल्पो मिथ्यादृष्टे सास्वादनस्य वा" तत्कथमुक्त "मिच्छद्दिट्ठी बधइ जिट्ठठिई सेसपयडीण" इति ? । अत्र प्रतिविधीयते–सत्यामपि हि

१ देवायुष्क प्रमत्त. । २ देवायुश्चैक ज्ञातव्य अप्रमत्ते । ३ सर्वस्थितिषूत्कृष्टा तूत्कृष्टसक्लेशेन । विपरीते च जघन्य आयुष्कत्रिकवर्जाणा शेषाणाम् ।

सामान्यतो मनुष्यतिर्यगायुर्बंधानुज्ञायामसंख्येयवर्षायुष्कयोग्यमुत्कृष्टं प्रस्तुतायुर्द्वयं सास्वादनो न निवर्तयति, सास्वादनस्य गुणप्रतिपाताभिमुखत्वेन गुणाभिमुखविशुद्धमिथ्यादृष्टेः सकाशाद्विशुद्ध्याधिक्यस्यानवगम्यमानत्वात् , शास्त्रान्तरेऽपि च मिथ्यादृष्टेः सकाशादविरतादय एव यथोत्तरमनन्तगुणविशुद्धाः पठ्यन्ते, न सास्वादनः । न चैतन्निजमनीषिकाशिल्पिकल्पितं, यदाहुः श्रीशिवशर्मसूरिपूज्याः–सव्वुक्कोसठिईणं मिच्छद्दिट्ठी उ बंधओ भणिओ । आहारगतित्थयरं देवाउं वा वि मुत्तूणं ॥ १ ॥" ४२ ॥

इह पूर्वं संक्लिष्टो मिथ्यादृष्टिः षोडशोत्तरप्रकृतिशतस्योत्कृष्टस्थितिबन्धकः सामान्येनैवोक्तः, स च नारकादिभेदेन चिन्त्यमानश्चतुर्धा भवति, ततो नारकास्तिर्यंचो मनुष्या देवाश्च मिथ्यादृष्टयः पृथक्केषां कर्मणां स्थितीरुत्कृष्टा बध्नन्तीति भेदतश्चिन्तयन्नाह—

**विगलसुहुमाउगतिगं तिरिमणुया सुरविउव्विनिरयदुगं । एगिंदिथावरायव आईसाणा सुरुक्कोसं ॥ ४३ ॥**

टीका–त्रिकशब्दस्य प्रत्येकं संबन्धाद्विकलत्रिकं द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिलक्षणं,सूक्ष्मत्रिकं सूक्ष्मापर्याप्तसाधारणरूपं, आयुस्त्रिकं देवायुर्वर्जनारकतिर्यङ्मनुष्यायुर्लक्षणं। द्विकशब्दस्यापि प्रत्येकं संबन्धात् सुरद्विकं सुरगतिसुरानुपूर्वीस्वरूपं, वैक्रियद्विकं वैक्रियशरीरवैक्रियांगोपांगलक्षणं, नरकद्विकं नरकगतिनरकानुपूर्वीलक्षणमित्येतासां पंचदशप्रकृतीनामुत्कृष्टां स्थितिं तिर्यङ्मनुष्या एव मिथ्यादृष्टयो बध्नन्ति न देवनारकाः, देवनारका ह्येतासां मध्ये तिर्यङ्मनुष्यायुर्द्वयं मुक्त्वा

---

१ सर्वोत्कृष्टस्थितीनां मिथ्यादृष्टिरेव बंधको भणितः । आहारकं तीर्थकरं देवायुष्कं च मुक्त्वा ।

शेषास्त्रयोदशप्रकृतीर्भवप्रत्ययेनैव न बध्नन्ति, तिर्यङ्मनुष्यायुषोरपि देवकुर्वादिप्रायोग्य उत्कृष्टस्त्रिपल्योपमलक्षण स्थितिबन्ध प्रकृतस्तत्र च देवनारका भवप्रत्ययादेव नोत्पद्यन्ते इत्येतद्बन्धोऽप्यमीषां न सम्भवति, तस्मादेते तिर्यङ्मनुष्यायुषी उत्कृष्टस्थितिके पूर्वकोट्यायुषस्तिर्यङ्मनुष्या मिथ्यादृष्टयस्तत्प्रायोग्यविशुद्धा स्वायुस्त्रिभागाद्यसमये वर्तमाना बध्नन्ति, सम्यग्दृष्टेरतिविशुद्धमिथ्यादृष्टेश्च देवायुर्बन्ध स्यादिति मिथ्यादृष्टित्वतत्प्रायोग्यविशुद्धत्वविशेषणद्वयं, नारकायुष पुनरेत एव तत्प्रायोग्यसक्लिष्टा वाच्या अत्यन्तशुद्धस्यात्यन्तसक्लिष्टस्य चायुर्बन्धस्य सर्वथा निषेधादिति। नरकद्विकवैक्रियद्विकयोस्त्वेत एव सर्वसंक्लिष्टा पूर्वोक्तोत्कृष्टस्थितेर्बन्धका वाच्या, विकलजातित्रिकसूक्ष्मत्रिकयोस्तु तत्प्रायोग्यसक्लिष्टा द्रष्टव्या, अतिसक्लिष्टा हि प्रस्तुतप्रकृतिबन्धमुल्लङ्घ्य नरकप्रायोग्यमेव निर्वर्तयेयु, विशुद्धास्तु विशुद्धितारतम्यात्पञ्चेन्द्रियतिर्यक्प्रायोग्यं वा मनुष्यप्रायोग्य वा देवप्रायोग्य वा रचयेयुरिति तत्प्रायोग्यसक्लेशग्रहणम्। देवद्विकस्यापि तत्प्रायोग्यसक्लिष्टा द्रष्टव्या, अतिसंक्लिष्टानामधोवर्तिमनुष्यादिप्रायोग्यबन्धप्रसङ्गात्, विशुद्धौ पुनरुत्कृष्टबन्धाभावादिति। भाविता पञ्चदशापि प्रकृतय। तथैकेन्द्रियजातिस्थावरनामातपनामलक्षणस्य प्रकृतित्रिकस्य आ ईशानात् ईशानदेवलोकमभिव्याप्य सुरा देवा। कोऽर्थ? भवनपतयो व्यन्तरा ज्योतिष्का सौधर्मेशानदेवा 'उक्कोस ति' उत्कृष्टा स्थिति बध्नन्ति। तथाहि—ईशानादुपरितनदेवा नारकाश्चैकेन्द्रियेषु नोत्पद्यन्त इत्येकेन्द्रियप्रायोग्याण्येतानि न बध्नन्त्येवेति तन्निषेध। तिर्यङ्मनुष्यास्त्वेतावति संक्लेशे वर्तमाना एतद्बन्धमतिक्रम्य नरकप्रायोग्यमेव बध्नन्तीति तेषामपि निषेध। ईशानान्तास्तु देवा सर्वसंक्लिष्टा अप्येकेन्द्रियप्रायोग्यमेव बध्नन्त्यतस्त एव स्थावरैकेन्द्रियातपलक्षणप्रकृतित्रयस्य विंशतिसागरोपमकोटाकोटीलक्षणामुत्कृष्टस्थितिं बध्नन्तीति ॥४३॥

तिरिउरलदुगुज्जोयं छिवट्ठसुरनिरयसेसचउगइया। आहारजिणमपुव्वोऽनियट्टिसंजलणपुरिसलहुं॥४४॥

टीका—द्विकशब्दस्य प्रत्येकं संबन्धात्तिर्यग्द्विकं तिर्यग्गतितिर्यगानुपूर्वीरूपं, औदारिकद्विकमौदारिकशरीरौदारिकांगोपांगलक्षणं, उद्योतनाम, सेवार्तसंहनननाम, इत्येतासां षण्णां प्रकृतीनामुत्कृष्टस्थितिं सुरनारका बध्नन्ति । सर्वत्र विभक्तिलोपः प्राकृतत्वात् न मनुष्यतिर्यंचः, ते हि तद्बन्धार्हसंक्लेशे वर्तमाना एतासां षट्प्रकृतीनामुत्कृष्टतोऽप्यष्टादशकोटीकोटीलक्षणां मध्यमां स्थितिमुपरचयन्ति। अथाप्यधिकसंक्लेशे वर्तमाना गृह्यन्ते तर्हि प्रस्तुतप्रकृतिबन्धमतिक्रम्य नरकप्रायोग्यमुपरचयेयुः, देवनारकास्तु सर्वोत्कृष्टसंक्लेशा अपि तिर्यग्गतिप्रायोग्यमेव बध्नन्ति, न नरकगतिप्रायोग्यम्, तत्र तेषामुत्पत्त्यभावात्, तस्माद्देवनारका एव सर्वसंक्लिष्टाः प्रस्तुतप्रकृतिषट्कस्य विंशतिसागरोपमकोटाकोटीलक्षणामुत्कृष्टां स्थितिं रचयन्ति । अत्र च सामान्योक्तावपि सेवार्तसंहननौदारिकांगोपांगलक्षणप्रकृतिद्वयस्योत्कृष्टस्थितिबन्धका देवा ईशानादुपरितनसनत्कुमारादय एव द्रष्टव्या नेशानान्ता देवाः, ते हि तत्प्रायोग्यसंक्लेशे वर्तमानाः प्रकृतप्रकृतिद्वयस्योत्कृष्टतोऽप्यष्टादशकोटीकोटीलक्षणां मध्यमामेव स्थितिं रचयन्ति। अथ सर्वोत्कृष्टसंक्लेशा गृह्यन्ते तर्ह्येकेन्द्रियप्रायोग्यमेव निर्वर्तयेयुः। न चैकेन्द्रियप्रायोग्यबन्धे एते प्रकृती बध्येते, तेषां संहननोपांगाभावात् , "सुरा नेरइया एगिंदिया य सव्वे असंघयणा" इति वचनात् । सनत्कुमारादिदेवाः पुनः सर्वसंक्लिष्टा अपि पंचेन्द्रियतिर्यक्प्रायोग्यमेव बध्नन्ति नैकेन्द्रियप्रायोग्यं, तेषामेकेन्द्रियेषूत्पत्त्यभावात् , तस्मात्प्रस्तुतप्रकृतिद्विकस्य विंशतिसागरोपमकोटीकोटीलक्षणामुत्कृष्टस्थितिं सर्वसंक्लिष्टाः

---

१ सुरा नैरयिका एकेन्द्रियाश्च सर्वेऽसंहननाः ।

सनत्कुमारादय एव बध्नन्ति नाधस्तना देवा इति। तदेवं जिननामाहारकद्विकदेवायुर्विकलत्रिकसूक्ष्मत्रिकायुष्कत्रिकदेवद्विकवैक्रियद्विकनरकद्विकैकेन्द्रियजातिस्थावरनामातपनामतिर्यग्द्विकौदारिकद्विकोद्योतनामसेवार्तसंहननलक्षणानामष्टाविंशतिप्रकृतीनामुत्कृष्टस्थितिबन्धस्वामिन उक्ता, शेषप्रकृतीनां तु का वार्तेत्याशङ्क्याह–'सेस चउगइय त्ति' भणिताष्टाविंशतिप्रकृतिभ्यः शेषाणां द्विनवतिसंख्यप्रकृतीनां मिथ्यादृष्टयश्चतुर्गतिका अप्युत्कृष्टां स्थितिं बध्नन्ति, तत्रैतासु मध्ये वर्णचतुष्कतैजसकार्मणागुरुलघुनिर्माणोपघातभयजुगुप्सामिथ्यात्वकषायषोडशकज्ञानावरणपंचकदर्शनावरणनवकान्तरायपंचकलक्षणाया सप्तचत्वारिंशतो ध्रुवबन्धिप्रकृतीनां पूर्वव्यावर्णितस्वरूपाणां, तथाऽध्रुवबन्धिनीनामपि मध्येऽसातारतिशोकनपुंसकवेदपंचेन्द्रियजातिहुण्डसंस्थानपराघातोच्छ्वासाशुभविहायोगतित्रसबादरपर्याप्तप्रत्येकास्थिराशुभदुःस्वरदुर्भगानादेयायशःकीर्तिनीचैर्गोत्रलक्षणानां च विंशतेः प्रकृतीनां सर्वोत्कृष्टसंक्लेशेनोत्कृष्टां स्थितिं चतुर्गतिका अपि मिथ्यादृष्टयो बध्नन्ति, शेषाणां त्वध्रुवबन्धिनीनां सातहास्यरतिस्त्रीपुंवेदमनुष्यद्विकसेवार्तवर्जसंहननपंचकहुण्डकवर्जसंस्थानपंचकप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्युच्चैर्गोत्रलक्षणानां पंचविंशतिप्रकृतीनां तद्बन्धकेषु तत्प्रायोग्यसंक्लिष्टाश्चतुर्गतिका अपि मिथ्यादृष्टय उत्कृष्टां स्थितिं बध्नन्तीति। उक्ता उत्कृष्टस्थितिबन्धस्वामिनः, अथ जघन्यस्थितिबन्धस्वामिन आह–'आहारजिणमपुव्वो' इत्यादि, आहारकद्विकं, जिननाम, 'लहु त्ति' लघुस्थितिकं जघन्यस्थितिकं करोतीति शेषः। क इत्याह–'अपुव्व त्ति' पदैकदेशे पदसमुदायोपचारादपूर्वोऽपूर्वकरणक्षपकस्तद्बन्धस्य चरमस्थितिबन्धे वर्तमानः स्थितिमाश्रित्येत्यर्थः, तद्बन्धकेष्वस्यैवातिविशुद्धत्वात्, तिर्यङ्मनुष्यदेवायुर्वर्जकर्मणां च जघन्यस्थितेर्विशुद्धिप्रत्ययत्वात्।

तथा 'अनियट्टिसंजलण पुरिसलहुं ति' संज्वलनानां क्रोधमानमायालोभलक्षणानां चतुर्णां पुरुषवेदस्य च 'लहुं ति' लघुस्थितिं जघन्यस्थितिबन्धं 'अनियट्टि त्ति' अनिवृत्तिबादरक्षपकस्तद्बन्धस्य यथास्वं चरमस्थितिबन्धे वर्तमानः करोति-तद्बन्धकेष्वस्यैवातिविशुद्धत्वादिति ॥ ४४ ॥

**सायजसुच्चावरणाविग्घं सुहुमो विउव्विछअसन्नी । सन्नी वि आउबायर|पज्जेगिंदिउ सेसाणं ॥ ४५ ॥**

टीका–सातं सातवेदनीयं, 'जस त्ति' यशःकीर्तिनाम, 'उच्च त्ति' उच्चैर्गोत्रं, 'आवरणं ति' ज्ञानावरणपंचकं दर्शनावरणचतुष्कं, विघ्नमन्तरायपंचकं, 'सुहुम त्ति' सूक्ष्मसंपरायः क्षपकश्चरमस्थितिबन्धे वर्तमानो लघुस्थितिकं करोति, तद्बन्धकेष्वस्यैवातिविशुद्धत्वात् । 'विउव्विछअसन्नि त्ति' वैक्रियषट्कं नरकद्विकवैक्रियद्विकदेवद्विकलक्षणं, असंज्ञी तिर्यक्पंचेन्द्रियः सर्वपर्याप्तिभिः पर्याप्तो लघुस्थितिकं करोति । किमुक्तं भवति ? वैक्रियषट्कं हि नामप्रकृतयः, नाम्नश्च द्वौ सप्तभागौ पल्योपमासंख्येयभागोनौ एकेन्द्रियाणां जघन्या स्थितिः प्रतिपादिता, सा च सहस्रगुणिता सागरोपमसप्तभागसहस्रद्वयप्रमाणा वैक्रियषट्कस्य जघन्या स्थितिर्भवति, वैक्रियषट्कस्य च जघन्यस्थितिबन्धका असंज्ञिपंचेन्द्रिया एव नैकेन्द्रियादयः, ते चासंज्ञिपंचेन्द्रिया जघन्यां स्थितिमेतावतीमेव बध्नन्ति न न्यूनामपि, यदुक्तम्–"वेउव्वियछक्के सहसताडियं जं असण्णिणो तेसिं । पलियासंखंसूणं ठिई अबाहूणियनिसेगा ॥ १ ॥" अस्या अक्षरगमनिका–"वग्गुक्कोसठिईणं मिच्छत्तुक्कोसियाइ" इत्यनेन करणेन यल्लब्धं तत्सहस्रताडितं सहस्रगुणितं ततः पल्योपमासंख्येयांशेन भागेन न्यूनं सद्वैक्रियषट्के देवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियशरीरवैक्रियांगोपांगलक्षणे जघन्यस्थितेः परिमाणमवसेयम् । कुत इत्याह–यद्यस्मात्कारणात्तेषां

वैक्रियषट्कलक्षणानां कर्मणामसंज्ञिपंचेन्द्रिया एव जघन्यस्थितिबन्धकास्ते च जघन्यां स्थितिमेतावतीमेव बध्नन्ति न न्यूनां, अन्तर्मुहूर्तमबाधा, अबाधाहीना च कर्मस्थितिः कर्मदलिकनिषेक इति। किं चैताः षट् प्रकृतयो यथासंख्यं नरकदेवलोकप्रायोग्या बध्यन्ते, तत्र च देवनारकासंज्ञिमनुष्यैकेन्द्रियविकलेन्द्रिया नरकेषु देवलोकेषु (च) नोत्पद्यन्त एवेति तेषामेतद्बन्धासम्भवः, तिर्यङ्मनुष्यास्तु संज्ञिनः स्वभावादेव प्रकृतप्रकृतिषट्कस्य स्थितिं मध्यमामुत्कृष्टां वा कुर्वन्तीति तेऽपीहोपेक्षिताः। 'सन्नी वि आउ त्ति' संज्ञी, अपिशब्दादसंज्ञी गृह्यते, ततः संज्ञ्यसंज्ञी वा आयुश्चतुःप्रकारमपि जघन्यस्थितिकं करोति, तत्र देवनारकायुषो पंचेन्द्रियतिर्यङ्मनुष्याः, मनुष्यतिर्यगायुषो पुनरेकेन्द्रियादयो जघन्यस्थितिकर्तारो द्रष्टव्याः। उक्ताः पंचत्रिंशत्प्रकृतीनां जघन्यस्थितिबन्धस्वामिनः, शेषाणामाह–'बायरपज्जेगिंदि उ सेसाणं ति' शेषाणां भणितोद्धरितानां निद्रापंचकासातवेदनीयानन्तानुबन्धिचतुष्काप्रत्याख्यानावरणचतुष्कप्रत्याख्यानावरणचतुष्कनपुंसकवेदस्त्रीवेदहास्यादिषट्कमिथ्यात्वमनुष्यगतितिर्यग्गतिजातिपंचकौदारिकशरीरौदारिकाङ्गोपाङ्गतैजसकार्मणसंहननषट्कसंस्थानषट्कवर्णचतुष्कमनुजानुपूर्वीतिर्यगानुपूर्वीप्रशस्ताप्रशस्तविहायोगतिपराघातोच्छ्वासातपोद्योतागुरुलघुनिर्माणोपघातत्रसनवकस्थावरदशकनीचैर्गोत्रलक्षणानां पंचाशीतेः प्रकृतीनां बादरः पर्याप्तस्तद्बन्धकेषु सर्वविशुद्ध एकेन्द्रियः पल्योपमासंख्येयभागहीनसागरोपमद्विसप्तभागादिकां जघन्यां स्थितिं करोति। अन्ये ह्येकेन्द्रियास्तथाविधविशुद्ध्यभावात् बृहत्तरां स्थितिमुपकल्पयन्ति, विकलेन्द्रियपंचेन्द्रियेषु शुद्धिरधिकापि लभ्यते केवलं तेऽपि स्वभावादेव प्रस्तुतप्रकृतीनां महतीं स्थितिमुपरचयन्तीति शेषपरिहारेण यथोक्तैकेन्द्रियस्यैव ग्रहणमिति ॥ ४५ ॥

प्रतिपादितं जघन्यस्थितिबन्धमाश्रित्य स्वामित्वं, अथ स्थितिबन्ध एवोत्कृष्टानुत्कृष्टादिभंगकान् विचारयितुमाह—

**उक्कोसजहन्नेयर भंगा साई अणाइ धुव अधुवा। चउहा सग अजहन्नो सेसतिगे आउचउसु दुहा॥४६॥**

टीका—बन्धशब्दः प्रक्रमाल्लभ्यते तत उत्कृष्टबन्धः जघन्यबन्धः, 'इयर त्ति' उत्कृष्टबन्धप्रतिपक्षोऽनुत्कृष्टबन्धः, जघन्यबन्धप्रतिपक्षोऽजघन्यबन्धः, एते चत्वारो भंगाः। तत्र यतोऽन्यो बृहत्तरबन्धो नास्ति स उत्कृष्टबन्धः, ततोऽधस्तात् समयहानिमादौ कृत्वा यावज्जघन्यबन्धस्तावत्सर्वोऽप्यनुत्कृष्टबन्ध इत्युत्कृष्टानुत्कृष्टप्रकाराभ्यां सर्वे स्थितिविशेषाः संगृहीताः। यस्मादन्यो हीनतरबन्धो नास्ति स जघन्यबन्धः, ततः परं समयवृद्धिमादौ कृत्वा यावदुत्कृष्टस्तावत्सर्वोऽप्यजघन्यबन्ध इति जघन्याजघन्यप्रकाराभ्यां वा सर्वेऽपि स्थितिविशेषाः संगृहीताः। अथवाऽन्यथा बन्धस्य चत्वारो भंगाः, तद्यथा—सादिबन्धः, अनादिबन्धः, ध्रुवबन्धः, अध्रुवबन्धश्चेति। तत्र यः पूर्वं व्यवच्छिन्नः पश्चात् पुनरपि भवति स सादिर्बन्धः, यस्त्वनादिकालात्सन्तानभावेन प्रवृत्तो न कदाचिद्व्यवच्छिन्नः सोऽनादिबन्धः, यः पुनरग्रेऽपि न कदाचिद्व्यवच्छेदं प्राप्स्यति सोऽभव्यसंबन्धी बन्धो ध्रुवः, यः पुनरायत्यां कदाचिद्व्यवच्छेदं प्राप्स्यति स भव्यसंबन्धी बन्धोऽध्रुवबंधो भवति। एवं 'चउहा सग अजहन्नु त्ति' 'सग त्ति' सप्तानां मूलप्रकृतीनां ज्ञानावरणदर्शनावरणवेदनीयमोहनीयनामगोत्रान्तरायलक्षणानां संबन्धिन्यो याः स्थितयस्तासां यो जघन्यो जघन्यबन्धः स चतुर्धा चतुर्विकल्पः सादिरनादिर्ध्रुवोऽध्रुवश्चेति। तथाहि—एतासां प्रकृतीनां मध्ये मोहनीयस्य क्षपकानिवृत्तिबादरचरमस्थितिबन्धे जघन्यः स्थितिबन्धः प्राप्यते, शेषप्रकृतिषट्कस्य तु क्षपकसूक्ष्मसंपरायचरमस्थितिबन्धेऽसौ लभ्यते, ततोऽन्यः सर्वोऽप्युपशमश्रेणावप्यजघन्यो

भवति, उपशमकस्यापि क्षपकात् द्विगुणबन्धकत्वादजघन्य एव भवतीति भाव । ततश्चोपशान्तमोहावस्थायामजघन्य-
बन्धस्याबन्धको भूत्वा यदा प्रतिपत्य पुनरपि प्रस्तुतप्रकृतिसत्कस्याजघन्य बध्नाति तदाऽजघन्यबन्ध सादिर्भवति,
बन्धव्यवच्छेदानन्तर तत्प्रथमतया बध्यमानत्वात् । उपशान्तमोहाद्यवस्थाया चाप्राप्तपूर्वाणा बन्धव्यवच्छेदाभावेनानादि-
कालान्निरन्तर बध्यमानत्वादनादि , अभव्याना ध्रुवोऽभाविपर्यन्तत्वात्, भव्यानामध्रुवो भाविपर्यन्तत्वात् । 'सेसतिगे
आउचउसु दुह त्ति' शेषत्रिके जघन्योत्कृष्टानुत्कृष्टलक्षणे एतासा मूलप्रकृतीना बन्धो 'दुह त्ति' सादिरध्रुवश्च भवति ।
तथा हि–एतासा प्रकृतीना मध्ये मोहनीयस्य क्षपकानिवृत्तिबादरचरमस्थितिबन्धे, शेषाणा तु क्षपकसूक्ष्मसपरायचरम-
स्थितिबन्धे जघन्यो बन्धोऽनन्तरमेवोक्त , स चाबद्धपूर्वोऽजघन्यबन्धादवतीर्य तत्प्रथमतया तस्मिन्नेव समये बध्यत
इति सादिस्तत: पर क्षीणमोहाद्यवस्थाया सर्वथा न भवतीत्यध्रुव इति द्वावेव विकल्पौ सम्भवतो न शेषौ । उत्कृष्टस्तु
त्रिंशत्सागरोपमकोटीकोट्यादिक सर्वसक्लिष्टमिथ्यादृष्टिपर्याप्तसज्ञिपचेन्द्रिये लभ्यते, स चानुत्कृष्टबन्धादवतीर्य कदा-
चिदेव बध्यते न सर्वदेति सादि , अन्तर्मुहूर्ताच्च पर नियमादनुत्कृष्ट बध्नतोऽसौ निवर्तत इत्यध्रुव , उत्कृष्टाच्च प्रतिप-
त्यानुत्कृष्ट बध्नातीत्यनुत्कृष्टोऽपि सादि:, तत पर जघन्यतोऽन्तर्मुहूर्तेन उत्कृष्टतस्त्वनन्तोत्सर्पिण्यवसर्पिणीपर्यन्ते पुन-
रुत्कृष्ट बध्नतोऽनुत्कृष्टो निवर्तत इत्यध्रुव । इत्येवमुत्कृष्टानुत्कृष्टेषु जीवा परिभ्रमन्तीति द्वयोरप्यनादिध्रुवत्वासम्भव ।
'आउचउसु दुह त्ति' आयुश्चतुष्टये द्विप्रकारो द्विविकल्पः सादिरध्रुवश्च बन्धो भवतीत्यर्थः । आयुषो हि उत्कृष्टादि-

न्धो वेद्यमानायुषस्त्रिजागादौ प्रतिनियतकाल एव बध्यमानत्वात्सादिः, अन्तर्मुहूर्ताच्च परमवश्यमुपरमत इत्य-
ध्रुव इति ॥ ४६ ॥

**चउभेओ अजहन्नो संजलणावरण नवग विग्घाणं। सेसतिगि साइअधुवो, तह चउहा सेसपयडीणं ॥४७॥**

टीका—संज्वलनानां क्रोधमानमायालोभलक्षणानां चतुर्णामावरणनवकस्य ज्ञानावरणपंचकदर्शनावरणचतुष्कलक्षणस्य विघ्नानां पंचानां दानलाभभोगोपभोगवीर्यान्तरायलक्षणानां संबन्धी अजघन्यो बन्धश्चतुर्भेदः साद्यनादिध्रुवाध्रुवलक्ष-णश्चतुर्विकल्पो भवति । तथाहि—एतासामष्टादशप्रकृतीनां पूर्वोक्तयुक्तित एवोपशमश्रेणौ बन्धव्यवच्छेदं कृत्वा प्रतिपत्य पुनरजघन्यं बध्नतः सादिस्तद्बन्धः, तत्स्थानमप्राप्तपूर्वस्यानादिः, ध्रुवोऽभव्यानां, अध्रुवो भव्यानामिति सर्वमिह पूर्ववदेव भावनीयम् । एतासामेव प्रकृतीनां 'सेसतिगि साइअधुवु त्ति' शेषत्रिके जघन्योत्कृष्टानुत्कृष्टलक्षणे सादिरध्रुवश्च द्विविधो भवति । तथाहि—संज्वलनचतुष्टयस्य क्षपकानिवृत्तिबादरगुणस्थाने आत्मीयात्मीयबन्धव्यवच्छेदसमये जघन्यो बन्धो ज्ञा-नावरणपंचकदर्शनावरणचतुष्कान्तरायपंचकलक्षणानां चतुर्दशप्रकृतीनां सूक्ष्मसंपरायचरमस्थितिबन्धे जघन्यः । स च तत्प्रथमतया बध्यमानत्वात्सादिस्तत ऊर्ध्वं न भवतीत्यध्रुवः, उत्कृष्टानुत्कृष्टेष्वप्यारोहणावतरणे कुर्वतां जन्तूनां साद्य-ध्रुवत्वं तथैव भावनीयमिति । 'तह चउहा सेसपयडीणं ति' शेषप्रकृतीनां भणिताष्टादशप्रकृतिभ्यः उद्धरितानां ह्युत्त-रशतसंख्यानां प्रकृतीनां चतुर्धा उत्कृष्टानुत्कृष्टजघन्याजघन्यलक्षणश्चतुर्विकल्पः 'तह त्ति' सादिरध्रुवश्च भवति । तथा हि—निद्रापंचकमिथ्यात्वप्रथमद्वादशकषायभयजुगुप्सातैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणलक्षणानामेकोनत्रिं-

शत प्रकृतीना सर्वविशुद्धबादरपर्याप्तैकेन्द्रियो जघन्यस्थितिबन्ध विदधाति, ततोऽन्तर्मुहूर्त सक्लिष्टो जूत्वाऽजघन्यबन्ध करोति, ततस्तत्रैव जवे जवान्तरे वा विशुद्धिमासाद्य पुनरपि स एव जघन्यबन्ध निर्मापयतीत्येव जघन्याजघन्ययो परावृत्तिर्जवतीति द्वावप्येतौ जघन्याजघन्यौ साद्यध्रुवौ जवत', उत्कृष्ट बन्ध पुनरेतासां सर्वसक्लिष्टपचेन्द्रियो विद-धाति, अन्तर्मुहूर्ताच्च पुनरपि अनुत्कृष्टबन्ध विरचयति, तत' पुनरपि कदाचिदुत्कृष्टमित्येव परावृत्तिवशात एतावपि साद्यध्रुवौ जवत शेपाणामध्रुवबन्धिनीनामौदारिकद्विकवैक्रियद्विकाहारकद्विकसस्थानषट्कसहननषट्कजातिपंचकगतिचतुष्क-विहायोगतिद्विकानुपूर्वीचतुष्टयजिननामोच्छ्वासनामोद्योतनामातपनामपराघातत्रसदशकस्थावरदशकोच्चैर्गोत्रनीचैर्गोत्रसाता-सातवेदनीयहास्यरत्यरतिशोकवेदत्रिकायुश्चतुष्टयलक्षणाना त्रिसप्ततिप्रकृतीना जघन्यादिस्थितिबन्ध सर्वोऽप्यध्रुवबन्धि-त्वादेव सादिरध्रुवश्चेति ॥ ४७ ॥

निरूपिता स्थितिबन्धे साद्यादिजगा , अधुना स्थितिमेव सामान्यतो गुणस्थानकेषु चिन्तयन्नाह—

**साणाइअपुव्वंते अयरंतोकोडिकोडीउं न हिगो । बधो न हु हीणो न य मिछे जवियरसंनिंमि ॥ ४८ ॥**

टीका–प्राकृतत्वान्निर्देशस्य ( साणाइ त्ति ) सास्वादनमादौ यस्य तत् सास्वादनादि, अपूर्वकरणमन्ते यस्य गुणस्थानक-कदम्बकस्य तदपूर्वान्त, सास्वादनादि च तदपूर्वान्त च सास्वादनाद्यपूर्वान्त तस्मिन् सास्वादनाद्यपूर्वान्ते गुणस्थानकक-दम्बकेऽतराणा सागरोपमाणामन्तर्मध्ये कोटीकोट्यतरान्त कोटीकोटी तस्या अतरान्त कोटीकोटीत' " ( ७-२ ८४ आद्या-दिभ्यस्ति ) आद्यादेराकृतिगणत्वात्तस्प्रत्यय• " न नैवाधिको बन्धो जवति, किं तु मिथ्यादृष्टेरेव जवतीति सामर्थ्या-

गम्यते। इदमुक्तं भवति—सास्वादनादीनामपूर्वकरणान्तानां भिन्नग्रन्थिकत्वात् सागरोपमान्तःकोटीकोटीरूपैव स्थिति-र्युज्यते, न तु परतोऽपि। ननु भिन्नग्रन्थिकानप्याश्रित्य सप्ततिसागरोपमकोटाकोटीप्रमाणो मिथ्यात्वस्योत्कृष्टः स्थिति-बन्धः कर्मप्रकृत्यादिषु निरूपितस्तत्कथमुच्यते भिन्नग्रन्थिकत्वादन्तःकोटीकोटीरूपैव स्थितिर्युज्यते न परतोऽपि? सत्यम्, अस्ति भिन्नग्रन्थिकानामुत्कृष्टोपि स्थितिबन्धः, केवलं परित्यज्य सम्यक्त्वं मिथ्यादृष्टिगुणस्थानकं प्राप्तानामेवासौ संभ-वति, अत्र तु भिन्नग्रन्थिकानां सास्वादनादीनामेवान्तःसागरोपमकोटीकोटीपरतः स्थितिबन्धो निषिध्यत इत्यदोषः। यत्पुनः "बंधेण न वोलइ कयाई" इति वचनादावश्यकादिषु भिन्नग्रन्थिकस्य मिथ्यादृष्टेरप्युत्कृष्टः स्थितिबन्धः प्रतिषि-ध्यते, तत्सैद्धान्तिकमतमेव, कार्म(ण)ग्रन्थिकाभिप्रायतस्तु भिन्नग्रन्थिभिर्मिथ्यात्वस्योत्कृष्टापि स्थितिर्बध्यते केवलं तथा-विधतीव्रानुभागयुक्ताऽसौ न भवति। ननु सागरोपमान्तःकोटीकोटीतः समर्गलतरः सास्वादनादीनां बन्धो मा भूदध-स्तात्ततो भवति वा न वेत्याह—'न हु' नैव हीनो न्यूनः सागरोपमान्तःकोटीकोटीतः सकाशात् स्थितिबन्धो भवति। एतदुक्तं भवति—सास्वादनादिष्वपूर्वकरणपर्यवसानेषु गुणस्थानकेषु सागरोपमान्तःकोटीकोटीप्रमाणैव स्थितिर्भवति, नाधिका नाप्यूनेत्यर्थः। ननु यदैकेन्द्रियादिः सास्वादनगुणस्थानी भवति तदा सागरोपमत्र्यादिसप्तभागरूपमेव स्थिति-बन्धं विधत्ते, अतः सास्वादनाद्यपूर्वान्तेषु न हु हीनो बन्ध इति कथं घटाकोटीमाटीकते? सत्यमेतत्, केवलं कादा-चित्कोऽसौ न सार्वदिक इति न तस्य विवक्षा कृतेति संभावयामि, अपूर्वकरणात् परतोऽनिवृत्तिकरणादौ सागरोपमान्तः-कोटीकोटीतोऽपि हीनः स्थितिबन्धो भवतीति सामर्थ्याद्गम्यते। अथ किं सास्वादनादिष्वेवान्तःसागरोपमकोटाकोटी-

तो हीन स्थितिबन्धो न लभ्यते, आहोश्विन्मिथ्यादृष्टेरपि प्रतिविशिष्टस्य कस्यचिज्जन्तोरित्याह– 'न य मिच्छे जविय-रसंनिंमि त्ति' न च नैव, 'मिच्छ त्ति' मिथ्यादृष्टौ, सञ्ज्ञिशब्दस्य प्रत्येक सबन्धाज्जव्यश्चासौ सञ्ज्ञी च जव्यसञ्ज्ञी तस्मिन् जव्यसञ्ज्ञिनि, इतरथाजव्य स चासौ संज्ञी चेतरसञ्ज्ञी तस्मिन्नितरसञ्ज्ञिनि अजव्यसञ्ज्ञिनीत्यर्थ । आयुर्वर्जाना सप्ताना कर्मप्रकृतीना सागरोपमान्त कोटीकोटीतो हीनो जवति जव्यसञ्ज्ञी मिथ्यादृष्टिरिति ग्रहणाज्जव्यसञ्ज्ञिन कस्मिश्चिद्गुणस्थानकेऽनिवृत्तिबादरादौ हीनोऽपि बन्धो जवतीत्याचष्टे, संज्ञिग्रहणाच्चाजव्येऽप्यसञ्ज्ञिनि हीन एव प्रतिनियतसप्तजागरूपाया एव प्रागसञ्ज्ञिन प्रतीत्य स्थितेर्जणनात्, अजव्यसञ्ज्ञिनि तु सागरोपमान्त कोटीकोटीतो हीनो बन्धो न भवत्येव, यतो जिन्नग्रन्थिकस्यैव हीनो बन्ध स्यात्, अजव्यसंज्ञी चोत्कृष्टतोऽपि ग्रन्थिप्रदेशमेवाभ्येति, तदनन्तरं ग्रन्थिं प्राप्य जूयोऽपि निवर्तते, निवर्त्य च प्रजूत स्थितिबन्ध करोतीति ॥ ४० ॥ ५९-५१

निरूपित सर्वगुणस्थानकेषु स्थितिबन्ध , साम्प्रतमेकेन्द्रियादिजीवानाश्रित्य स्थितिबन्धानामेवाल्पबहुत्वं गाथात्रयेणाह–

**जइ लहुबंधो बायर पज्ज असंखगुण सुहुमपज्जहिगो। एसिं अपज्जाण लहू सुहुमेअर अपज्जपज्जगुरू ॥**

टीका–सर्वस्तोको यतिलघुबन्धो जघन्यस्थितिबन्ध इत्यर्थ सूक्ष्मसपराये आन्तर्मौहूर्तिक एव जवतीति कृत्वा ॥ १ ॥ ततो यतिलघुस्थितिबन्धाद्बादरपर्याप्तैकेन्द्रियस्य जघन्यस्थितिबन्धोऽसख्यातगुण ॥ २ ॥ तत सूक्ष्मपर्याप्तैकेन्द्रियस्य जघन्यस्थितिबन्धो 'हिगु त्ति' विशेषाधिक ॥ ३ ॥ तत 'एसिं ति' अनयोर्बादरसूक्ष्मयोरपर्याप्तयो । 'लघु त्ति' जघन्यस्थितिबन्धोऽधिको वाच्य । अयमर्थ –तत सूक्ष्मपर्याप्तैकेन्द्रियस्य जघन्यस्थितिबन्धाद्बादरपर्याप्तैकेन्द्रियस्य जघन्य-

स्थितिबन्धो विशेषाधिकः ॥ ४ ॥ ततः सूक्ष्मापर्याप्तैकेन्द्रियस्य जघन्यस्थितिबन्धो विशेषाधिकः ॥ ५ ॥ 'सुहुमेयर अप-ज्जपज्जगुरु त्ति' ततः सूक्ष्मापर्याप्तैकेन्द्रियस्य 'गुरु त्ति' उत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ ६ ॥ तत 'इयरत्ति' बाद-रापर्याप्तैकेन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ ७ ॥ ततः सूक्ष्मपर्याप्तैकेन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ ८ ॥ ततो बादरपर्याप्तैकेन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ ९ ॥ ४९ ॥

**लहु बिय पज्जअपज्जे अपजेयर बियगुरू हिगो एवं। ति चउ असन्निसु नवरं संखगुणो बियअमणपज्जत्ते**

टीका–ततो 'लहु त्ति' लघुर्जघन्यः स्थितिबन्धो 'बिय त्ति' द्वीन्द्रिये 'पज्ज त्ति' पर्याप्ते वाच्यः । कियत्प्रमाण इत्या-ह–'संखगुणो बिय अमणपजत्ते' इति वचनात् संख्यातगुण इत्यर्थः । ततस्तस्मिन्नेवापर्याप्तेऽधिको लघुस्थितिबन्धः, ततोऽपर्याप्तेतरद्वीन्द्रियेषु गुरुः स्थितिबन्धोऽधिको वाच्यः, एवं द्वीन्द्रियोक्तप्रकारेण 'ति त्ति' त्रीन्द्रियेऽपर्याप्तपर्याप्ते लघुस्थितिबन्धौ द्वौ, त्रीन्द्रिये एवापर्याप्तपर्याप्ते द्वौ गुरुस्थितिबन्धौ वाच्यौ । 'चउ त्ति' चतुरिन्द्रियेऽपर्याप्तपर्याप्ते लघु-स्थितिबन्धौ द्वौ, चतुरिन्द्रिये एवापर्याप्तपर्याप्ते गुरुस्थितिबन्धौ द्वौ वाच्यौ । 'असन्निसु त्ति' असंज्ञिनि पर्याप्तापर्याप्ते लघुस्थितिबन्धौ द्वौ, असंज्ञिन्येवापर्याप्तपर्याप्ते गुरुस्थितिबन्धौ द्वौ वाच्यौ । किं प्रमाणाः पुनरेते स्थितिबन्धा वाच्याः ? इत्याह–'अहिगु त्ति' अधिका विशेषाधिका वाच्याः । किं सर्वेऽपि स्थितिबन्धा विशेषाधिका एव वाच्या उताहो कुत्र-चिदस्ति विशेषोऽपीत्याह–'नवरं संखगुणो बिय अमणपजत्ते त्ति' नवरं केवलमियान् विशेषः, संख्यातगुणो वाच्यः, पर्याप्तशब्दस्य प्रत्येकं संबन्धाद्द्वीन्द्रिये पर्याप्ते, असंज्ञिनि पर्याप्ते, अन्यत्र सामर्थ्यात् सर्वत्र विशेषाधिक इति गाथाक्ष-

रार्थः । चायमर्थस्त्वयम्—बादरपर्याप्तैकेन्द्रियोत्कृष्टस्थितिबन्धात् द्वीन्द्रियपर्याप्तस्य जघन्यस्थितिबन्धः सख्येयगुणः ॥ १० ॥ ततोऽपर्याप्तद्वीन्द्रियस्य जघन्यस्थितिबन्धो विशेषाधिकः ॥ ११ ॥ ततोऽपर्याप्तद्वीन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ १२ ॥ ततः पर्याप्तद्वीन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ १३ ॥ ततः पर्याप्तत्रीन्द्रियस्य जघन्यः स्थितिबन्धो विशेषाधिकः ॥ १४ ॥ ततोऽपर्याप्तत्रीन्द्रियस्य जघन्यः स्थितिबन्धो विशेषाधिकः ॥ १५ ॥ ततोऽपर्याप्तत्रीन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ १६ ॥ ततः पर्याप्तत्रीन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ १७ ॥ ततः पर्याप्तचतुरिन्द्रियस्य जघन्यस्थितिबन्धो विशेषाधिकः ॥ १८ ॥ ततोऽपर्याप्तचतुरिन्द्रियस्य जघन्यस्थितिबन्धो विशेषाधिकः ॥ १९ ॥ ततोऽपर्याप्तचतुरिन्द्रियस्योत्कृष्टस्थितिबन्धो विशेषाधिकः ॥ २० ॥ ततः पर्याप्तचतुरिन्द्रियस्योत्कृष्टस्थितिबन्धो विशेषाधिकः ॥ २१ ॥ ततः पर्याप्तासंज्ञिपंचेन्द्रियस्य जघन्यस्थितिबन्धः सख्यातगुणः ॥२२॥ ततोऽपर्याप्तासञ्ज्ञिपचेन्द्रियस्य जघन्यः स्थितिबन्धो विशेषाधिकः ॥ २३ ॥ ततोऽपर्याप्तासञ्ज्ञिपचेन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ २४ ॥ ततः पर्याप्तासञ्ज्ञिपचेन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः ॥ २५ ॥ ५० ॥

**तो जइ जिट्ठो बन्धो संखगुणो देस विरयहस्सियरो।सम्मचउ सन्निचउरो ठिइबधाणुकमसंखगुणा॥५१॥**

टीका—ततो यते सयतस्य ज्येष्ठो बन्धः सख्यातगुणः, ततो देशविरतस्य ह्रस्वो जघन्य इतर उत्कृष्टः । ततः 'सम्मचउ त्ति' सम्यग्दृष्टेश्चत्वार स्थितिबन्धा क्रमेण भवन्ति । तद्यथा—अविरतसम्यग्दृष्टेः पर्याप्तस्य जघन्यस्तस्यैव चोत्कृष्टः स्थितिबन्ध इति द्वौ, एवमपर्याप्तस्यापि द्वौ, मिलिताश्चत्वार इति । 'सन्निचउरु त्ति' सञ्ज्ञिना सञ्ज्ञिपचेन्द्रियाणा मिथ्यादृष्टी-

नामिति सामर्थ्याद्गम्यते चत्वारः स्थितिबन्धाः, तद्यथा—संज्ञिपंचेन्द्रियस्य पर्याप्तस्य जघन्योत्कृष्टभेदाद्द्वौ, एवमपर्याप्तस्यापि जघन्योत्कृष्टभेदाद्द्वावेव स्थितिबन्धाविति सर्वे चत्वारः, एते प्रदर्शितरूपाः सर्वेऽपि स्थितिबन्धा यथा यावद्गुणा भवन्ति तदाह—'ठिइबन्धाणुकमसंखगुण त्ति' स्थितिबन्धाः प्रदर्शितरूपाः अनुक्रमेणोत्तरोत्तरपरिपाट्या संख्यगुणाः संख्येयगुणा भवन्तीत्यक्षरार्थः । भावार्थः पुनरयम्—पर्याप्तसंज्ञिपंचेन्द्रियोत्कृष्टस्थितिबन्धाद्यतेरुत्कृष्टः स्थितिबन्धः संख्येयगुणः ॥ २६ ॥ ततो देशविरतस्य जघन्यस्थितिबन्धः संख्येयगुणः ॥ २७ ॥ ततो देशविरतस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः ॥ २८ ॥ ततोऽविरतापर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः ॥ २९ ॥ ततः पर्याप्ताविरतस्य जघन्यः स्थितिबन्धः संख्येयगुणः ॥ ३० ॥ ततोऽपर्याप्ताविरतस्य उत्कृष्टः स्थितिबन्धः संख्येयगुणः ॥ ३१ ॥ ततः पर्याप्ताविरतस्य उत्कृष्टः स्थितिबन्धः संख्येयगुणः ॥ ३२ ॥ ततोऽपर्याप्तसंज्ञिपंचेन्द्रियस्य जघन्यस्थितिबन्धः संख्येयगुणः ॥ ३३ ॥ ततः पर्याप्तसंज्ञिपंचेन्द्रियस्य जघन्यस्थितिबन्धः संख्येयगुणः ॥ ३४ ॥ ततः संज्ञिपंचेन्द्रियापर्याप्तस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः ॥ ३५ ॥ ततः पर्याप्तसंज्ञिपंचेन्द्रियस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः ॥ ३६ ॥ अथैतद्गाथात्रयोक्ताल्पबहुत्वपदानां सुखावबोधार्थं विनेयजनानुग्रहाय यंत्रकमुपदर्श्यते[1] । तच्चेदम् । अत्र च विशेषानिर्देशेऽपि संयतोत्कृष्टस्थितिबन्धादारभ्य संज्ञिपंचेन्द्रियापर्याप्तोत्कृष्टस्थितिबन्धं यावद्ये केचन स्थितिबन्धा निरूपितास्ते सर्वेऽपि सागरोपमान्तःकोटी-

---

१ ( नात्र न्यस्तं यंत्रकमिदं तदुद्देशसिद्धिश्च क्रमांकन्याससिद्धैव )

कोटीप्रमाणा एवावसेया , कर्मप्रकृत्यादिषु तथैवोक्तत्वात् । सर्वोत्कृष्टस्थितिबन्धस्तु संज्ञिपञ्चेन्द्रियमिथ्यादृष्टेः पर्याप्तस्यैव भवति, नान्यस्य "सव्वाण वि पज्जत्तगउक्कोसं सन्निणो कुणंति ठिइं" इति वचनात् ॥ ५१ ॥

तदेवं स्थितिबन्धस्याल्पबहुत्वद्वारेण स्वामिनश्चिन्तिताः , अधुना कर्मस्थितेरेव शुभाशुभप्ररूपणां प्रत्ययप्ररूपणागर्भामाह-

सव्वाण वि जिट्ठठिई असुहा ज साइसंकिलेसेणं । इयरा विसोहिओ पुण मुत्तुं नरअमरतिरियाउ ॥ ५२ ॥

टीका-सर्वासामपि शुभानामशुभानां च कर्मप्रकृतीनां ज्येष्ठा स्थितिरुत्कृष्टा स्थितिरशुभाऽप्रशस्ता, कुतो हेतोरित्याह-'ज साइसंकिलेसेण त्ति' यद्यस्मात्कारणात्सा ज्येष्ठा स्थितिरतिसंक्लेशेनात्यन्ततीव्रकषायोदयेनोत्कृष्टस्थितिबन्धाऽध्यवसायस्थानकेन जन्तुभिर्बध्यत इति शेषः । ननु कैः स्थितिबन्धाध्यवसायस्थानैरियमुत्कृष्टा स्थितिर्निर्वर्त्यते इति चेदुच्यते-इह ज्ञानावरणादिकर्मणः सर्वजघन्याया अपि स्थितेर्निर्वर्तकानि यथोत्तरं विशेषवृद्धान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि स्थितिबन्धाध्यवसायस्थानानि भवन्ति । एतैश्च सर्वैरप्येकैव जघन्या स्थितिर्नानाजीवानाश्रित्य जन्यते पृथगनेकशक्त्युपेतबहुपुरुषैर्वारावारकेण निर्वर्त्यमानकटाद्येककार्यवत् । ततः समयोत्तरा स्थितिः यानि निर्वर्तयन्ति तान्यपि यथोत्तरं विशेषवृद्धान्यसंख्येयलोकाकाशप्रदेशप्रमाणान्यन्यानि स्थितिबन्धाध्यवसायस्थानानि भवन्ति । केवलं पूर्वेभ्यो विशेषाधिकानि ततो द्विसमयोत्तरां स्थितिं निर्वर्तयन्ति यानि तान्यनन्तरेभ्योऽपि विशेषाधिकानि, त्रिसमयाधिकां तु तां यानि निर्वर्तयन्ति तान्यमीभ्योऽपि विशेषाधिकानि, तामेव चतुःसमयाधिकां यानि निर्वर्तयन्ति तानि तेभ्योऽपि

---

१ सर्वासामपि प्रकृतीनामुत्कृष्टां कुर्वन्ति संज्ञिनः स्थितिम् ।

विशेषाधिकानि, एवं तावन्नेयं यावत्सर्वोत्कृष्टां स्थितिं यानि निर्वर्तयन्ति तान्यपि समयोनोत्कृष्टस्थितिजनकाध्यवसायस्थानेभ्योऽन्यानि विशेषाधिकान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि यथोत्तरं विशेषवृद्धानि स्थितिबन्धाध्यवसायस्थानानि भवन्ति। एतानि स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति। स्थापना। तत्र प्रथमपंक्तावप्यसंख्येयलोकाकाशप्रदेशप्रमाणानि द्रष्टव्यानि, किं त्वसत्कल्पनया चतुःसंख्यात्वेन दर्शितानि, द्वितीयादिपंक्तिषु तान्येव विशेषाधिकानीति पंचादित्वेन दर्शितानि। एताश्चैवं पंक्तयो जघन्यायाः स्थितेरारभ्य यावदुत्कृष्टा स्थितिस्तावद्ये समया भवन्ति तावत्प्रमाणा असंख्येया द्रष्टव्याः, असत्कल्पनया च पंच दर्शिताः, तत्रैतत्स्यात्–इहैकस्थितिजनकान्यध्यवसायस्थानान्यसंख्येयानि परस्परं विचित्राण्यभ्युपगम्यन्ते, तद्वैचित्र्याभ्युपगमे च स्थितेरपि वैचित्र्यं प्राप्नोतीति, तदयुक्तम्–तानि ह्येकस्थितिजनकान्यपि संति क्षेत्रकालानुभागयोगादिवैचित्र्याद्विचित्राण्युच्यन्ते, न स्थितिमाश्रित्य, तेषामेकस्थितिजनकत्वाविशेषेण वैचित्र्यासिद्धेरित्यलमप्रस्तुतेन, प्रस्तुतमुच्यते–इह सर्वोत्कृष्टस्थितिजनकानि चरमपंक्तिनिदर्शितानि यानि स्थितिबन्धाध्यवसायस्थानानि तेषां मध्ये यच्चरममध्यवसायस्थानं तदुत्कृष्टसंक्लेश उच्यते, तेषामेवाद्यमीषदुच्यते, उभयान्तरालवर्तीनि तु मध्यमानि, ततश्चैतैरीषन्मध्यमोत्कृष्टैः स्थितिबन्धाध्यवसायस्थानैरुत्कृष्टा स्थितिर्बध्यते। अथवा चरमस्थितिबन्धाध्यवसायस्थानमुत्कृष्टसंक्लेश उच्यते, शेषाणि तु चरमपंक्तिनिदर्शितानि स्थितिबन्धाध्यवसायस्थानानि ईषन्मध्यमान्युच्यन्ते, तैश्चरमपंक्तिनिदर्शितैः सर्वोत्कृष्टस्थितिजनकैः सर्वैरपि स्थितिबंधाध्यवसायस्थानैरुत्कृष्टा स्थितिर्जन्यत

इति भाव । यदुक्तं बृहच्छतके ज्येष्ठस्थितिबन्धप्रस्तावे—"उक्कोससंकिलेसेणं ईसि अह मज्झिमेणावि ।" ततश्चाय प्रस्तुतार्थः —सर्वासामपि प्रकृतीनां ज्येष्ठा स्थितिरशुभा यस्मात् साऽतिसङ्क्लेशेनात्यन्ततीव्रकषायोदयेन बध्यते । एतदुक्तं भवति—सर्वासां शुभानामशुभानां च प्रकृतीनां स्थितय सङ्क्लेशवृद्धौ वर्धन्ते तदपचये तु हीयन्त इत्यन्वयव्यतिरेकाभ्यां सङ्क्लेशमेव स्थितयोऽनुवर्तन्ते इत्यशुभा अशुभकारणनिष्पन्नत्वात्, अशुभवृक्षाशुभफलवत् । नन्वेवं तर्हि "ठिइ अणुभाग कसायओ कुणइ" इति वचनादनुभागोऽपि कषायप्रत्यय एव, ततोऽयमप्यशुभकारणत्वादशुभ एव प्राप्नोति, अथ च शुभप्रकृतीनामसौ शुभ एवेष्यत इति, नैवमभिप्रायापरिज्ञानात्, यत सत्यपि हि कषायजन्यत्वे कषायवृद्धावनुभागोऽशुभप्रकृतीनामेव वर्धते, शुभानां तु परिहीयत एव, कषायमन्दतया तु शुभप्रकृतीनामेवानुभागो वर्धतेऽशुभप्रकृतीनां तु हीयते इति न कषायमनुवर्तते, स्थितयस्तु शुभानामशुभानां च प्रकृतीनां कषायवृद्धौ नियमाद्वर्धन्ते तदपचये त्वपचीयन्त इत्येकान्तेन कषायान्वयव्यतिरेकानुविधायित्वादशुभा एवेति । यदि वा यथा यथा शुभप्रकृतीनां स्थितिर्वर्धते तथा तथा शुभानुभागस्तत्सम्बन्धी हीयते- परिगालितरसेक्षुयष्टिकल्पानि शुभकर्माणि भवन्तीत्यर्थ । अशुभप्रकृतीनां तु स्थितिवृद्धावशुभरसोऽपि तत्सम्बन्धी वर्धत एवेत्यतोऽपि कारणात् स्थितीनामेवाशुभत्वं, तद्वृद्धेः शुभानुभागक्षयहेतुत्वादशुभानुभागवृद्धिहेतुत्वाच्चेति । ननु ज्येष्ठा स्थिति सङ्क्लेशेन बध्यते, जघन्या तु किंप्रत्ययेत्याह—'इयरा विसोहिओ पुण त्ति' इतरा जघन्या पुनर्विशोधितो विशुद्ध्या कषायापचयरूपया बध्यते । इदमुक्तं भवति—इह ये ये विवक्षितमूलोत्तरप्रकृतीनां बन्धकास्तेषां मध्ये यो य सर्वोत्कृष्टविशुद्धियुक्तः स

१ उत्कृष्टा ( स्थिति ) सङ्क्लेशेनाथ ( च ) ईषन्मध्यमैरपि ।

तत्तद्विवक्षितकर्मस्थितिं जघन्यां बध्नातीति भावः। किं सर्वप्रकृतीनामयमेव न्यायो यदुतोत्कृष्टा स्थितिः संक्लेशेनैव बध्यते अशुभा च भवति, जघन्या पुनर्विशुद्ध्यैव ? नेत्याह–'मुत्तुं नरअमरतिरियाउं ति' आयुःशब्दस्य प्रत्येकं संबन्धान्मुक्त्वा त्यक्त्वा नरायुरमरायुस्तिर्यगायुः। अयमर्थः–नरामरतिर्यगायुषां स्थितिं मुक्त्वा शेषस्थितीनामेवाशुभत्वं द्रष्टव्यम् एतत्स्थितिः पुनः शुभैव भवतीत्यर्थः। विशुद्धिलक्षणस्य तत्कारणस्य शुभत्वात्। मनुष्यतिर्यगायुषोर्हि वृद्धिस्त्रिपल्योपमावसाना, देवायुषस्तु वृद्धिस्त्रयस्त्रिंशत्सागरोपमावसानापि शुभा, विशुद्धिलक्षणस्य तत्कारणस्य शुभत्वात्, विशुद्धितारतम्यादेव च भवति, अतो मनुष्यतिर्यग्देवायुःस्थितिः शुभा, शुभकारणप्रभवत्वात्, शुभद्रव्यनिष्पन्नघृतपूर्णादिद्रव्यवदिति। अथवा प्रस्तुतायुष्कत्रयस्थितिवृद्धौ रसोऽपि वर्धते स च शुभः सुखजनकत्वात्, इत्यतोऽपि प्रस्तुतायुष्कस्थितेः शुभत्वं, तद्वृद्धेः शुभरसवृद्धिहेतुत्वात्। किं च नरामरतिर्यगायुर्लक्षणं प्रकृतित्रयं मुक्त्वा शेषप्रकृतीनां प्रकृष्टसंक्लेशविशुद्धिभ्यां स्थित्युपचयापचयौ द्रष्टव्यौ, प्रस्तुतायुस्त्रयस्य तु तद्बन्धकेषु सर्वोत्कृष्टविशुद्धिरुत्कृष्टस्थितिबन्धं करोति, सर्वसंक्लिष्टस्तु सर्वजघन्यमिति विपरीतं तद्द्रष्टव्यमिति ॥ ५२ ॥

सर्वप्रकृतीनामुत्कृष्टा स्थितिरुत्कृष्टसंक्लेशेन कषायरूपेण बध्यत इत्युक्तं, न च केवलकषायेण स्थितिर्बध्यते किं तर्हि ? योगसहचरितेन, अतस्तं योगं सर्वजीवेष्वल्पबहुत्वद्वारेण चिन्तयन्नाह—

**सुहुमनिगोयाइखणप्पजोगबायरयविगलअमणमणा। अपज्ज लहुपढमदुगुरू पजहस्सियरो असंखगुणो**

टीका–इह योगो वीर्यं स्थामेत्यादिपर्यायाः । तथा चाह–"जोगो विरिय थामो उच्छाह परक्कमो तहा चिट्ठा । सत्ती सामत्थ चिय जोगस्स हवंति पज्जाया ॥ १ ॥" स च योगस्त्रिधा–मनोयोगो वाग्योग काययोगश्चेति । उक्त च कर्मप्रकृतौ–"परिणामालंबणगहणसाहणं तेण लद्धनामतिगं । कज्जब्भासान्नुन्नप्पवेसविसमीकयपएस ॥ १ ॥ अस्याक्षरगमनिका–परिणमनं परिणाम अन्तर्भूतणिगर्थाद् ( ५-३-१३२ व्यजनात् ) घञ् प्रत्यय'=परिणामापादनमित्यर्थ , आलम्ब्यत इत्यालम्बनं ( ५-३-१२४ अनट् ) जावेऽनट्प्रत्ययः, गृहीतिर्ग्रहणं, तेषा साधनं=साध्यतेऽनेनेति साधनं=योगसंज्ञि वीर्यं "करणाधारे ( ५-३-१२९ )" इत्यनट्प्रत्यय । तथाहि–तेन वीर्यविशेषेण=योगसंज्ञितेनौदारिकादिशरीरप्रायोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा च प्राणापानादिरूपतया परिणमयति, परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तानेव पुद्गलानवलम्बते, यथा मन्दशक्ति' कश्चिन्नगरे परिभ्रमणाय यष्टिमवलम्बते, ततस्तदवष्टम्भतो जातसामर्थ्यविशेष सन् तान् प्राणापानादिपुद्गलान् विसृजतीति परिणामालम्बनग्रहणसाधनं वीर्यं, तेन च वीर्येण योगसंज्ञिकेन मनोवाक्कायावष्टम्भतो जायमानेन 'लद्धनामतिगं ति' लब्ध नामत्रिकं मनोयोगो वाग्योग' काययोग इति । तत्र मनसा करणभूतेन योगो मनोयोग , वाचा योगो वाग्योग', कायेन योग. काययोग । स्यादेतत्–सर्वेषु जीवप्रदेशेषु तुल्यक्षायोपशमिक्यादिलब्धिभावेऽपि किमिति कचित् स्तोक कचित्प्रभूत कचित्स्तोकतरमित्येवं वैषम्येण वीर्यमुपलभ्यते ? इत्यत आह—'कज्जेत्यादि' यदर्थं चेष्टते तत्कार्यं तस्याभ्यास अभ्यसनमभ्यास "असूङ्" भ्यासादि ( असूच् क्षेपणे ३ ) त्यस्याभिपू-

१ योगो वीर्यं स्थाम उत्साह पराक्रमस्तथा चेष्टा । शक्ति सामर्थ्यं चैव योगस्य भवन्ति पर्याया ।

र्वस्य घञंतस्य प्रयोगः कार्यान्यासः कार्यस्यासन्नता निकटीभवनमित्यर्थः। तथा जीवस्य प्रदेशानामन्योऽन्यं परस्परं प्रवेशः शृंखलावयवानामिव परस्परं संबन्धविशेषः ताभ्यां कृत्वा विषमीकृताः सुप्रभूताल्पाल्पतरसद्भावतो विसंस्थुलीकृताः प्रदेशा येन वीर्येण तत्कार्यान्यासान्योन्यप्रवेशविषमीकृतप्रदेशं। तथाहि—येषामात्मप्रदेशानां हस्तादिगतानामुत्पाद्यमानघटादिलक्षणकार्यनैकट्यं तेषां प्रभूततरा चेष्टा, दूरस्थानामंसादिगतानां स्वल्पा, दूरतरस्थानां तु पादादिगतानां स्वल्पतरा, अनुभवसिद्धं चैतत्। अपि च लोष्ठादिना निर्घाते सति यद्यपि सर्वप्रदेशेषु युगपद्वेदनोपजायते तथापि येषामात्मप्रदेशानामभिघातकलोष्ठादिद्रव्यनैकट्यं तेषां तीव्रतरा वेदना, शेषाणां तु मन्दा, मन्दतरा, तथेहापि जीवप्रदेशेषु परिस्पन्दात्मकं वीर्यमुपजायमानं कार्यद्रव्यान्यासवशतः केषुचित्प्रभूतमन्येषु मन्दमपरेषु मन्दतमं भवति। एतच्चैवं जीवप्रदेशानां परस्परं संबन्धविशेषे भवति नान्यथा, यथा शृंखलावयवानां, तथाहि—तेषां शृंखलावयवानां परस्परं संबन्धविशेषे सति एकस्मिन्नवयवे परिस्पन्दमानेऽपरेऽप्यवयवाः परिस्पन्दन्ते केवलं केचित् स्तोकमपरे तु स्तोकतरमिति, संबन्धविशेषाभावे त्वेकस्मिंश्चलति नापरस्यावश्यंभावि चलनं, यथा गोपुरुषयोः। तस्मात्कार्यद्रव्यान्यासवशतो जीवप्रदेशानां परस्परं संबन्धविशेषतश्च वीर्यं जीवप्रदेशेषु केषुचित्प्रभूतमन्येषु स्तोकमपरेषु तु स्तोकतरमित्येवं वैषम्येणोपजायमानं न विरुध्यत इत्यलं विस्तरेण, प्रकृतं प्रस्तुमः—तत्र सूक्ष्मनिगोदस्य सूक्ष्मसाधारणस्य लब्ध्यपर्याप्तकस्य सर्वजघन्यवीर्यस्येति च सामर्थ्यात् दृश्यं, तस्यैव सर्वजघन्ययोगस्य प्राप्यमाणत्वादादिक्षणः प्रथमोत्पत्तिसमयः सूक्ष्मनिगोदादिक्षणस्तत्र, सप्तम्येकवचनलोपः प्राकृतत्वात्। किमित्याह—'अप्पजोग त्ति' अल्पः सर्वस्तोको योगो वीर्यं व्यापार इति यावत्। ततो

वादरस्य, 'विगल त्ति' विकलत्रिकस्य, 'अमण त्ति' असज्ञिन', 'मण त्ति' संज्ञिन', 'अपज्ज त्ति' प्रत्येकं सवन्धात् सूक्ष्मादीना सप्तानामप्यपर्याप्ताना 'लहु त्ति' जघन्यो योगोऽसख्येयगुणो वाच्य , आदिक्रण इत्यपि सर्वत्र वाच्य, तत प्रथमद्विकस्यापर्याप्तसूक्ष्मनिगोदवादरलक्षणस्य गुरुरुत्कृष्टो योगोऽसख्येयगुणो वाच्यः, तत' प्रथमद्विकस्य 'पजहस्सियरो असखगुण त्ति' पर्याप्तस्य ह्रस्वो जघन्य इतर उत्कृष्टयोगो यथाक्रममसंख्येयगुणो वाच्य इति गाथाक्षरार्थ । भावार्थ स्त्वयम्–सूक्ष्मनिगोदस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योग सर्वस्तोक ॥ १ ॥ ततो वादरैकेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुण ॥ २ ॥ ततो द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसख्येयगुण ॥ ३ ॥ ततस्त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसख्येयगुण ॥ ४ ॥ ततश्चतुरिन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुण' ॥ ५ ॥ ततोऽसज्ञिपचेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुण' ॥ ६ ॥ तत सज्ञिपचेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसख्येयगुण ॥ ७ ॥ ततः सूक्ष्मनिगोदस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसख्येयगुण ॥ ८ ॥ ततो वादरैकेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसख्येयगुण ॥ ९ ॥ ततः सूक्ष्मनिगोदस्य पर्याप्तकस्य जघन्यो योगोऽसख्येयगुण' ॥ १० ॥ ततो वादरैकेन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसख्येयगुण ॥ ११ ॥ तत. सूक्ष्मनिगोदस्य पर्याप्तकस्योत्कृष्टो योगोऽसख्येयगुण' ॥ १२ ॥ ततो वादरैकेन्द्रियस्य पर्याप्तकस्योत्कृष्टो योगोऽसख्येयगुण ॥ १३ ॥ ५२ ॥

असमत्ततसुक्कोसो पज्जजहन्नियरु एव ठिइठाणा। अपजेयरसंखगुणा परमपजबिए असंखगुणा ॥५४॥

टीका–असमाप्ता अपर्याप्तास्ते च ते त्रसाश्च द्वीन्द्रियादयोऽसमाप्तत्रसा अपर्याप्तद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिपंचेन्द्रियास्तेषामुत्कृष्टोऽसमाप्तत्रसोत्कृष्टोऽसंख्येयगुणो वाच्यः। अयमर्थ–पर्याप्तबादरैकेन्द्रियोत्कृष्टयोगात् द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ १४ ॥ ततस्त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ १५ ॥ ततश्चतुरिन्द्रियस्य लब्ध्यपर्याकस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ १६ ॥ ततोऽसंज्ञिपंचेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ १७ ॥ ततः संज्ञिपंचेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ १८ ॥ 'पज्जजहन्नियरु त्ति' ततस्त्रसानां पर्याप्तानां जघन्यो योगोऽसंख्येयगुणो वाच्यः, ततोऽपि 'इयरु त्ति' त्रसानां पर्याप्तानामुत्कृष्टो योगोऽसंख्येयगुणो वाच्य इत्यक्षरार्थः। भावार्थस्त्वयम्–ततः संज्ञिपंचेन्द्रियस्य लब्ध्यपर्याप्तकोत्कृष्टयोगात्पर्याप्तद्वीन्द्रियस्य जघन्यो योगोऽसंख्येयगुणः ॥ १९ ॥ ततस्त्रीन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः ॥ २० ॥ ततश्चतुरिन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः ॥ २१ ॥ ततोऽसंज्ञिपंचेन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः ॥ २२ ॥ ततः संज्ञिपंचेन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः ॥ २३ ॥ ततः पर्याप्तद्वीन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ २४ ॥ ततः पर्याप्तत्रीन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ २५ ॥ ततः पर्याप्तचतुरिन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ २६ ॥ ततः पर्याप्तासंज्ञिपंचेन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ २७ ॥ ततः पर्याप्तसंज्ञिपंचेन्द्रियस्योत्कृष्टो योगोऽसंख्येयगुणः ॥ २८ ॥ ततः पर्याप्तसंज्ञ्युत्कृष्टयोगादनुत्तरोपपातिनामुत्कृष्टो योगोऽसंख्येयगुणः ॥ २९ ॥ ततो ग्रैवे-

२५५५ मुनिजनों गुरुजनों

यकदेवानामुत्कृष्टो योगोऽसंख्येयगुण॰ ॥ ३० ॥ ततो योगभूमिजाना तिर्यङ्मनुष्याणामुत्कृष्टो योगोऽसख्येयगुण॰ ॥३१॥ ततोऽप्याहारकशरीरिणामुत्कृष्टो योगोऽसख्येयगुण ॥३२॥तत॰ शेषदेवनारकतिर्यङ्मनुष्याणा यथोत्तरमुत्कृष्टयोगोऽसख्येय-गुण ॥३३॥ अथ सुखाववोधाय अल्पवहुत्वपदाना यंत्रकमुपदर्श्यते, तच्चेदम्–। गुणकारश्चात्रापि सूक्ष्मक्षेत्रपल्योपमासख्येय भागरूप॰प्रत्येक ग्राह्यस्तदत्र जघन्ययोगी जघन्यकर्मप्रदेशग्रहण जघन्यस्थिति च विदधाति, योगवृद्धौ च तद्वृद्धिरपीति स्थित-मिति । 'एव ठिइठाणा' इत्यादि, एव मकारस्य लोप प्राकृतत्वात् पूर्वोक्तयोगप्ररूपणान्यायेन सूक्ष्मैकेन्द्रियादिजीवक्रमे-णैव स्थितीना स्थानानि स्थितिस्थानानि वाच्यानीति शेष । तत्र जघन्यस्थितेरारभ्यैकैकसमयवृद्ध्या सर्वोत्कृष्टनिजस्थि-तिपर्यवसाना ये स्थितिभेदास्ते स्थितिस्थानान्युच्यन्ते । कथ पुनरेतानि वाच्यानीत्याह–'अपजेयर सखगुण त्ति' प्रथम-मपर्याप्तकान् सूक्ष्मवादरैकेन्द्रियादीनुद्दिश्य वाच्यानि । तत 'इयर त्ति' पर्याप्तकान् सूक्ष्मवादरैकेन्द्रियानुद्दिश्य वाच्या-नीति । कियद्गुणानि पुनरेतानीत्याह–सख्यगुणानि, तत्र सख्यान सख्या तामर्हतीति सख्य॰ "दडादिभ्यो य॰ ( सि-६-४-१७० दन्डादेर्य ) " इति यप्रत्यय , तत सख्य सख्येय॰ सख्यात इत्यर्थ , गुणो गुणकारो येषा तानि संख्यगुणानि सख्यातगुणितानीत्यर्थ । किं सर्वपदेषु सख्यातगुणान्येव ? आहोश्विदस्ति कस्मिंश्चित्पदे विशेष ? इत्याह–'परमपज्जविए अस-खगुण त्ति' परं केवलमपर्याप्तद्वीन्द्रियेऽपर्याप्तद्वीन्द्रियपदे तानि स्थितिस्थानान्यसख्यगुणान्यसख्यातगुणितानि वाच्यानि एत-दुक्त भवति–सूक्ष्मैकेन्द्रियस्यापर्याप्तकस्य स्थितिस्थानानि स्तोकानि ॥ १ ॥ ततो वादरैकेन्द्रियस्यापर्याप्तकस्य स्थितिस्थानानि सख्यातगुणानि ॥ २ ॥ तत सूक्ष्मैकेन्द्रियस्य पर्याप्तस्य स्थितिस्थानानि सख्यातगुणानि ॥ ३ ॥ ततो वादरैकेन्द्रियस्य पर्याप्तस्य

स्थितिस्थानानि संख्यातगुणानि ॥ एतानि च पल्योपमासंख्येयज्ञागसमयतुल्यानि स्थितिस्थानानि ज्ञवन्ति, यत एकेन्द्रियाणां जघन्योत्कृष्टस्थित्योरन्तरालमेतावन्मात्रमेवेति ॥ ४ ॥ ततोऽपर्याप्तस्य द्वीन्द्रियस्य स्थितिस्थानान्यसंख्यातगुणानि पल्योपमसंख्येयज्ञागमात्राणीति कृत्वा ॥ ५ ॥ ततस्तस्यैव द्वीन्द्रियस्य पर्याप्तस्य स्थितिस्थानानि संख्यातगुणानि ॥ ६ ॥ ततस्त्रीन्द्रियस्यापर्याप्तस्य स्थितिस्थानानि संख्यातगुणितानि ॥ ७ ॥ ततस्त्रीन्द्रियस्य पर्याप्तस्य स्थितिस्थानानि संख्यातगुणितानि ॥ ८ ॥ ततश्चतुरिन्द्रियस्यापर्याप्तस्य स्थितिस्थानानि संख्यातगुणितानि ॥ ९ ॥ ततः पर्याप्तचतुरिन्द्रियस्य स्थितिस्थानानि संख्यातगुणानि ॥ १० ॥ ततोऽसंज्ञिपंचेन्द्रियस्यापर्याप्तस्य स्थितिस्थानानि संख्यातगुणानि ॥ ११ ॥ ततोऽसंज्ञिपंचेन्द्रियस्य पर्याप्तस्य स्थितिस्थानानि संख्यातगुणानि ॥ १२ ॥ ततः संज्ञिपंचेन्द्रियस्यापर्याप्तस्य स्थितिस्थानानि संख्यातगुणितानि ॥ १३ ॥ ततः संज्ञिपंचेन्द्रियस्य पर्याप्तस्य स्थितिस्थानानि संख्यातगुणितानि ज्ञवन्ति ॥ १४ ॥ स्थापना ॥ ५४ ॥

तदेवं निरूपितानि योगप्रसंगेन स्थितिस्थानानि, संप्रति योगप्रक्रम एवापर्याप्तावस्थायां वर्तमाना जन्तवः प्रतिसमयं यावत्या योगवृद्ध्या वर्धन्ते तन्निरूपणार्थमाह—

**पइखणमसंखगुणविरिय अपज पइठिइमसंखलोगसमा॥अप्पवसाया अहिया सत्तसु आउसु असंखगुणा**

टीका—'अपज त्ति' अपर्याप्ता असमर्थितचतुर्थ्यादिपर्याप्तयो जीवा ज्ञवन्ति किंज्जूता इत्याह—प्रतिक्षणं प्रतिसमयं

असख्यगुणवीर्या असंख्यातगुणयोगा । यथोक्तम्–"सव्वो वि (वी) अपजत्तो पइरकण असखगुणा(णिया)ए । जोगवुड्ढीए(ऽ) वड्ढइ" अपर्याप्ताना योगवृद्धिमभिधाय साम्रत प्राग्दर्शितानि स्थितिस्थानानि यैरध्यवसायैर्जन्यन्ते, ते एकैकस्मिन् स्थितिबन्धे जनकतया यावन्तो भवन्ति तदेतन्निरूपयन्नाह–'पइठिइमसखलोगसमा' इत्यादि, स्थितिं स्थिति प्रति प्रतिस्थिति वीप्साया "योग्यतावीप्सार्थानतिवृत्तिसादृश्ये" ( ३-१ ४० ) इत्यव्ययीभाव । तत स्थितिबन्धे स्थितिबन्धेऽध्यवसाया स्तीव्रतीव्रतरतीव्रतममन्दमन्दतरमन्दतमकषायोदयविशेषा भवन्ति । कियन्तो भवन्तीत्याह–असंख्यलोकसमा असख्ये-यलोकाकाशप्रदेशप्रमाणा । ननु किमेतेऽध्यवसाया सर्वप्रकृतीना सर्वस्थितिबन्धेष्वपि तुल्या आहोश्विदस्ति कश्चित्प्र-तिनियतो विभाग इत्याह–'अहिया सत्तसु त्ति' अधिका विशेषाधिका सप्तस्वायुर्वर्जसप्तकर्मसु । ऽयमत्र भावना–ज्ञाना-वरणस्य जघन्यस्थितावसख्येयलोकाकाशप्रदेशतुल्या' स्थितिबन्धाध्यवसाया स्तोका । ततो ज्ञानावरणस्यैव द्वितीय-स्थितौ विशेषाधिका । ततो ज्ञानावरणस्य तृतीयस्थितौ विशेषाधिका । ततो ज्ञानावरणस्य चतुर्थस्थितौ विशेषाधिका. । एवं यावदुत्कृष्टस्थितौ विशेषाधिका । एवमायुष्कवर्जाना दर्शनावरणवेदनीयमोहनीयनामगोत्रान्तरायकर्मणामपि द्वितीयादिस्थितिबन्धादारभ्य विशेषाधिकत्वमध्यवसायस्थानाना तावन्नेय यावदुत्कृष्ट. स्वकीयः स्वकीय' स्थितिबन्ध इति । तर्ह्यायुष्केषु स्थितिबन्धेऽध्यवसाया. कियद्वृद्ध्या भवन्तीत्याह–'आउ असखगुण त्ति' आयु'षु चतुर्ष्वप्यसख्यातगुणिता अध्यवसाया भवन्ति । तद्यथा–आयुष्काणा चतुर्णामपि जघन्यस्थितावसख्येयलोकाकाशप्रदेशप्रमाणा अध्यवसायाः

१ सर्वोऽपि अपर्याप्त प्रतिक्षणमसख्यगुणया योगवृद्ध्या वर्धते ।

सर्वस्तोकाः। तेषामेव द्वितीयस्थितौ अध्यवसाया असंख्यातगुणाः। तेषामेव तृतीयस्थितावध्यवसाया असंख्यातगुणाः। तेषामेव चतुर्थस्थितावध्यवसाया असंख्यातगुणाः। एवमसंख्यातगुणत्वं तावन्नेयं यावदायुषश्चरमस्थितिरिति ॥ ५५ ॥

प्ररूपिताः स्थितिबन्धमाश्रित्य सर्वकर्मणामध्यवसायाः, संप्रति यासां प्रकृतीनामेकचत्वारिंशत्संख्यानां पंचेन्द्रियेषु यावन्तं कालमुत्कृष्टतो बन्धो न भवति तास्तत्कालमानप्रदर्शनद्वारेण गाथाद्वयेन प्रतिपादयन्नाह—

**तिरिनरयतिजोयाणं नरभवजुय सचउपल्ल तेसठं। थावरचउइगविगलायवेसु पणसीइसयमयरा॥५६॥**

टीका—तिर्यंचश्च नरकाश्च तेषां 'ति त्ति' त्रिकं तच्च 'जोय त्ति' उद्योतं च तिर्यङ्नरकत्रिकोद्योतानि तेषां तिर्यङ्नरकत्रिकोद्योतानां। इह त्रिकशब्दः प्रत्येकमभिसंबध्यते, ततस्तिर्यक्त्रिकं तिर्यग्गतितिर्यगानुपूर्वीतिर्यगायुर्लक्षणं, नरकत्रिकं नरकगतिनरकानुपूर्वीनरकायुःस्वरूपं, उद्योतं, इत्येतासां सप्तप्रकृतीनाम्। किमित्याह—'नरभवजुय सचउपल्ल तेसठं ति' नराणां मनुष्याणां भवा जन्मानि नरभवास्तैर्युतं सहितं नरभवयुतं, विभक्तिलोपश्च प्राकृतत्वात्, सह चतुर्भिः पल्योपमैर्वर्तत इति सचतुःपल्यं 'तेसठं ति' त्रिषष्ट्याधिकं शतमतराणां, कोऽर्थः? नरभवयुतं चतुःपल्योपमाधिकं त्रिषष्ट्यधिकं सागरोपमशतं पंचेन्द्रियेषु परमाऽबन्धस्थितिरासां प्रस्तुतसप्तप्रकृतीनां भवतीति द्वितीयगाथोत्तरार्धेन संबन्धः कार्यः। अयमभिप्रायः—यदा किल कश्चिज्जन्तुस्त्रिपल्योपमायुष्केषु देवकुर्वादिषु युगलधार्मिकेषु समुत्पन्नस्तत्र चैताः सप्त प्रकृतीर्न बध्नाति, एता हि नारकतिर्यक्प्रायोग्या एव बध्यन्ते, युगलधार्मिकाश्च देवप्रायोग्या एव बध्नन्ति। ततः पर्यन्तान्तर्मुहूर्ते सम्यक्त्वमासाद्य पल्योपमस्थितिषु देवेषूत्पन्नस्तत्रापि सम्यक्त्वप्रत्ययादेता न बद्धवांस्ततोऽपरिपतितस-

म्यक्त्वो मनुष्येपूत्पद्य दीक्षामनुपाल्य नवमग्रैवेयके त्रिदश एकत्रिंशत्सागरोपमस्थितिकः समुत्पन्नस्ततोऽन्तर्मुहूर्तोर्ध्वं मिथ्यात्वं जगाम, अग्रे षट्षष्टिद्वय सम्यक्त्वकालो वक्तव्यः सचात्र सम्यक्त्वावसाने सति न सगच्छत इति मिथ्यात्वगमनमभिधीयते। तत्र च वर्तमानो मिथ्यादृष्टिरपि भवप्रत्ययादेवैता प्रकृतीर्न बध्नाति, तदनु पर्यतान्तर्मुहूर्ते सम्यग्दर्शनमवाप्याप्रतिपतितसम्यक्त्वो मनुष्येपूत्पद्य सर्वविरतिं परिपाल्य तथैव गृहीतसम्यक्त्वो वारद्वयं विजयादिगमनेन षट्षष्टिसागरोपमाणि पूरयित्वा मनुष्येष्वन्तर्मुहूर्तं सम्यग्मिथ्यात्वमनुभूय तदन्तरित द्वितीयषट्षष्टिप्रमाण सम्यग्दर्शनकालं वारत्रयमच्युतगमनेन पूरयति। इह च सम्यक्त्वात्प्रच्युतस्य मिश्रगमनं यदुच्यते तत्कार्मग्रन्थिकाभिप्रायेण समतमेवेति, सैद्धान्तिकाना तु न समतमिति। उक्त च-"मिच्छत्ता सकती अविरुद्धा होइ सम्ममीसेसु। मीसाओ वा दोसु सम्मा मिच्छं न उण मीस ति॥ १॥" सर्वत्र च सम्यग्दर्शनमिश्रयोर्वर्तमान एता प्रकृतीर्न बध्नातीत्यनेन क्रमेणासा तिर्यक्त्रिकनरकत्रिकोद्योतलक्षणससप्रकृतीना नरभवयुत चतु पल्योपमाधिकं त्रिषष्ठ्यधिकसागरोपमशतं परमा प्रकृष्टा पचेन्द्रियेष्वबन्धस्थितिरबन्धकाल इति। उक्त च-"पलियाइ तिन्नि भोगावणिंमि भवपच्चय पलियमेगं। सोहम्मे सम्मत्तेण नरभवे

१ मिथ्यात्वात्सक्रान्तिरविरुद्धा भवति सम्यक्त्वमिश्रयो। मिश्रादपि द्वयोः सम्यक्त्वान्मिथ्यात्वे न पुनर्मिश्रे। २ पल्यानि त्रीणि भोगावनौ भवप्रत्यय पल्यमेक सौधर्मे सम्यक्त्वेन नरभवे सर्वविरत्या॥ १॥ मिथ्यात्वी भवप्रत्ययात् ग्रैवेयके एकत्रिंशत्सागराणि। अतर्मुहूर्तोनानि सम्यक्त्व तस्मिँल्लब्ध्वा॥ २॥ विरतिमन्नरभवान्तरितोऽनुत्तरसुरस्त्वतराणि षट्षष्टिं। मिश्र मुहूर्तमेक स्पृष्ट्वा मनुष्य, पुनर्विरत॥ ४॥ षट्षष्टिं सागराणा अच्युते विरतिमन्नरभवान्तरित। तिर्यङ्नरत्रिकोद्योताना एष कालोऽबन्धे॥ ४॥

सव्वविरईए ॥ १ ॥ मिच्छो भवपच्चयउ गेविज्जे सागराइ इगतीसं । अंतमुहुत्तूणाइं सम्मत्तं तम्मि लहिऊणं ॥ २ ॥ विरय-नरभवंतरिउ अणुत्तरसुरो उ अयर छावट्ठा । मिस्सं मुहुत्तमेगं फासिय मणुउ पुणो विरउ ॥ ३ ॥ छावट्ठी अयराणं अच्चुयए विरयनरभवंतरिउ । तिरिनिरयतिगुज्जोयाण एस कालो अबंधम्मि ॥ ४ ॥" स्थावरचतुष्कं स्थावरसूक्ष्मापर्याप्तसाधारणलक्षणं, 'इग त्ति' एकेन्द्रियजातिः, विकला द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातयः, आतपं, एतेषां द्वन्द्वः, तेषु एतासु नवसु प्रकृतिषु पंचाशीत्यधिकं शतं पंचाशीतिशतं 'अतर त्ति' न तीर्यन्ते बहुकालतरणीयत्वादतराणि सागरोपमाणि, षष्ठ्यर्थे चात्र प्रथमा, यतः प्राकृते हि विभक्तीनां व्यत्ययोऽपि भवति, यदाह पाणिनिः स्वप्राकृतलक्षणे—"व्यत्ययोऽप्यासामिति" तेषामतराणं नरभवयुतं सचतुःपल्यमित्यत्रापि संबन्धनीयं, ततश्चतुःपल्योपमाधिकं पंचाशीत्यधिकं सागरोपमशतं नरभवयुतमासामबन्धस्थितिः परमा । अयमर्थः—यथा किल कश्चिज्जन्तुस्तमोऽभिधानायां षष्ठपृथिव्यां द्वाविंशतिसागरोपमाणि भवप्रत्ययादेताः प्रकृतीरबद्ध्वा पर्यन्तान्तर्मुहूर्ते सम्यक्त्वमासाद्य मनुष्येषूत्पद्य देशविरतिमासाद्य चतुःपल्योपमस्थितिषु देवेषु देवत्वमनुभूयाप्रतिपतितसम्यक्त्व एव मनुष्येषूत्पद्य संपूर्णं संयमं परिपाल्य नवमग्रैवेयक एकात्रिंशत्सागरोपमस्थितिकः सुरसद्मजन्मा समजनि तत्र चान्तर्मुहूर्तोर्ध्वं मिथ्यात्वं जगाम, पुनरेव तत्र वर्तमानो मिथ्यादृष्टिरपि भवप्रत्ययादेवैताः प्रकृतीर्न बध्नाति । तदनु पर्यन्तान्तर्मुहूर्ते सम्यक्त्वमवाप्याप्रतिपतितसम्यक्त्वो मनुष्येषूत्पद्य सर्वविरतिमनुपाल्य तथैव गृहीतसम्यक्त्वो वारद्वयं विजयादिगमनेन षट्षष्टिसागरोपमाणि सम्यक्त्वकालं पूरयित्वा मनुष्येष्वन्तर्मुहूर्तं सम्यग्मिथ्यात्वमनुभूय तदन्तरितं द्वितीयं षट्षष्टिसागरप्रमाणं सम्यक्त्वकालं वारत्रयमच्युतगमनेन पूरयति ।

तदेव नरजन्मसहित चतु पल्योपमाधिक पचाशीत्यधिक सागरोपमशतमासा स्थावरचतुष्टयैकेन्द्रियविकलेन्द्रियजात्या- तपलक्षणाना नवाना प्रकृतीना पचेन्द्रियेष्वेवावन्धस्थिति परमा जवति । तथा चावाचि–"छ्ठीए नेरईउ जवपच्चयउ उ अयरवावीस । देसविरउ उ जविउ पलियचउक पढमकप्पे ॥ १ ॥ पुव्वुत्तकालजोगो पचासीय सय सचउपह्व । आयवथावरचउविगलतियगएगिन्दिय अवधो ॥ २ ॥" ॥ ५६ ॥

अपढमसंघयणागिइखगइअणमिच्छदुजगथीणतिगंनिय नपुइत्थि दुतीसं पणिंदिसु अवधठिइ परमा५७

टीका–अप्रथमशब्दस्य प्रत्येकं सवन्धादप्रथमसहननानि ऋषजनाराचनाराचार्धनाराचकीलिकासेवार्तसहननलक्षणानि पच, अप्रथमा आकृतय' सस्थानानि न्यग्रोधपरिमण्डलसादिवामनकुब्जहुडस्वरूपाणि, अप्रथमखगतिरप्रशस्तविहायोगति, 'अण त्ति' अनन्तानुवन्धिन क्रोधमानमायालोजलक्षणाश्चत्वार, मिथ्यात्वं, त्रिकशब्दस्य प्रत्येक सवन्धाद्दुर्जगत्रिक दुर्जगदु स्वरानादेयस्वजाव, स्त्यानर्द्धित्रिक निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिरूपं, 'निय त्ति' नीचैर्गोत्र, 'नपु त्ति' नपु- सकवेद, स्त्रीवेद, इत्येतासा पचविशतिप्रकृतीना नरजवसहित 'दुतीस त्ति' द्वात्रिंशद्धतमतराणा जवतीति शेष । एतदुक्त जवति–कश्चिज्जन्तु सर्वविरतिमनुपाल्य गृहीतसम्यक्त्वो वारद्वय विजयादिगमनेन षट्षष्टिसागरोपमाणि सम्यग्दर्शनकाल प्रपूर्य मनुष्येष्वन्तर्मुहूर्त सम्यग्मिथ्यात्वमनुजूय तदन्तरित द्वितीयं षट्षष्टिप्रमाणं सम्यग्दर्शनकाल

---

१ षष्ठ्या नैरयिको भवप्रत्ययात्त्वतराणि द्वाविंशति । देशविरतस्तु भूत्वा पल्यचतुष्क प्रथमकल्पे १ पूर्वोक्तकालयोग पचाशीतिं सशता सचतुष्पल्या । आतपस्थावरचतुर्विकलत्रिकैकेंद्रियाणामबन्ध २

कर्षणात्परम उत्कृष्टो भवति, यतो युगलधार्मिकेषु वर्तमानो जन्मत आरभ्य देवप्रायोग्यमिदं प्रकृतिचतुष्टयं पल्योपमत्रयं यावत्सततमेव निरन्तरमेव बध्नातीति भावः। जघन्यतस्तु समयः परावर्तमानत्वादासामपीति ॥ ५८॥

**समयादसंखकालं तिरिदुगनीएसु आउ अंतमुहू। उरलि असंखपरट्टा साइठिई पुव्वकोडूणा ॥५९॥**

टीका—समयोऽत्यन्तसूक्ष्मः कालांशः, स च समयप्रसिद्धात्पट्टसाटिकापाटनदृष्टान्तादुत्पलपत्रशतवेधोदाहरणाद्वाऽवसेयः। तस्मात्समयादारभ्य समयमादौ कृत्वा एकोत्तरसमयवृद्ध्या तावत्सततं बन्धकालो नेयो यावदसंख्येयकाल इति। तत्रासंख्यः संख्यातिक्रान्तः समयपरिभाषितः स चासौ कालश्चासंख्यकालः तमसंख्येयलोकाकाशप्रदेशप्रमाणसमयराशिरूपं यावदित्यर्थः। इह च समयशब्देन जघन्यो बन्धकाल उक्तः, स च सर्वत्र मन्तव्यः, क्वेत्याह—तिर्यग्द्विके तिर्यग्गतितिर्यगानुपूर्वीरूपे, नीचैर्गोत्रे च। द्वन्द्वे च तिर्यग्द्विकनीचैर्गोत्रयोः। अयमाशयः—तिर्यग्गतितिर्यगानुपूर्वीनीचैर्गोत्रलक्षणप्रकृतित्रयमिदं जघन्यतः समयमेकं बध्यते, द्वितीयसमये परावृत्त्य तद्विपक्षस्य बन्धसंभवात्। यदा तु तेजोवायुषु जन्तुरुत्पद्यते तदा भवस्वभावादेवातिसंक्लिष्टे नीचैर्गोत्रतिर्यग्द्विक एव बध्नाति, न तद्विपक्षमुच्चैर्गोत्रं मनुजद्विकं वा, अतस्तेजोवायूनां कायस्थितिरूपमसंख्येयकालं यावदासां तिसृणामपि प्रकृतीनां परमः सततबन्धकालः प्राप्यत इति। 'आउ अन्तमुहु त्ति' आयुःषु चतुर्ष्वपि अन्तर्मुहूर्तमेव कालं यावत् परमः सततबन्धकालः, जघन्योऽपि चैतावानेवेति वक्ष्याम इति। तथैकदेशे समुदायोपचारादौदारिक औदारिकशरीरविषयेऽसंख्याः संख्यातिक्रान्ताः 'परट्ट त्ति' परावर्ताः पुद्गलपरावर्ता वक्ष्यमाणस्वरूपाः परमः सततबन्धकाल इति। इहापि जघन्यतः समयमेकं सततबन्धः सवि-

पद्धत्वात्, उत्कृष्टतस्त्वसङ्ख्येयपुद्गलपरावर्ता. । कथ ? यतो व्यावहारिकसत्त्वा अपि स्थावरकायमुपगता. कायस्थित्ये-यन्त काल तिष्ठन्ति । न च तत्र वैक्रियाहारकयोस्तद्विपक्षयोर्बन्धोऽस्तीति तात्पर्यम् । तथा 'सायठिई पुव्वकोडूण त्ति' सातस्य सातवेदनीयस्य स्थिति स्थितिबन्ध सततबन्धकाल परमः पूर्वकोटिरूना न्यूना भवति । इहापि जघन्यत सातस्य समयमेक बन्ध सविपक्षत्वात्, उत्कृष्टतस्तु देशोना पूर्वकोटि॰ सततबन्ध., यतो य कश्चिन्मानव॰ पूर्वको-ट्यायुरष्टवार्षिक सर्वविरतिमादाय नवमवर्षे केवलज्ञानमासादयेत्, सोऽष्टाभिर्वर्षैरूना पूर्वकोटि सातवेदनीय सतत बध्नाति, केवलिनः सातस्यैव बन्धात् । उक्त च-"[1]उवसतखीणमोहा केवलिणो एगविहबन्धा ।" इति ॥ ५९ ॥

जलहिसय पणसीयं परघुस्सासे पणिदितसचउगे। बत्तीसं सुहविहगइपुमसुभगतिगुच्चचउरंसे ॥६०॥

टीका-पराघात चोच्छ्वास च पराघातोच्छ्वास तस्मिन् पराघातोच्छ्वासे, 'पणिदि त्ति' सूचनात्सूत्रमिति कृत्वा पचेन्द्रिय-जातौ, त्रसेनोपलक्षित चतुष्क त्रसचतुष्क तस्मिन् त्रसचतुष्के त्रसबादरपर्याप्तप्रत्येकलक्षणे, प्रभूतकालनिस्तरणीयत्वा जलधय इव जलधय सागरोपमाणि तेषा शत जलधिशत 'पणसीय ति' पचाशीत्यधिक परम सततबन्धकालो भवति। इह च सचतु.पल्यमित्यनिर्देशेऽपि सचतु पल्यमिति व्याख्यान कार्य, यतो यावानेतद्विपक्षस्याबन्धकालस्तावानेवासा बन्धकाल इति । पंचसग्रहादौ चोपलक्षणादिना केनचित्कारणेन यन्नोक्तं तदभिप्राय न विद्म इति । तथा जघन्यत एता अपि समयमेक बध्यन्ते सविपक्षत्वादध्रुवबन्धित्वाच्च, उत्कृष्टतस्तु सचतु पल्य पंचाशीत्यधिकं जलधिशत बन्ध-

---

१ उपशान्तक्षीणमोहा केवलिन एकविधबन्धका ।

कालः । कथं ? षष्ठपृथिव्यामुत्कृष्टस्थितिको द्वाविंशतिसागरोपमाण्यनुभवन्नासां विपक्षबन्धासंभवादेता एव प्रस्तुतसप्त-
प्रकृतीर्बद्धवान्, ततः पर्यन्तान्तर्मुहूर्ते सम्यक्त्वमासाद्य मनुष्यजन्म संप्राप्य देशविरतिरत्नं लब्ध्वा चतुःपल्योपमस्थि-
तिकेषु देवेषु सुपर्वत्वमनुभूयाप्रतिपतितसम्यक्त्व एव मनुष्येषु समुत्पद्य संपूर्णसंयमं च परिपाल्य नवमग्रैवेयकविमाने
एकत्रिंशत्सागरोपमस्थितिको महर्द्धिरमरो भूत्वोत्पादोत्तरकालं मिथ्यात्वोदयवान् भवति, च्यवनकाले च सम्यक्त्वं
प्रतिपद्य षट्षष्टिसागरोपमाण्यच्युतदेवलोके वारत्रयेणानुभवति, पुनरन्तर्मुहूर्तं सम्यग्मिथ्यात्वमनुभूय भूयोऽपि सम्य-
ग्दर्शनमवाप्य विजयादिषु वारद्वयेन पुनः षट्षष्टिसागरोपमाणि समनुभवति, तस्मादेतेषु तमःप्रभापृथिवीप्रभृतिस्थानेषु
पर्यटन् जीवः क्वचिद्भवप्रत्ययात् क्वचिच्च सम्यक्त्वप्रत्ययादेतावन्तं कालमेताः सप्तापि प्रकृतीः सततं बध्नातीति । 'बत्तीसं
ति' द्वात्रिंशदधिकं जलधिशतमिति गम्यते, परमः सततबन्धकाल इति संबन्धः । केत्याह—'सुहविहगइ त्ति' शुभवि-
हायोगतिः, 'पुमत्ति' पुंवेदः, सुभगत्रिकं सुभगसुस्वरादेयलक्षणं, उच्चैर्गोत्रं, 'चउरंस त्ति' चतुरस्रं समचतुरस्रं प्रथमसं-
स्थानं, तत एतेषां समाहारद्वन्द्वः । तत्रेहापि जघन्यतः समयमेकमासां सप्तानां प्रकृतीनां बन्धः, सविपक्षत्वात्, उत्कृ-
ष्टतस्तु द्वात्रिंशं जलधिशतं सततबन्धकालो भवति । तथाहि—किल यदा कश्चिज्जन्तुः सर्वविरतिमनुपाल्य गृहीतस-
म्यक्त्वो वारद्वयं विजयादिगमनेन षट्षष्टिसागरोपमाणि सम्यक्त्वकालं प्रपूर्य मनुष्येष्वन्तर्मुहूर्तं सम्यग्मिथ्यात्वमनुभूय
तदन्तरितं द्वितीयं षट्षष्टिप्रमाणं सम्यग्दर्शनकालं वारत्रयमच्युतदेवलोकगमनेन परिपूरयति तदा सम्यग्दृष्टिर्जन्तुरेता
एव बध्नाति, न पुनरेतत्प्रतिपक्षाः, तासां मिथ्यादृष्टिसास्वादनगुणस्थानकयोर्बन्धव्यवच्छेदादिति ॥ ६० ॥

असुखगइजाइआगिइसंघयणाहारनरयजोयदुगं । थिरसुभजसथावरदसनपुइत्थीदुजुयलमसायं ॥६१॥

टीका–सुशब्द प्रशसाया, न सुरसुरप्रशस्त इत्यर्थ । ततोऽसुशब्द प्रत्येक सबध्यते, ततश्चासुखगतिरप्रशस्तविहायोगति, असुजातय एकद्वित्रिचतुरिन्द्रियजातिलक्षणाश्चतस्र, असुसहननानि ऋषभनाराचादीनि पच, असवाकृतय आकारा सस्थानानि न्यग्रोधपरिमण्डलादय पच, द्विकशब्दस्य प्रत्येक सबन्धादाहारकद्विकमाहारकशरीराहारकागोपागलक्षण, नरकद्विक नरकगतिनरकानुपूर्वीलक्षण, 'जोयदुग ति' उद्योतद्विक उद्योतातपलक्षण "उज्जोयायवपरघाइ त्ति" सज्ञागाथाया पठनात्, स्थिरनाम, शुभनाम, 'जस त्ति' यश कीर्तिनाम, स्थावरदशक प्रतीतमेव, 'नपु त्ति' नपुसकवेद, स्त्रीवेद, द्वयोर्युगलयो समाहारो द्वियुगल हास्यरत्यरतिशोकलक्षण, असातमसातवेदनीयमिति ॥ ६१ ॥

समयादंतमुहुत्तं मणुदुगजिणवइरउरलवंगेसु। तित्तीसयरा परमो अंतमुहु लहू वि आउजिणे ॥ ६२ ॥

टीका–एतासा पूर्वोक्तानामसुखगतिप्रभृत्येकचत्वारिंशत्प्रकृतीना । किमित्याह—समयात् सूक्ष्मकालाशादारभ्यान्तर्मुहूर्त यावदुत्कृष्टतोऽपि सततबन्धो न परतोऽपि । किमुक्त भवति ? समयप्रमाणो जघन्यो बन्धकाल उत्कृष्टश्चान्तर्मुहूर्तप्रमाण, यत समयादन्तर्मुहूर्ताद्चोत्तरकालमासामध्रुवबंधित्वेनावश्य परावृत्ते सद्भावात्सगच्छत एव यथोक्तकाल इति । तथा 'मणुदुग ति' मनुजद्विक मनुजगतिमनुजानुपूर्वीरूप, जिननाम, 'वइर त्ति' वज्रऋषभनाराचसहननं, औदारिकागोपाग, ततो मनुजद्विकादीना द्वन्द्वस्तेषु, एतासु प्रकृतिषु विषये त्रयस्त्रिंशदतराणि परम प्रकृष्ट सततबन्धो निरन्तर बन्धकाल इति योग । अत्रापि जिननामवर्जाना चतसृणा प्रकृतीना जघन्यतः समयमेक बन्धः सविपक्षत्वात्, उत्कृष्टतस्त्रयस्त्रि-

शदतराणि, यतो बद्धजिननामकर्माऽनुत्तरसुरेषु स्थित एतावन्तं कालमेतदेव प्रस्तुतप्रकृतिपंचकं सततं बध्नातीति। ननु किमध्रुवबन्धिनीनां प्रकृतीनां सर्वासामपि जघन्यबन्धकालः समयमात्र एव किमुत कासांचिदन्यथाप्यत आह— 'अंतमुहु लहू वि आउ जिणे त्ति' लघुरपि जघन्यबन्धोऽपि न केवलमसुखगतिप्रभृतीनामुत्कृष्टोऽन्तर्मुहूर्तलक्षणो बन्धकाल इत्यपिशब्दार्थः । आयुःषु चतुर्षु जिननामकर्मणि चेत्यर्थः। 'अंतमुहु त्ति' एकदेशे समुदायोपचारा-दन्तर्मुहूर्तलक्षणो न तु समयरूप इति । अयमत्र भावार्थः—इह कश्चिज्जन्तुस्तीर्थकरनामबन्धक उपशमश्रेणिमा-रूढस्तत्र चानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहलक्षणगुणस्थानकत्रये वर्तमानोऽबन्धकः संपेदे, ततः श्रेणिं समाप्य प्रतिपतितः पुनरप्यन्तर्मुहूर्तं यावत्तदेव बद्धा तदूर्ध्वं द्वितीयवारं श्रेण्यारोहणेऽबन्धको यदा भवति तदाऽसौ कालो लभ्यते। न च वाच्यं कथमेकस्मिन्नेव भवे वारद्वयं श्रेणिकरणं, यतः शास्त्रे तस्याभिहितत्वात्। उक्तं च—"[1]एगभवे दुक्खुत्तो चरित्तमोहं उवसमिज्ज त्ति" आयूंषि चत्वार्यपि यावदन्तर्मुहूर्तं तावज्जघन्यतोऽपि बध्यन्ते ततस्तत्प्रति सुप्रतीत एव यथोक्तकाल इति ॥ ६२ ॥

निरूपितः प्रसक्तानुप्रसक्तसहितः स्थितिबन्धः, इदानीमनुभागबन्धस्यावसरः, अनुभागो रसोऽनुभाव इति पर्यायाः। तत्रानुभागस्य किंचित्तावत्स्वरूपमुच्यते—इह गंभीरापारसंसारसरित्पतिमध्यविपरिवर्ती रागादिसचिवो जन्तुः पृथक्सि-द्धानामनन्तभागवर्तिभिरभव्येभ्योऽनन्तगुणैः परमाणुभिर्निष्पन्नान् कर्मस्कन्धान् प्रतिसमयं गृह्णाति, तत्र च प्रतिपर-

१ एकस्मिन् भवे वारद्वयं चारित्रमोहनीयमुपशमयेत्।

माणु कषायविशेषान् सर्वजीवानन्तगुणाननुभागस्याविभागपलिच्छेदान् करोति । केवलिप्रज्ञया छिद्यमानो यः परमनिकृष्टोऽनुभागोंऽशोऽतिसूक्ष्मतयाऽर्धं न ददाति सोऽविभागपलिच्छेद उच्यते । उक्तं च–"बुद्धीऽ छिज्जमाणो अणुभागंसो न देइ जो अद्धं । अविभागपलिछेओ सो इह अणुभागवधम्मि ॥ १ ॥" तत्र चैकैककर्मस्कन्धे यः सर्वजघन्यरसपरमाणुः सोऽपि केवलिप्रज्ञया छिद्यमानः किल सर्वजीवेभ्यो अनन्तगुणान् रसभागान् प्रयच्छति, अन्यस्तु परमाणुस्तानविभागपलिच्छेदानेकाधिकान् प्रयच्छति, अपरस्तु तानपि द्व्यधिकान्, अन्यस्तु तानपि त्र्यधिकान्, अन्यस्तु तानपि चतुरधिकानित्यादिवृद्ध्या तावन्नेयं यावदन्त्य उत्कृष्टः परमाणुर्मौलराशेरनन्तगुणानपि रसभागान् प्रयच्छति । अत्र च सर्वजघन्यरसा ये केचन परमाणवस्तेषु सर्वजीवानन्तगुणरसभागयुक्तेष्वप्यसत्कल्पनया शतं रसांशाना परिकल्प्यते । एतेषां च समुदायः समानजातीयत्वादेका वर्गणेत्यभिधीयते, अन्येषां त्वेकोत्तरशतरसभागयुक्तानामणूनां समुदायो द्वितीया वर्गणा, अपरेषां तु द्व्युत्तरशतरसांशयुक्तानामणूनां समुदायस्तृतीया वर्गणा, अन्येषां तु त्र्युत्तरशतरसभागयुक्तानामणूनां समुदायश्चतुर्थी वर्गणा, एवमनया दिशैकैकरसभागवृद्धानामणूनां समुदायरूपा वर्गणाः सिद्धानामनन्तभागेऽभव्येभ्योऽनन्तगुणा वाच्याः । एतासां चैतावतीवर्गणानां समुदायः स्पर्धकमभिधीयते । स्पर्धन्त इवोत्तरोत्तररसवृद्ध्या परमाणुवर्गणा अत्रेति कृत्वा । एताश्चानन्तरोक्तानन्तकप्रमाणा अप्यसत्कल्पनया षट् स्थाप्यन्ते । इदमेकं स्पर्धकमितः ऊर्ध्वमेकोत्तरया निरन्तरवृद्ध्या वृद्धो रसो न लभ्यते, किं तर्हि ? सर्वजीवानन्तगुणैरेव रसभागैर्वृद्धो लभ्यत इति । तेनैव

१ बुद्ध्या छिद्यमानो योऽनुभागांशोऽर्धं ( भाग ) न ददाति अनुभागपरिच्छेदोऽसाविहानुभागबन्धे ॥ १ ॥

क्रमेण द्वितीयं रसस्पर्धकमारभ्यते, ततस्तेनैव क्रमेण तृतीयमित्यादि यावदनन्तानि रसस्पर्धकानि उत्तिष्ठन्ते । अयं चानुभागः शुभाशुभभेदेन द्विविधानामपि प्रकृतीनां तीव्रमन्दरूपतया द्विविधो भवत्यतोऽशुभशुभप्रकृतीनां येन प्रत्ययेनासौ तीव्रो बध्यते येन च मन्दस्तन्निरूपणार्थमाह–

**तिव्वो असुहसुहाणं संकेसविसोहिउ विवज्जयउ। मंदरसो गिरिमहिरयजलरेहासरिसकसाएहिं ॥६३॥**

टीका–तत्र प्रथमं तावत्तीव्रमन्दस्वरूपमुच्यते पश्चादक्षरार्थः । इह घोषातकीपिचुमन्दाद्यशुभवनस्पतीनां संबन्धी सहजोऽर्धावर्तो द्विभागावर्तो भागत्रयावर्तश्च यथाक्रमं कटुकः कटुकतरः कटुकतमोऽतिशयकटुकतमश्च, तथेक्षुक्षीरादिद्रव्याणां संबन्धी सहजोऽर्धावर्तो द्विभागावर्तो भागत्रयावर्तश्च यथासंख्यं मधुरो मधुरतरो मधुरतमोऽतिमधुरतमश्च रसो जलाद्यसंबन्धाद्यथा तीव्रो भवति तथैतेषामेव पिचुमन्दादीनां क्षीरादीनां च द्रव्याणां संबन्धी सहजो रसो जललवबिंदुअर्धचुलुकचुलुकप्रसृत्यंजलिकरककुंभद्रोणादिसंबन्धाद्यथा बहुभेदं मन्दमन्दतरादित्वं प्रतिपद्यते तथाऽर्धावर्तादयोऽपि रसा यथा जललवादिसंबन्धान्मन्दमन्दतरमन्दतमादित्वं प्रतिपद्यन्ते तथैवाशुभप्रकृतीनां शुभप्रकृतीनां च रसास्तादृशतादृशकषायवशात्तीव्रत्वं मन्दत्वं चानुविदधतीति । अक्षरार्थोऽधुना विव्रियते–तीव्रो रसो भवति । कासामित्याह–'असुहसुहाणं ति' अशुभाश्च शुभाश्चाशुभशुभास्तासामशुभशुभानामशुभप्रकृतीनां शुभप्रकृतीनां चेत्यर्थः । कथमित्याह–'संकेसविसोहिउ त्ति' संक्लेशश्च विशुद्धिश्च संक्लेशविशुद्धी ताभ्यां संक्लेशविशुद्धितः "( ५-२-७४ आद्यादिभ्यः ) आद्यादेराकृतिगणत्वात्तसप्रत्ययः" यथासंख्यमशुभप्रकृतीनां संक्लेशेन शुभप्रकृतीनां विशुद्ध्येत्यर्थः । इदमत्र हृदयम्—अशुभ-

प्रकृतीना द्व्यशीतिसख्याना सक्लेशेन तीव्रकषायोदयेन तीव्र उत्कटो रसो भवति सर्वाशुभप्रकृतीना तद्बन्धविधायिना जन्तूना मध्ये यो य उत्कृष्टसक्लेशो जन्तु स स तीव्ररस बध्नातीत्यर्थ । शुभप्रकृतीना तु विशुद्ध्या कषायविशुद्ध्या तीव्रोऽनुभागो भवति शुभप्रकृतिबन्धकाना मध्ये यो यो विशुद्ध्यमानपरिणाम स स तासा तीव्रमनुभागं बध्नातीत्यर्थ । उक्तस्तीव्ररसस्य बन्धप्रत्यय', सप्रति स एव मन्दरसस्याभिधीयते–'विवज्जयओ मन्दरसो त्ति' विपर्ययेण विपर्ययत उक्तवैपरीत्येन मन्दोऽनुत्कटरसो भवति । अयमर्थ –सर्वप्रकृतीनामशुभाना विशुद्ध्या मन्दो रसो जायते, शुभाना तु मन्दसक्लेशेनेति । उक्त सक्लेशविशुद्धिवशादशुभशुभप्रकृतीना तीव्रो मन्दश्चानुभाग , अय त्वेकद्वित्रिचतु स्थानिकभेदाच्चतुर्धा भवति, अत एकस्थानिकादिरसो यै प्रत्ययैर्यासा प्रकृतीना भवति तदाह–'गिरिमहिरय' इत्यादि, गिरिश्च पर्वत , मही च पृथिवी, रजश्च वालुका, जल च पानीय, गिरिमहीरजोजलानि तेषु रेखा राजयस्ताभि सदृशास्तुल्या गिरिमहीरजोजलरेखासदृशास्ते च ते कषायाश्च सपरायास्तैरसौ भवतीति प्रक्रम' ॥ ६३ ॥

कीदृगित्याह–

चउठाणाई असुहा सुहन्नहा विग्घदेसघाइआवरणा।पुमसंजलणिगदुतिचउठाणरसा सेस दुगमाई ६४

टीका–चतु स्थान आदिर्यस्य रसस्य त्रिस्थानिकद्विस्थानिकैकस्थानिकपरिग्रह' स चतु स्थानादि०, कासामित्याह–'असुह त्ति' इह षष्ठ्यर्थे प्रथमा ततोऽशुभानामशुभप्रकृतीना । इयमत्र भावना–इह रेखाशब्दस्य प्रत्येक सबन्धाद्गिरिरेखाशब्देन प्रभूतकालव्यपदेशादतितीव्रत्व कषायाणा प्रतिपाद्यते, ततश्च गिरिरेखासदृशैः कषायैरनन्तानुबन्धिभिरित्यर्थ०।

सर्वासामशुभप्रकृतीनां चतुःस्थानिकरसबन्धो भवति । आतपशोषिततडागमहीरेखासदृशैः कषायैरप्रत्याख्यानावरणैर्मना-
ग्मन्दोदयैरशुभप्रकृतीनां त्रिस्थानिकरसबन्धो भवति । वालुकारेखासदृशैः कषायैः प्रत्याख्यानावरणैरशुभप्रकृतीनां द्वि-
स्थानिकरसबन्धः । जलरेखासदृशैः कषायैरतिमन्दोदयैः संज्वलनाभिधैर्विघ्नपंचकादिवक्ष्यमाणसप्तदशाशुभप्रकृतीनामेवै-
कस्थानिकरसबन्धो भवति न शेषाणां शुभप्रकृतीनामशुभप्रकृतीनामिति ( नां चेति ) हि वक्ष्यामः । उक्तोऽशुभानां
रसस्य बन्धप्रत्ययः, इदानीं शुभानां रसप्रत्ययविभागमाह—'सुहन्नह त्ति' शुभप्रकृतीनामन्यथोक्तवैपरीत्येन हेतुविपर्यया-
च्चतुःस्थानिकादिरसस्य बन्धो भवति । तत्र वालुकाजलरेखासदृशैः कषायैश्चतुःस्थानिको रसबन्धो भवति । महीरेखा-
सदृशैः कषायैस्त्रिस्थानिको रसबन्धो भवति । गिरिरेखासदृशैः कषायैर्द्विस्थानिको रसबन्धः शुभप्रकृतीनां भवति ।
शुभप्रकृतीनां त्वेकस्थानिको रस एव नास्तीति पूर्वमेवोक्तम् । अथ यासां प्रकृतीनामेकद्वित्रिचतुःस्थानिकभेदाच्चतुर्विधोऽपि
रसबन्धः संभवति, यासां चैकस्थानिकवर्जस्त्रिविध एवेत्येतच्चिन्तयन्नाह— 'विग्घदेसघाइआवरणा' इत्यादि, विघ्नानि
दानलाभभोगोपभोगवीर्यान्तरायभेदादन्तरायाणि पंच, देशघात्यावरणा देशघात्यावारिकाः सप्तप्रकृतयः तद्यथा—मतिज्ञान-
श्रुतज्ञानावधिज्ञानमनःपर्यायज्ञानावरणाश्चतस्रः चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनावरणास्तिस्रः इत्येताः, 'पुम त्ति' पुंवेदः,
संज्वलनाश्चत्वारः क्रोधमानमायालोभा इत्येताः सप्तदशप्रकृतयः । किमित्याह—'इगदुतिचउठाणरस त्ति' स्थानशब्दस्य
प्रत्येकं संबन्धादेकस्थानद्विस्थानत्रिस्थानचतुःस्थाना रसा यासां ता एकद्वित्रिचतुःस्थानरसाः एताः सप्तदशापि प्रकृतय
एकद्वित्रिचतुःस्थानिकरूपेण चतुर्विधेनापि रसेन संयुक्ता बध्यन्त इति तात्पर्यम् । तत्रानिवृत्तिबादरे गुणस्थाने संख्येयेषु

ज्ञागेषु गतेष्वासां सप्तदशानामपि प्रकृतीनामेकस्थानिको रस प्राप्यते, शेषस्थानिकास्तु रसास्त्रयोऽप्यासा ससारस्थान् जीवानाश्रित्य प्राप्यन्त इति । शेषा' प्रकृतयस्तर्हि किरूपा ज्ञवन्तीत्याह—'सेस डुयमाई' इति, शेषाः, ज्ञणितसप्तदश-प्रकृतिन्य उद्धरिता॰ सर्वा शुज्ञा अशुज्ञाश्च प्रकृतयो वध्यन्ते, 'डुयमाइ त्ति' सूचनात्सूत्रमिति न्यायात् द्विस्थानादिरसा आदिशब्दात्त्रिस्थानरसाश्चतु स्थानरसाश्च शेषा प्रकृतयो द्विस्थानिकत्रिस्थानिकचतु'स्थानिकरसयुक्ता ज्ञवन्ति, न त्वेक-स्थानिकरसयुक्ता इति ज्ञाव' । अयमत्राशय —सप्तदशप्रकृतिष्वेवैकस्थानिको रसो वध्यते, न तु शेषासु, यतोऽशुज्ञप्रकृती-नामेकस्थानिको रसो यदि वन्ध्यते तदाऽनिवृत्तिबादरसख्येयज्ञागेन्य' परत एव, तत्र च सप्तदशप्रकृतीर्वर्जयित्वा शेषा-णामशुज्ञप्रकृतीना वन्ध एव नास्त्यतः शेषाणामशुज्ञानामेकस्थानिको रसो न ज्ञवति । ये अपि केवलज्ञानकेवलदर्श-नावरणलक्षणे द्वे अपि प्रकृती तत्र वध्येते, तयोरपि सर्वघातित्वाद्द्विस्थानिक एव रसो निर्वर्त्यते नैकस्थानिक इति । शुज्ञाना तु सर्वासामप्येकस्थानिको रसो न ज्ञवति, यत इहासख्येयलोकाकाशप्रदेशप्रमाणानि सक्लेशस्थानानि ज्ञवन्ति, विशुद्धिस्थानान्यपि तावन्त्येव, यथा यान्येव सक्लिश्यमान सक्लेशस्थानान्यारोहति तेष्वेव विशुद्ध्यमानोऽवतरति, ततश्च यथा प्रासादमारोहता यावन्ति सोपानस्थानान्यवतरतामपि तावन्त्येव, तथाऽत्रापीति ज्ञाव॰ । केवल विशुद्धिस्थानानि विशेषाधिकानि । कथमिति चेदुच्यते—क्षपको येष्वध्यवसायस्थानकेषु क्षपकश्रेणिकामारोहति, न तेषु पुनरपि निवर्तते, तस्य सक्लेशाज्ञावात्, अतस्तानि विशुद्धिस्थानान्येव ज्ञवन्ति, न सक्लेशस्थानानीति तैरध्यवसायस्थानैर्विशुद्धिस्थानान्य-धिकानि । एव च स्थितेऽत्यन्तविशुद्धौ वर्तमान शुज्ञप्रकृतीना चतु स्थानिक रसमज्ञिनिर्वर्तयति अत्यन्तसक्लेशे तु वर्त

मानस्य शुभप्रकृतयो बन्ध एव नागच्छन्ति । या अपि वैक्रियतैजसकार्मणाद्याः शुभा नरकप्रायोग्याः संक्लिष्टोऽपि बध्नाति तासामपि स्वभावात् सर्वसंक्लिष्टोऽपि द्विस्थानिकमेव रसं विदधाति । येषु तु मध्यमाध्यवसायस्थानेषु शुभप्रकृतयो बध्यन्ते तेषु तासां द्विस्थानिकपर्यन्त एव रसो बध्यते नैकस्थानिकः, मध्यमपरिणामत्वादेवेति न क्वापि शुभप्रकृतीनामेकस्थानिकरससंभव इति ॥ ६४ ॥

कृता चतुर्विधस्यापि रसस्य प्रत्ययप्ररूपणा, संप्रति शुभाशुभरसस्यैव विशेषतः किंचित्स्वरूपमाह–

**निंबुच्छुरसो सहजो दुतिचउभागकड्ढिइक्कभागंतो। इगठाणाई असुहो असुहाण सुहो सुहाणं तु ॥ ६५ ॥**

टीका–इहैवमक्षरघटना–अशुभानामशुभप्रकृतीनां रसोऽशुभोऽशुभाध्यवसायनिष्पन्नत्वात् । क इवेत्याह–निंबवत् पिचुमन्दवत् वत्शब्दस्य लुप्तस्येह प्रयोगो द्रष्टव्यः । तथा शुभानां शुभप्रकृतीनां रसः शुभः शुभाध्यवसायनिष्पन्नत्वात्, क इवेत्याह–इक्षुवत् इक्षुयष्टिवत् । तथा डमरुकमणिन्यायान्निंबेक्षुरसशब्द एवमप्यावर्तते–यथा निंबरस एव इक्षुरस एव सहजः स्वभावस्थ एकस्थानिकरस उच्यते, स एवैकस्थानिकरसो द्वित्रिचतुर्भागक्वथितैकभागान्तो द्विस्थानिकादिर्भवति । कोऽर्थः? द्वौ च त्रयश्च चत्वारश्च द्वित्रिचत्वारस्ते च ते भागाश्च द्वित्रिचतुर्भागाः, द्वित्रिचतुर्भागाश्च ते पृथग् विभिन्नविभिन्नेष्वाश्रयेषु क्वथिताश्च द्वित्रिचतुर्भागक्वथितास्तेषामेक एकसंख्यो भागोऽन्तेऽवसाने यस्य सहजरसस्य स द्वित्रिचतुर्भागक्वथितैकभागान्तः । स किमित्याह–एकस्थानिकादिः, आदिशब्दाद्द्विस्थानिकत्रिस्थानिकचतुःस्थानिकरसपरिग्रह इत्यक्षरार्थः । भावार्थस्त्वयम्–इह यथा निंबघोषातकीप्रभृतीनां कटुकद्रव्याणां सहजोऽक्वथितः

कटुको रस एकस्थानिक उच्यते, स एव भागद्वयप्रमाण' स्थाल्या कथितोऽर्धावर्तितः कटुकतरो द्विस्थानिकः, स एव भागत्रयप्रमाण स्थाल्या कथितस्त्रिभागान्त' कटुकतमस्त्रिस्थानिक , स एव भागचतुष्टयप्रमाणो विभिन्नस्थाने कथितश्चतुर्भागान्तोऽतिकटुकतमश्चतु.स्थानिक । तथा इक्षुक्षीरादीना सहजो मधुररस एकस्थानिक उच्यते, स एव सहजो भागद्वयप्रमाण पृथग्भाजने कथितोऽर्धावर्तितो मधुरतरो द्विस्थानिक , स एव भागत्रयप्रमाण' पृथक्स्थाल्या कथितस्त्रिभागान्तो मधुरतमस्त्रिस्थानिक., स एव भागचतुष्कप्रमाणो विभिन्नस्थाने कथितश्चतुर्थभागान्तोऽतिमधुरतमश्चतु'-स्थानिक । एवमशुभाना प्रकृतीना तादृशकषायनिष्पाद्य कटुक. कटुकतर कटुकतमोऽतिकटुकतमश्च, शुभप्रकृतीना तु मधुरो मधुरतरो मधुरतरमोऽतिमधुरतमश्च रसो यथासंख्यमेकद्वित्रिचतु स्थानिको भवति । एव च रसोऽशुभप्रकृतीनामशुभ शुभप्रकृतीना शुभ इति । तुशब्दो विशेषणे, स चैव निशिनष्टि—यथा सप्तदशाशुभप्रकृतीनामेकस्थानिकरसस्पर्धकान्यसख्येयव्यक्तिव्यक्तत्वादसंख्येयानि भवन्ति, तत्र च सर्वजघन्यस्पर्धकरसस्येय निंबाद्युपमा, तदनु चानन्तेषु रसपलिच्छेदेष्वतिक्रान्तेषु तदुत्तर द्वितीयस्पर्धकं भवति, एवमुत्तरोत्तरक्रमेण प्रवृद्धवृद्धतररसोपेतानि शेषस्पर्धकान्यपि भवन्ति । एव शेषाशुभप्रकृतीनामपि द्वित्रिचतु स्थानिकरसस्पर्धकान्यसख्येयव्यक्तिव्यक्तानि प्रत्येकमसख्येयानि भवन्ति, तान्यपि यथोत्तरमनन्तरसपलिच्छेदनिष्पन्नत्वात्परस्परमनन्तगुणरसानि, अत उत्तरोत्तरस्पर्धकान्यप्यनन्तगुणरसानि, किं पुनरशुभाना द्वित्रिचतु स्थानिका रसा इति, तथाहि—अशुभाना निंबोपमवीर्यो य एकस्थानिको रसस्तस्मादनन्तगुणवीर्यो द्विस्थानिक , ततोऽप्यनन्तगुणवीर्यस्त्रिस्थानिक , तस्मादप्यनन्तगुणवीर्यश्चतु स्थानिक इति परस्पर सुप्रतीतमे-

वानन्तगुणरसत्वमिति । शुभप्रकृतीनां पुनरेकस्थानिको रस एव नास्ति । यश्च शुभानामिक्षूपमो रसोऽभिहितः स द्वि-
स्थानिकरसस्य सर्वजघन्यस्पर्धक एव द्रष्टव्यः, तदुत्तरस्पर्धकेषु चानन्तगुणा रसा भवन्ति, एतत्सर्वं पंचसंग्रहाभिप्रायतो
व्याख्यातम् । किं च केवलज्ञानावरणादिरूपाणां सर्वघातिनीनां विंशतिसंख्यानां प्रकृतीनां सर्वाण्यपि रसस्पर्धकानि
सर्वघातीन्येव । देशघातिनीनां पुनर्मतिज्ञानावरणप्रभृतिपंचविंशतिप्रकृतीनां रसस्पर्धकानि कानिचित् सर्वघातीनि, का-
निचिद्देशघातीनि । तत्र यानि चतुःस्थानिकरसानि त्रिस्थानिकरसानि वा रसस्पर्धकानि, तानि नियमतः सर्वघातीनि,
द्विस्थानिकरसानि पुनः कानिचिद्देशघातीनि, कानिचित्सर्वघातीनि, एकस्थानिकानि तु सर्वाण्यपि देशघातीन्येव । उक्तं
च–"यानि रसस्पर्धकानि सकलमपि स्वघात्यं ज्ञानादिगुणं घ्नन्ति, तानि च स्वरूपेण ताम्रभाजनवन्निश्छिद्राणि, घृत-
मिवातिशयेन स्निग्धानि, द्राक्षावत्तनुप्रदेशोपचितानि, स्फटिकाभ्रगृहवच्चातीव निर्मलानि । उक्तं च–"जो घाएइ निय-
गुणं सयलं सो होइ सव्वघाइरसो । सो निच्छिद्दो निद्धो तणुओ फलिहब्भहरविमलो ॥ १ ॥" यानि च देशघातीनि रस-
स्पर्धकानि तानि स्वघात्यं ज्ञानादिगुणं देशतो घ्नन्ति, तदुदयेऽवश्यं क्षयोपशमसंभवात्, तानि च स्वरूपेणानेकविधवि-
वरसंकुलानि । तथाहि–कानिचित्कट इवातिस्थूरच्छिद्रशतसंकुलानि, कानिचित्कंबल इव मध्यमविवरशतसंकुलानि,
कानिचित्पुनरतिसूक्ष्मविवरनिकरसंकुलानि यथा वासांसि, तथा तानि देशघातीनि रसस्पर्धकानि स्तोकस्नेहानि भवन्ति

---

१ यो घातयति निजगुणं सकलं स भवति सर्वघातिरसः । स निश्छिद्रः स्निग्धः तनुकः स्फटिकाभ्रगृहवद्विमलः ॥ १ ॥

रोमहयरद्दिानि च । उक्तं च-"देसेनिपाइत्तणउं इयरो कम्हम्बलसुसकासो । विनिद्दनद्रुन्निद्दचरिउं अप्पसिणेहो अविमलो य ॥ १ ॥" इति ॥ ६५ ॥

अथविधः गमरचमनुजागनन्ध., इदानीमुत्कृष्टानुजागनन्धस्य स्वामिनो निरूपयन्नाह-

तिरमिगथावरायवसुरमिछा विगलसुहुमनिरयतिग। तिरिमणुयाउ तिरिनरा तिरिदुगछेवठ सुरनिरया

टीका-'इग त्ति' एकेन्द्रियजाति., स्थावरनाम, आतपनाम, इत्येतस्य प्रकृतित्रयस्य। 'सुरमिच्छ त्ति' सुरा देवा, मिथ्यादृष्टय। तीव्रमनुभागमुत्कृष्टानुभाग। कुर्वन्तीति शेष.। अत्र चाविशेषोक्तावपि व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात् सुरा ईशानान्ता एव द्रष्टव्या नोपरितना, तेषामेकेन्द्रियेषूत्पत्त्यभावादेकेन्द्रियप्रायोग्यप्रकृतित्रयबन्धाभावात्। अयमपि चेशानान्तो देव एकेन्द्रियजातिस्थावरयोरुत्कृष्टानुभाग सर्वसंक्लिष्टो बध्नाति, आतपस्य तु तत्प्रायोग्यविशुद्ध इति द्रष्टव्यम्। इद हि शुभप्रकृतित्वाद्विशुद्धा उत्कृष्टरस जन्यते। सापि विशुद्धिर्यद्यधिकतरा गृह्यते तदा पंचेन्द्रियतिर्यक्प्रायोग्य मनुष्यप्रायोग्य वा बध्नीयात्, न चातप तत्प्रायोग्यबन्धे बध्यते, एकेन्द्रियप्रायोग्यत्वादेवेत्यातोऽत्र तत्प्रायोग्यविशुद्धत्वविशेषणोपादानम्। आह पर -ननु चवलेन, किं तु मिथ्यादृष्टिदेव एवैतास्तिस्र उत्कृष्टरसा करोति नान्य इत्यत्र किं निबन्धनम्? अत्रोच्यते-नारकाणा तावदेता एकेन्द्रियप्रायोग्यत्वात्तत्रोत्पत्त्यभावाद्बन्ध एव नागच्छन्ति, तिर्यङ्मनुष्यास्तु यावत्या विशुद्धौ वर्तमान अयमातपमुत्कृष्टरस करोति तावत्या विशुद्धौ वर्तमाना पचेन्द्रिय-

१ देशोत्पन्नत्वादितर (देश्यातौ) कटकम्बलाशुकसकाश । विविधबुद्धिचिह्नभृत् अल्पस्नेहोऽविमलश्च ॥१॥

तिर्यगादिप्रायोग्यमन्यत्किंचिद्बुभतरमुपरचयेयुः, यावति च संक्लेशे वर्तमानोऽसावेकेन्द्रियजातिस्थावरयोरुत्कृष्टानुभागं बध्नाति तावति संक्लेशे स्थिता अमी नरकगतिप्रायोग्यं निर्वर्तयेयुः, देवास्तूत्कृष्टसंक्लेशेऽपि भवप्रत्ययादेकेन्द्रियप्रायोग्यमेव बध्नन्ति, न तु नरकयोग्यमिति तिर्यङ्मनुष्याणामपि प्रकृतकर्मत्रयोत्कृष्टानुभागबन्धकत्वासंभवः, सुरा अपि सम्यग्दृष्टयो मनुष्ययोग्यमेव बध्नन्तीति मिथ्यादृष्टिग्रहणम् । तस्मादीशानान्ता मिथ्यादृष्टिदेवा यदा आतपस्य सर्वलघ्वीं स्थितिमुपकल्पयन्ति तदा तद्बन्धकेष्वतिविशुद्धा अस्योत्कृष्टानुभागं विदधति। यदा तूत्कृष्टसंक्लेशे वर्तमाना एकेन्द्रियजातिस्थावरयोः सर्वोत्कृष्टां स्थितिमुपरचयन्ति तदा तयोरुत्कृष्टानुभागं कुर्वत इति स्थितम् । तथा त्रिकशब्दस्य प्रत्येकं संबन्धात् विकलत्रिकं द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियलक्षणं, सूक्ष्मत्रिकं सूक्ष्मापर्याप्तसाधारणाख्यं, नरकत्रिकं नरकगतिनरकानुपूर्वीनरकायुःस्वरूपम् । आयुःशब्दस्य प्रत्येकं संबन्धात्तिर्यगायुर्मनुजायुः । इत्येतासामेकादशप्रकृतीनां । कोलिकनलकन्यायेन मिथ्यादृष्टिशब्दस्येहाप्यनुकर्षणान्मिथ्यादृष्टयः तिर्यंचश्च नराश्च तिर्यङ्नरास्त एवोत्कृष्टानुभागं बध्नन्ति, न देवनारका इत्यर्थः । तथाहि–तिर्यङ्मनुष्यायुर्वर्जा नवप्रकृतीर्भवप्रत्ययादेव नारका न बध्नन्ति, तिर्यङ्मनुष्यायुषी अप्यत्र भोगभूमियोग्ये उत्कृष्टरसे प्रकृते अतस्ते अमी न बध्नन्ति, कुतस्तेषां तदनुभागबन्धसंभवः ? तस्मात्संज्ञिनो मिथ्यादृष्टयस्तिर्यङ्मनुष्या एतत्प्रायोग्यविशुद्धा एते आयुषी बध्नन्ति, नारकायुषस्तु तत्प्रायोग्यसंक्लिष्टा उत्कृष्टरसं बध्नन्ति, अतिसंक्लिष्टस्यायुर्बन्धनिषेधात्, नरकद्विकं त्वेत एव सर्वसंक्लिष्टा बध्नन्ति, एकं द्वौ वा समयौ यावदुत्कृष्टसंक्लेशस्यैतावन्मात्रकालत्वादेव । शेषाणां तु विकलत्रिकसूक्ष्मत्रिकलक्षणानां षण्णां प्रकृतीनामेत एव तत्प्रायोग्यसंक्लिष्टा उत्कृष्टानुभागं

बध्नन्ति । सर्वसंक्लिष्टा ह्यमी प्रस्तुतप्रकृतिबन्धमुल्लङ्घ्य नरकप्रायोग्य निर्वर्तयेयुरिति तत्प्रायोग्यसंक्लेशग्रहणमिति । तथा तिर्यग्द्विक तिर्यग्गतितिर्यगानुपूर्वीरूप छेदपृष्ठसहननमित्येतत्प्रकृतित्रयस्य सुरा नारका वा अत्यन्तसंक्लिष्टा उत्कृष्टानुभाग बध्नन्ति । तिर्यङ्मनुष्या ह्येतावति संक्लेशे वर्तमाना नरकगतिप्रायोग्यमेव निर्वर्तयेयुः, न च तद्योग्या एता प्रकृतयो बध्यन्त इति तद्व्युदासेन देवनारकाणा ग्रहण, ते हि सर्वसंक्लिष्टा अपि तिर्यग्गतिप्रायोग्यमेव बध्नन्तीति । इह च व्याख्यानतो विशेषप्रतिपत्ते सेवार्तस्येशानादुपरि सनत्कुमारादयो देवा उत्कृष्टानुभाग बध्नन्ति, न त्वीशानान्ता , ते ह्यतिसंक्लिष्टा एकेन्द्रियप्रायोग्यमेव विरचयेयु', न च तद्योग्यमिद बध्यत इति ॥ ६६ ॥

विउविसुराहारदुग सुखगइवन्नचउतेय जिणसायं। समचउपरघातसदसपणिदिसासुच्च खवगाउ ॥ ६७ ॥

टीका–द्विकशब्दस्य प्रत्येक सबन्धाद्वैक्रियद्विक वैक्रियशरीरवैक्रियाङ्गोपाङ्गाख्य, सुरद्विक सुरगतिसुरानुपूर्वीस्वरूपं, आहारकद्विक आहारकशरीराहारकाङ्गोपाङ्गलक्षणं । सुखगति प्रशस्तविहायोगतिः, वर्णचतुष्कं वर्णगन्धरसस्पर्शलक्षण । डमरुकमणिन्यायादिहापि चतु शब्दस्य सबन्धात्तैजसचतुष्क तैजसकार्मणागुरुलघुनिर्माणाख्यं, जिननाम, सातवेदनीयम् । 'समचउ त्ति' समचतुरस्र सस्थानम् । 'परघ त्ति' पराघातनाम । त्रसदशकं त्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययश.कीर्तिस्वभावम् । 'पणिंदि त्ति' पचेन्द्रियजाति । 'सास त्ति' उच्छ्वासनाम । उच्चैर्गोत्रम् । इत्येतासा द्वात्रिंशत प्रकृतीनामुत्कृष्टानुभागं यथासभव क्षपकौ सूक्ष्मसपरायापूर्वकरणलक्षणौ कुरुत । अपूर्वकरणो मोहनीयमक्षपयन्नपि योग्यतया राज्यार्हकुमारराजवत् क्षपक उक्त इति द्रष्टव्यम् । तत्र सातवेदनीययश.कीर्त्युच्चैर्गोत्रलक्षणप्रकृतित्रयस्य क्षप-

कसूक्ष्मसंपरायश्चरमसमये वर्तमान उत्कृष्टानुभागं बध्नाति, स्वगुणस्थानशेषसमयेभ्योऽन्येभ्यश्च तद्बन्धकेभ्योऽस्यानन्तगुणविशुद्धत्वात् इति । शेषाणां त्वेकोनत्रिंशतः प्रकृतीनां क्षपकापूर्वकरणो देवगतिप्रायोग्यबन्धव्यवच्छेदसमये वर्तमानस्तीव्रमनुभागं बध्नाति, तद्बन्धकेष्वस्यैवातिविशुद्धत्वादिति ॥ ६७ ॥

**तमतमगा उज्जोयं,सम्मसुरा मणुयउरलदुगवइरं।अपमत्तो अमराउं चउगइ मिच्छा उ सेसाणं ॥ ६८ ॥**

टीका–तमस्तमाधः सप्तमनरकपृथिवी तदाधारा नारकास्तमस्तमका उच्यन्ते । अमी उद्योतनामकर्मण उत्कृष्टानुभागं बध्नन्ति । तथाहि–कश्चित्सप्तमनरकपृथिवीनारको यथाप्रवृत्त्यादीनि त्रीणि करणानि कृत्वाऽनिवृत्तिकरणे स्थितो मिथ्यात्वस्यान्तरकरणं करोति, तत्र च कृते मिथ्यात्वस्य स्थितिद्वयं भवति, अन्तरकरणादधस्तनी प्रथमा स्थितिरन्तर्मुहूर्तमात्रा, तस्मादेवोपरितनी शेषा द्वितीया स्थितिः । स्थापना । तत्राधस्तनस्थितेर्मिथ्यात्ववेदनस्य चरमसमये उद्योतस्य तीव्रमनुभागं बध्नाति । इदं हि शुभप्रकृतित्वाद्विशुद्ध एवोत्कृष्टरसं करोति, तद्बन्धकेषु त्वयमेव सर्वविशुद्धः, अन्यस्थानवर्ती हि एतावत्यां विशुद्धौ वर्तमानो मनुष्यप्रायोग्यं देवप्रायोग्यं वा बध्नीयात् । इदं तु तिर्यग्गतिप्रायोग्यबन्धसहचरितमेव बध्यत इति सप्तमपृथिवीनारकस्यैवोपादानम् । तत्र हि यावत् किंचिदपि मिथ्यात्वमस्ति तावत्क्षेत्रानुभावत एव तिर्यक्प्रायोग्यमेव बध्यत एवेति भावः । तथा द्विकशब्दस्य प्रत्येकं संबन्धान्मनुजद्विकं मनुजगतिमनुजानुपूर्वीरूपं, औदारिकद्विकं औदारिकशरीरौदारिकांगोपांगाख्यम् । 'वइरं ति' वज्रर्षभनाराचसंहननं । इत्येतासां पंचानां प्रकृतीनां । 'संमसुर त्ति' सम्यग्दृष्टिसुरा अत्यन्तविशुद्धास्तीव्रानुभागमेकं द्वौ वा समयौ यावद्बध्नन्ति । मिथ्यादृष्टेर्हि सम्यग्दृष्टिरनन्तगुणविशुद्ध इति सम्य-

ग्दृष्टेर्ग्रहणम् । नारका अपि हि विशुद्धा सन्त एता प्रकृतीरुपरचयन्ति, केवल वेदनानिवहविह्वलीकृतत्वादमरवत्प्रकृष्टभावनिबन्धनतीर्थंकरादिसमृद्धिसमुदायसदर्शनतद्व च श्रवणनन्दीश्वरादिचैत्यदर्शनाद्यसत्त्वाच्च तथाविधविशुद्ध्यसत्त्वात्तेपामिहाग्रहण । तिर्यङ्मनुष्याणा पुनरतिविशुद्धाना देवगतिप्रायोग्यबन्धकत्वात्तदयोग्यप्रस्तुतप्रकृतिबन्धासत्त्व इति सर्वन्युदासेन सुरस्यैवोपादानम् । तथाऽप्रमत्तोऽप्रमत्तयतिरमरायुरुत्कृष्टानुभाग बध्नाति, अपरेभ्यो देवायुर्वन्धकमिथ्यादृष्ट्यविरतसम्यग्दृष्टिदेशविरतादिभ्योऽस्यानन्तगुणविशुद्धत्वादिति । तदेव द्विचत्वारिंशत पुण्यप्रकृतीना चतुर्दशाना त्वशुभप्रकृतीना तीव्रानुभागबन्धस्वामिन उक्ता', साप्रत शेपाणामष्टपष्टयशुभप्रकृतीना बन्धस्वामिनो निरूपयन्नाह—'चउगइमिच्छा उ सेसाण ति' चतुर्गतिका अपि मिथ्यादृष्टय , तुशब्दात्तीव्रोत्कटकपाया जीवा शेपाणा भणितोद्धरिताना ज्ञानावरणपचकदर्शनावरणनवकासातवेदनीयमिथ्यात्वकषायषोडशकनोकषायनवकप्रथमवर्जसस्थानपंचकप्रथमान्तिमवर्जसहननचतुष्काप्रशस्तवर्णगन्धरसस्पर्शोपघाताप्रशस्तविहायोगतिस्थिराशुभदुर्भगदु स्वरानादेयायश.कीर्तिनीचैर्गोत्रान्तरायपचकलक्षणानामष्टपष्टयशुभप्रकृतीना तीव्रमुत्कृष्टानुभाग बध्नन्ति । तत्र हास्यरतिस्त्रीवेदपुंवेदप्रथमान्तिमवर्जसस्थानसहननलक्षणा द्वादश प्रकृतीर्वर्जयित्वा शेपा पट्पञ्चाशत्प्रकृतीरुत्कृष्टतत्प्रायोग्यसक्लेशयुक्तास्तीव्रानुभागाः कुर्वन्ति । सर्वोत्कृष्टसक्लेशो हि तावत् हास्यरतियुगलमतिक्रम्यारतिशोकयुगलमेव रचयति, स्त्रीवेदपुवेदौ त्वतिक्रम्य नपुसकवेद निर्वर्तयति, सस्थानसहननेष्वपि सर्वसक्लिष्टो विंशतिसागरोपमकोटीकोटीस्थितिके हुण्डसेवार्ते निर्वर्तयति, ततो विशुद्धोऽष्टादशसागरोपमकोटीकोटीस्थितिके वामनकीलिके रचयति, ततो विशुद्धतर षोडशसागरोपमकोटिकोटिस्थितिके कुब्जार्धनाराचे बध्नाति,

ततोऽपि विशुद्धश्चतुर्दशसागरोपमकोटीकोटीस्थितिके सादिनाराचे निर्वर्तयति, ततोऽपि विशुद्धो द्वादशसागरोपमकोटीकोटीस्थितिके न्यग्रोधपरिमंडलऋषभनाराचे उपकल्पयति, ततोऽपि विशुद्धो दशसागरोपमकोटीकोटीस्थितिके समचतुरस्रवज्रऋषभनाराचे बध्नाति। तस्मात्प्रथमान्तिमवर्जसंस्थानचतुष्टयस्य तथा प्रथमान्तिमवर्जसंहननचतुष्टयस्य चात्मीयात्मीयोत्कृष्टस्थितिबन्धकाले तत्प्रायोग्यसंक्लेशयुक्ता अमी उत्कृष्टानुभागं बध्नन्ति । हीनाधिकसंक्लेशेऽन्यान्यबन्धसंभवात्तत्प्रायोग्यसंक्लेशग्रहणमिति भावः। प्रथमान्तिमसंस्थानसंहननवर्जनं किमर्थमिति चेदुच्यते–हुंडसंस्थानं तावत् "चउग इमिच्छा उ सेसाणं ति" गाथावयवे एवाभिहितं, समचतुरस्रसंस्थानं तु "विउविसुराहारदुगं" इत्याद्यनन्तरगाथायां भावितं, वज्रऋषभनाराचसंहननं तु "संमसुरा मणुयउरलदुगवइरं" इत्यत्र निरूपितं, सेवार्तसंहननं पुनः "तिरिदुगछेवद्व सुरनिरया" इत्यत्र भावितमिति पारिशेष्यान्मध्यमसंस्थानचतुष्टयं मध्यमसंहननचतुष्टयं च तत्प्रायोग्यसंक्लेशे वर्तमानाश्चतुर्गतिका मिथ्यादृष्टयो जीवा उत्कृष्टरसं कुर्वन्तीत्युक्तम्। इति ॥ ६८ ॥

अभिहिताः सर्वप्रकृतीः प्रतीत्योत्कृष्टानुभागबन्धस्वामिनः, इदानीं सर्वप्रकृतीरुद्दिश्य जघन्यानुभागबन्धस्वामिनश्चिन्तयन्नाह–

**थीणतिगं अण मिच्छं मंदरसं संजमुम्मुहो मिच्छो। बियतियकसाय अविरय देस पमत्तो अरइसोए ॥ ६९ ॥**

टीका–स्त्यानर्द्ध्युपलक्षितं त्रिकं स्त्यानर्द्धित्रिकं निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिलक्षणम् । 'अण त्ति' अनन्तानुबन्धिनः क्रोधमानमायालोभाख्याश्चत्वारः। मिथ्यात्वम्। इत्येतासामष्टानां प्रकृतीनां स्वगुणस्थानचरमसमये वर्तमानो

मिथ्यादृष्टिः । 'सजमुम्मुह त्ति' सम्यक्त्वसयमाभिमुख सम्यक्त्वसामायिक प्रतिपित्सु । मन्दरस जघन्यानुभाग बध्नाति । प्रस्तुतप्रकृतिवन्धकेष्वयमेव सर्वविशुद्ध इति । तथा कषायशब्दस्य प्रत्येक योगाद्द्वितीयकषायचतुष्टयस्याप्रत्याख्यानावरणलक्षणस्य । 'अविरय त्ति' अविरतसम्यग्दृष्टि स्वगुणस्थानचरमसमये वर्तमान , सयमोन्मुख इत्यत्रापि योज्यम् । सयमाभिमुखो देशविरतिसामायिकं प्रतिपित्सुर्मन्दरस बध्नाति, प्रस्तुतप्रकृतिबन्धकेष्वस्यैव विशुद्धत्वात् । तथा तृतीयकषायचतुष्टयस्य प्रत्याख्यानावरणकषायलक्षणस्य, 'देस त्ति' देशविरत' स्वगुणस्थानचरमसमये वर्तमान सयमोन्मुख. सर्वविरतिसामायिक प्रतिपित्सुर्मन्दरस करोति, तत्प्रकृतिबन्धकेष्वस्यैव विशुद्धतरत्वात् । तथा प्रमत्त प्रमत्तयति' सयमोन्मुखोऽप्रमत्तसयम प्रतिपित्सु , अरतिश्च शोकश्चारतिशोक तस्मिन्नरतिशोकेऽरतिशोकयोर्मन्दरसं विदधाति । इद हि प्रकृतिद्वयमशुभत्वात्सर्वविशुद्ध एव जघन्यरस करोति, तद्बन्धकेषु त्वयमेव सर्वविशुद्ध इति ॥ ६९ ॥

अपमाइ हारगदुगं दुनिद्दअसुवन्नहासरइकुच्छा । भयमुवघायमपुव्वो अनियट्टी पुरिससंजलणे ॥ ७० ॥

टीका–आहारकद्विकं आहारकशरीराहारकाङ्गोपाङ्गलक्षण । न प्रमाद्यतीत्येवशीलोऽप्रमादी अप्रमत्तयति अनन्तरमेव प्रमत्तभाव प्रतिपित्सुर्मन्दरस जघन्यरस करोतीतियावत् । इद हि प्रकृतिद्वय शुभस्वरूपत्वात्सक्लिष्ट एव जघन्यरसं करोति, तद्बन्धकेषु त्वयमेवातिसंक्लिष्ट इति भाव' । तथा 'दुनिद्द त्ति' द्वयोर्निद्रयो. समाहारो द्विनिद्र निद्राप्रचलालक्षण । सु शोभन 'वन्न ति' वर्णचतुष्क न सुवर्णमसुवर्णमप्रशस्तवर्णचतुष्कमप्रशस्तवर्णगन्धरसस्पर्शा इत्यर्थ । हास्यं, रति , 'कुच्छ त्ति' जुगुप्सा, भय, उपघातमित्येतासामेकादशप्रकृतीना 'अपुव्व त्ति' सामान्योक्तावपि क्षपकापूर्वकरण एकैकस्मिन्ना-

त्मीयात्मीयबन्धव्यवच्छेदसमये जघन्यानुभागं बध्नाति । एता ह्यशुभप्रकृतयः, अशुभप्रकृतीनां च सर्वविशुद्ध एव जघन्यानुभागं बध्नाति, प्रस्तुतप्रकृतिबन्धकेषु त्वयमेव सर्वविशुद्ध इति । तथा 'पुरिस त्ति' पुरुषवेदः, संज्वलनाः क्रोधमानमायालोभाश्चत्वारः, इत्येतस्य प्रकृतिपंचकस्यैकैकस्मिन्नात्मीयात्मीयबन्धव्यवच्छेदसमये 'अनियट्टि त्ति' सामान्योक्तावपि क्षपकानिवृत्तिबादरो जघन्यानुभागं निर्वर्तयति । एता ह्यशुभप्रकृतयः, अशुभप्रकृतीनां च सर्वविशुद्ध एव जघन्यानुभागं बध्नातिं, प्रस्तुतप्रकृतिबन्धकेषु त्वयमेव सर्वविशुद्ध इति ॥ ७० ॥

**विग्घावरणे सुहुमो मणुतिरिया सुहुमविगलतिगआऊ। वेउव्विछक्कममरा निरया उज्जोयउरलदुगं॥७१॥**

टीका—विघ्नानि दानलाभभोगोपभोगवीर्यान्तरायलक्षणानि पंच, आवरणानि मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यायज्ञानावरणकेवलज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणकेवलदर्शनावरणलक्षणानि नव, इत्येतासां चतुर्दशप्रकृतीनां ।'सुहुम त्ति' सामान्योक्तावपि क्षपकसूक्ष्मसंपरायश्चरमसमये वर्तमानो जघन्यानुभागं बध्नाति । एता ह्यशुभप्रकृतयः, अशुभप्रकृतीनां च सर्वविशुद्ध एव जघन्यानुभागं बध्नाति, प्रस्तुतप्रकृतिबन्धकेषु त्वयमेव सर्वविशुद्ध इति । तथा त्रिकशब्दस्य प्रत्येकं संबन्धात्सूक्ष्मत्रिकं सूक्ष्मापर्याप्तकसाधारणाख्यं, विकलत्रिकं द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिलक्षणं, 'आउ त्ति' आयूंषि देवमनुष्यतिर्यङ्नारकायुर्भेदाच्चत्वारि, वैक्रियषट्कं देवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियशरीरवैक्रियांगोपांगलक्षणं, इत्येतासां षोडशप्रकृतीनां । 'मणुतिरिय त्ति' मनुशब्देन मनुष्या उच्यन्ते, ततो मनुष्याश्च तिर्यञ्चश्च मनुष्यतिर्यंचो जघन्यानुभागं कुर्वन्ति । अत्र हि तिर्यग्मनुष्यायुर्द्वयं वर्जयित्वा शेषाश्चतुर्दशप्रकृती-

देवनारका भवप्रत्ययादेव न बध्नन्ति, तिर्यङ्मनुष्यायुर्द्वयमपि यदा जघन्यस्थितिकं बध्यते तदा जघन्यरसं क्रियते, देवनारकास्तु तज्जघन्यं न बध्नन्त्येव, तत्स्थितिकेषु तेषामुत्पत्त्यभावात् । तस्मान्नैतत्प्रकृतिषोडशकं देवनारका बध्नन्ति, अतस्तिर्यङ्मनुष्याणामेव ग्रहणं । तत्र नारकायुषोऽशुभप्रकृतित्वात्तद्बन्धकेषु सर्वविशुद्धा दशवर्षसहस्रलक्षणजघन्यस्थितिबन्धकाले जघन्यानुभागं तिर्यङ्मनुष्याः कुर्वन्ति, शेषस्य त्वायुस्त्रयस्य शुभप्रकृतित्वात्तद्बन्धकेषु सर्वसंक्लिष्टा आत्मीयात्मीयसर्वजघन्यस्थितिबन्धकालेऽमी जघन्यानुभागं रचयन्ति । नरकद्विकस्याशुभप्रकृतित्वाज्जघन्यस्थितिबन्धकाले तद्बन्धकेषु सर्वविशुद्धा एते जघन्यानुभागं विदधति । देवद्विकस्य शुभप्रकृतित्वादात्मीयोत्कृष्टस्थितिबन्धकाले तत्प्रायोग्यसंक्लिष्टा अमी जघन्यानुभागं बध्नन्ति । अतिसंक्लिष्टो नरकादियोग्यं बध्नीयादिति तत्प्रायोग्यसंक्लेशग्रहणं, एवमन्यत्रापि द्रष्टव्यं । वैक्रियद्विकस्यापि शुभप्रकृतित्वान्नरकगतिबन्धसहिता सर्वोत्कृष्टां स्थितिं बध्नन्तो जघन्यानुभागं निर्वर्तयन्ति । विकलत्रिकसूक्ष्मत्रिकयोस्त्वशुभप्रकृतित्वात्तत्प्रायोग्यविशुद्धा अमी सर्वजघन्यमनुभागं बध्नन्ति । अतिविशुद्धा मनुष्यादिप्रायोग्यं बध्नन्तीति तत्प्रायोग्यविशुद्धिग्रहणमिति भाविता षोडश प्रकृतयः । तथा उद्योतं, औदारिकद्विकं औदारिकशरीरौदारिकाङ्गोपाङ्गलक्षणमित्येतासां तिसृणां प्रकृतीनां 'अमरा निरय त्ति' सामान्यतोऽमरा देवाः, निरया निर्गतमयमिष्टफलं दैवं कर्म येभ्यस्ते निरया नारकाः सर्वोत्कृष्टसंक्लेशे वर्तमानास्तिर्यक्प्रायोग्यं बध्नन्तो जघन्यानुभागं कुर्वन्ति, केवलमौदारिकाङ्गोपाङ्गमीशानादुपरितनाः सनत्कुमारादय एव देवा जघन्यरसं विदधति, नेशानान्ताः, ते हि सर्वोत्कृष्टसंक्लेशे वर्तमाना एकेन्द्रियप्रायोग्यमेव बध्नन्ति, एकेन्द्रियाणां चाङ्गोपाङ्गं न भवति, अत ईशानान्तदेवानां जघन्यरसा-

गुणश्रेणि । सर्वविरति सपूर्णविरतिस्तल्लाभे तृतीया गुणश्रेणि । 'अणविसजोय त्ति' अनन्तानुवन्धिविसयोजनाया चतुर्थी गुणश्रेणि. । 'दसखवगे त्ति' पदैकदेशे पदप्रयोगदर्शनाद्दर्शनस्य दर्शनमोहनीयस्य क्षपको दर्शनक्षपकस्तत्र तद्विपया पचमी गुणश्रेणि । चशब्दः समुच्चये । 'मोहसम त्ति' मोहस्य मोहनीयस्य शम शमक उपशमकः स चोपशमश्रेण्यारूढोऽनिवृत्तिवादरः सूक्ष्मसपरायश्चाभिधीयते तत्र मोहशमे षष्ठी गुणश्रेणि । 'सत त्ति' शान्त उपशान्तमोहगुणस्थानकवर्ती तत्र सप्तमी गुणश्रेणि । 'खवगि त्ति' क्षपक. क्षपकश्रेण्यारूढोऽनिवृत्तिबादर सूक्ष्मसपरायश्च निगद्यते तत्र क्षपकेऽष्टमी गुणश्रेणि । 'खीण त्ति' क्षीणस्य क्षीणमोहस्य नवमी गुणश्रेणि । 'सजोगि त्ति' सयोगिकेवलिनो दशमी गुणश्रेणि । 'इयर त्ति' अयोगिकेवलिन एकादशी गुणश्रेणिरिति गाथाक्षरार्थ । भावार्थ पुनरय—सम्यक्त्वलाभकाले मदविशुद्धिकत्वाज्जीवो दीर्घान्तर्मुहूर्तवेद्यामल्पतरप्रदेशाग्रा च गुणश्रेणिमारचयति । ततो देशविरतिलाभे सख्येयगुणहीनान्तर्मुहूर्तवेद्यामसख्येयगुणप्रदेशाग्रा च ता करोति । तत सर्वविरतिलाभे सख्येयगुणहीनान्तर्मुहूर्तवेद्यामसख्येयगुणप्रदेशाग्रा च ता करोति । ततोऽप्यनन्तानुवन्धिविसयोजनाया सख्येयगुणहीनान्तर्मुहूर्तवेद्यामसख्येयगुणप्रदेशाग्रा च ता विदधाति । ततो दर्शनमोहनीयक्षपक सख्येयगुणहीनान्तर्मुहूर्तवेद्यामसख्येयगुणप्रदेशाग्रा च ता निर्मापयति । ततोऽपि मोहशमक सख्येयगुणहीनान्तर्मुहूर्तवेद्यामसख्येयगुणप्रदेशाग्रा च ता विरचयति । ततोऽप्युपशान्तमोहगुणस्थानकवर्ती सख्येयगुणहीनान्तर्मुहूर्तवेद्यामसख्येयगुणप्रदेशाग्रा च ता विरचयति । ततोऽपि क्षपक सख्येयगुणहीनान्तर्मुहूर्तवेद्यामसख्येयगुणप्रदेशाग्रा च ता विरचयति । ततोऽपि क्षीणमोह' सख्येयगुणहीनान्तर्मुहूर्तवेद्यामसख्येयगुणप्रदेशाग्रा च ता

कुरुते । ततोऽपि सयोगिकेवली भगवान् संख्येयगुणहीनान्तर्मुहूर्तवेद्यामसंख्येयगुणप्रदेशाग्रां च तां विधत्ते । ततोऽप्ययोगिकेवली चरमविशुद्धिपरिकल्पितः संख्येयगुणहीनान्तर्मुहूर्तवेद्यामसंख्येयगुणप्रदेशाग्रां च तां परिकल्पयति । तदेवं यथा यथाऽतिविशुद्धिस्तथा तथा ह्रस्वकालबहुप्रदेशाग्रत्वं च गुणश्रेणेर्भवतीति ॥ ८२ ॥

निरूपिता गुणश्रेणिरेकादशधा, संप्रत्यस्या एव स्वरूपं, पूर्वप्रदर्शितसम्यक्त्वादिगुणारूढजन्तूनां मध्ये यस्य जन्तोर्यावद्गुणा दलिकनिर्जरा तां च प्ररूपयन्नाह—

**गुणसेढी दलरयणाणुसमयमुदयादसंखगुणणाए। एयगुणा पुण कमसो असंखगुणनिज्जरा जीवा ॥८३॥**

टीका—गुणेन गुणकारेण श्रेणिर्गुणश्रेणिः । श्रेणिशब्दवाच्यमाह—'दलरयण त्ति' दलस्योपरितनस्थितेरवतारितप्रदेशाग्रस्य रचना संन्यासो दलरचना । कथं पुनर्दलिकरचना ? कस्माच्चारभ्य केन च गुणकारेण विधीयते जन्तुनेत्याह—अनुसमयं समयं समयमनु लक्षीकृत्य प्रतिसमयमित्यर्थः । उदयादुदयक्षणादारभ्यासंख्येयगुणनयाऽसंख्यातगुणकारेण । इदमुक्तं भवति—उपरितनस्थितेरवतारितं दलिकमुदयक्षणे स्तोकं जन्तुर्विरचयति, द्वितीयक्षणेऽसंख्यातगुणं, तृतीयक्षणेऽसंख्यातगुणमित्येवं प्रतिसमयमसंख्यातगुणकारेण दलरचना तावन्नेया यावद्गुणश्रेणिमस्तकमिति । तथोपरितनस्थितेर्दलिकावतारणस्याप्ययमेव न्यायो वाच्यः । यथा गुणश्रेणिन्यसनयोग्यमुपरितनस्थितेः प्रथमसमये स्तोकं गृह्णाति, द्वितीयसमयेऽसंख्यातगुणमेवं प्रतिसमयमसंख्यातगुणकारेण तावन्नेयं यावच्चरमसमय इति । उक्तं च—"[1]उवरिल्लठिईहिंतो

---

१ उपरितनस्थितेर्गृहीत्वा पुद्गलांस्तु स क्षपयति । उदयसमये स्तोकांस्ततश्चासंख्यगुणांस्तु । १ । द्वितीये क्षपयति समये तृतीयस्मिं

घित्तूण पुग्गले ऊ सो खिवइ । उदयसमयम्मि थोवे तत्तो य असखगुणिए ऊ ॥ १ ॥ वीयम्मि खिवइ समए तइए तत्तो असखगुणिए ऊ । एव समए समए अतमुहुत्त तु जा पुन्न ॥ २ ॥ दलिय तु गिह्णमाणो पढमे समयमि थोवय गिह्णे । उवरिल्लठिईहितो वीयमि असखगुणियं तु ॥ ३ ॥ गिह्णइ समए दलिय तइए समए असखगुणिय तु । एवं समए समए जा चरिमो अतसमओ त्ति ॥ ४ ॥" तथेहापूर्वकरणानिवृत्तिकरणाद्धाद्वयादिशेषाधिकोऽन्तर्मुहूर्तप्रमाणो गुणश्रेणे कालो भवति, तावन्त च काल दलिकनिरचनं करोति । तथाऽधस्तनाधस्तनोदयक्षणे वेदनात क्षीणे सति शेषक्षणेषु दलिक निरचयति, न पुनरुपरि गुणश्रेणिं वर्धयति । उक्त च–"सेढीए कालमाण दुह्णु य करणाण समहियं जाण । खिज्जइ सा उदएण ज सेसं तमि निक्खेवो ॥ १ ॥" सम्यक्त्वश्रेणेरय क्रम., शेषाणामपि श्रेणीना दलरचनाया प्राय एष एव विधिः किंचिद्विशेषोऽपि चास्ति, केवल स कर्मप्रकृत्यादिग्रन्थान्तरादवसेय , नेह प्रतन्यते, ग्रन्थगौरवभयात् । अधुना यद्गुण-वशाज्जीवाना यावती निर्जरा तामाह–एते प्रागुपदर्शिता. सम्यक्त्वदेशविरतिसर्वविरत्यादयो गुणा धर्मो येषा ते एतद्गुणा.। जीवा इत्युत्तरेण सबन्ध. । कथमित्याह' पुनरिति ' पुन'शब्दो गुणश्रेणिस्वरूपापेक्षया व्यतिरेकार्थ' । क्रमशो यथोत्तर क्रमेणासंख्यातगुणिता निर्जरा कर्मपुद्गलपरिशाटरूपा येषा तेऽसख्यातगुणनिर्जरा जीवा. सत्वा भवन्तीति शेष । तत्र

---

स्ततोऽसख्यगुणितास्तु । एवमेवसमये समये अतर्मुहूर्तं यावत्पूर्णं ।२। दलिक तु गृह्णन् प्रथमे समये स्तोक गृह्णीयात् । उपरितनस्थितेर्द्वितीये त्वसख्यगुणितमेव । ३ । गृह्णाति समये दलिक तृतीये समयेऽसख्यगुणमेव । एव समये समये यावच्चरमोन्तसमय इति । ४ ।

१ श्रेणे कालमान द्वयो करणयो ( कालात् ) समधिक जानीहि । क्षीयते सोदयेन यच्छेष तस्मिन्निक्षेप । १ ।

सम्यक्त्वगुणा जीवाः स्तोकपुद्गलनिर्जरकाः, ततो देशविरता असंख्येयगुणनिर्जराः, ततः सर्वविरता असंख्येयगुणनिर्जराः, ततोऽनन्तानुबन्धिविसंयोजका असंख्येयगुणनिर्जराः, ततो दर्शनक्षपका असंख्येयगुणनिर्जराः, ततो मोहशमका असंख्येयगुणनिर्जराः, तत उपशान्तमोहा असंख्येयगुणनिर्जराः, ततः क्षपका असंख्येयगुणनिर्जराः, ततः क्षीणमोहा असंख्येयगुणनिर्जराः, ततः सयोगिकेवलिनोऽसंख्येयगुणनिर्जराः, ततोऽप्ययोगिकेवलिनोऽसंख्येयगुणनिर्जराः ॥ ८२ ॥

इहोत्तरोत्तरगुणारूढानां जन्तूनामसंख्येयगुणनिर्जराभाक्त्वमुक्तमुत्तरोत्तरगुणाश्च यथाक्रममविशुद्ध्यपकर्षविशुद्धिप्रकर्षस्वरूपाः सन्तो गुणस्थानकान्युच्यन्ते, अतस्तेषां गुणस्थानकानां जघन्यमुत्कृष्टं चान्तरालं प्रतिपादयन्नाह—

**पलियासंखंसमुहू सासणइयरगुण अंतरं हस्सं । गुरु मिच्छि बे छसठी इयरगुणे पुग्गलद्धंतो ॥ ८४ ॥**

टीका—इह भामा सत्यभामेति न्यायात् पल्यः पल्योपमासंख्यांशोऽन्तर्मुहूर्तं च जघन्यमन्तरमिति योगः । केषामित्याह—सास्वादनाश्चेतरगुणाश्चावशिष्टगुणस्थानकानि सास्वादनेतरगुणास्तेषां । प्राकृतत्वादत्र विभक्तिलोपः । अन्तरं विवक्षितगुणस्थानावस्थितेः प्रच्युतानां पुनस्तत्प्राप्तेर्व्यवधानमन्तरालमिति यावत् । ह्रस्वं जघन्यं । तत्र सास्वादनगुणस्थानकस्य जघन्यमन्तरं पल्योपमासंख्येयभागः, इतरगुणस्थानकानां तु जघन्यमन्तर्मुहूर्तमित्यक्षरार्थः । भावार्थः पुनरयम्—योऽनादिमिथ्यादृष्टिरुद्वलितसम्यक्त्वमिश्रपुंजो वा मिथ्यादृष्टिः षड्विंशतिसत्कर्मा सन्नन्तरकरणादिप्रकारेणोपलब्धौपशमिकसम्यक्त्वोऽनन्तानुबन्ध्युदयात् सास्वादनभावमासाद्य मिथ्यात्वं गतः सन् यदि तदेव सास्वादनत्वं पुनर्लभतेऽन्तरकरणप्रकारेणैव, तदा जघन्यतोऽपि पल्योपमासंख्येयभागोर्ध्वं लभते, नार्वाक् । किं कारणमिति चेदुच्यते—यतः सास्वादना-

न्मिथ्यात्व गतस्य प्रथमसमये सम्यक्त्वमिश्रपुञ्जौ सत्तायामवश्य तिष्ठत एव । न च तयो॰ सत्ताया वर्तमानयो॰ पुनरौपशमिकसम्यक्त्वं लभते, तदभावात् सास्वादन दूरापास्तमेव । यदि पुञ्जद्वयसद्भावे औपशमिकसम्यक्त्वस्य न लाभस्तर्हि पल्योपमासंख्येयभागेऽप्यतिक्रान्ते कथ सास्वादनलाभ ? इति चेदुच्यते–इह सम्यक्त्वमिश्रपुञ्जौ मिथ्यात्व गत प्रतिसमयमुद्वर्तयते तद्दलिक प्रतिसमय मिथ्यात्वे प्रक्षिपतीत्यर्थ॰ । अनेन च क्रमेणैतावुद्वर्त्यमानौ पल्योपमासंख्येयभागेन सर्वथोद्वर्तितौ नि सत्ताक नीतौ भवत , इत्थमेव कर्मप्रकृत्यादिष्वभिहितत्वात् । तत पल्योपमासंख्येयभागेन मिश्रसम्यक्त्वपुञ्जयोरुद्वर्तितयोस्तदन्ते कश्चिज्जन्तु पुनरप्यौपशमिकसम्यक्त्वमासाद्य सास्वादनत्व गच्छतीत्येव सास्वादनस्य पल्योपमासंख्येयभागोऽन्तर भवतीति । नन्वेकदोपशमश्रेणे॰ प्रतिपतित सास्वादनभावमनुभूय यदा पुनरप्यन्तर्मुहूर्तेनैतामेवोपशमश्रेणि प्रतिपद्य तत प्रतिपतित सास्वादनभाव लभते तदा जघन्यतोऽल्पमेवान्तर लभ्यते, तत्किमिति पल्योपमासंख्येयभागो जघन्यमन्तरमित्युक्त? सत्य, उपशमश्रेणे प्रतिपतितो य सास्वादनत्व गच्छति स केवल मनुजगतिभावित्वेनाल्पत्वान्नेह विवक्षित इतीतरस्यैव प्रभूतस्य चतुर्गतिवर्तित्वादन्तरालचिन्तेति । इतरगुणस्थानकेभ्यश्च मिथ्यादृष्टिसम्यग्मिथ्यादृष्टिअविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तोपशमश्रेणिगतापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहलक्षणेभ्य परिभ्रष्ट पुनर्जघन्यतोऽन्तर्मुहूर्तेऽतिक्रान्ते तान्येव गुणस्थानकानि लभन्ते इति तेषा जघन्यतोऽन्तर्मुहूर्तमेवान्तराल भवति । तथाहि–कश्चिज्जीव उपशमश्रेण्यारूढ सन्नुपशान्तभावमपि सप्राप्य प्रतिपतितो मिथ्यादृष्टिभ यावदवाप्नोति, ततो भूयोऽप्यन्तर्मुहूर्तेन तान्येवोपशान्तगुणस्थानान्तानि यदारोहति तदा शेषाणा सास्वादनमिश्रगुणस्थानका-

र्जितानां गुणस्थानकाना प्रत्येकं जघन्यत आन्तर्मौहूर्तिकमन्तरं भवति, एकस्मिंश्च भवे वारद्वयमुपशमश्रेणिकरणं समनुज्ञातमेव । उक्तं च–"एगभवे दुक्खुत्तो चरित्तमोहं उवसमिज्जा" । तत्र सास्वादनं प्रति जघन्यान्तरस्योक्तत्वात् श्रेणिप्रतिपतितस्य च मिश्रगमनाभावात्तयोर्वर्जनमुक्तं, श्रेणिगमनाभावे तु मिश्रस्य सास्वादनवर्जशेषगुणस्थानकानां च मिथ्यादृष्ट्यादीनामप्रमत्तान्तानां परावृत्य परावृत्य गमनत आन्तर्मौहूर्तिकमन्तरं प्राप्यते । क्षपकक्षीणमोहसयोगिकेवल्ययोगिकेवलिनां त्वन्तरचिन्ता नास्ति, तेषां प्रतिपातस्यैवाभावादिति । उक्तं जघन्यमन्तरं सर्वगुणस्थानकानां, इदानीमुत्कृष्टमन्तरमाह–'गुरु मिच्छि बे छसट्ठी' इत्यादि, गुरु उत्कृष्टमन्तरं । 'मिच्छि त्ति' मिथ्यात्वे मिथ्यादृष्टिगुणस्थानकस्य द्वे षट्षष्टी षट्षष्टिद्वयं । अयमत्र भावार्थः–यः कश्चिज्जन्तुर्विशुद्धिवशान्मिथ्यादृष्टित्वं परित्यज्य सम्यक्त्वं प्रतिपन्नस्ततः सागरोपमषट्षष्टिप्रमाणमुत्कृष्टं सम्यक्त्वकालं प्रतिपाल्यान्तर्मुहूर्तमेकं सम्यग्मिथ्यात्वं गच्छति । ततो भूयोऽपि सम्यक्त्वमासाद्य सागरोपमषट्षष्टिं यावत्तदनुपाल्य तत ऊर्ध्वं यो न सिध्यति सोऽवश्यं मिथ्यात्वं गच्छति । तत इदं सागरोपमषट्षष्टिद्वयरूपं सामर्थ्यतो मिश्रान्तर्मुहूर्तनरभवाधिकमुत्कृष्टं मिथ्यात्वस्यान्तरालं भवतीति । 'इयरगुणे त्ति' इतरगुणस्थानकविषये । कोऽर्थः ? मिथ्यादृष्टिगुणस्थानकापेक्षयाऽन्यगुणस्थानकेषु सास्वादनादिषूपशान्तमोहान्तेषु गुरु अन्तरमुत्कृष्टोऽन्तरालकालो भवति । कियदित्याह–'पुग्गलद्धंत त्ति' सूचकत्वात्सूत्रस्य पुद्गलस्य पुद्गलपरावर्तस्यार्धं पुद्गलपरावर्तार्द्धं तस्यान्तर्मध्यं पुद्गलपरावर्तार्द्धान्तः किंचिदूनं पुद्गलपरावर्तार्द्धमित्यर्थः । इदमत्र तात्पर्य–सास्वादनादय उपशमश्रेणिगतापूर्व-

करणाद्युपशान्तमोहान्ताश्च जीवा निजनिजगुणस्थानकालस्थितेर्यदा परिभ्रष्टास्तदोत्कृष्टत किंचिदून पुद्गलपरावर्तार्द्धं यावदपारससारपारावारमध्यमवगाह्य पुनस्तानि गुणस्थानकानि लभन्ते नार्वाक्, तत ऊर्ध्वं च सम्यक्त्वादिगुणान् समाप्यावश्य जीवा सिध्यन्तीति । ततो देशोनार्धपुद्गलपरावर्तमानमेषामुत्कृष्टमन्तर भवति । क्षपकक्षीणमोहादीना चान्तरमेव नास्ति प्रतिपाताभावादिति ॥ ८४ ॥

इह सास्वादनस्य जघन्यमन्तर पल्योपमासख्येयाश उक्तमत पल्योपमस्वरूप सप्रपच प्रचिकटयिपुराह–

**उद्धारअद्धखित्तं पलिय तिहा समयवाससयसमए । केसवहारो दीवोदहिआउतसाइपरिमाण ॥८५॥**

टीका–धान्यपल्यवत् पल्य पल्योपम त्रिधा त्रिप्रकार भवति । सिलोप प्राकृतत्वात् । तथाहि–उद्धारपल्योपम, अद्धापल्योपम, क्षेत्रपल्योपम च । तत्र वालाग्राणा तत्खडाना वा प्रतिसमयमुद्धरणमुद्धारस्तद्विषयं तत्प्रधान वा पल्योपममुद्धारपल्योपमम् । अद्धा काल स च प्रस्तावाद्वालाग्राणा तत्खडाना वाऽपहारे प्रत्येक वर्षशतलक्षणस्तत्प्रधानं पल्योपममद्धापल्योपमम् । क्षेत्रमाकाशप्रदेशरूप तत्प्रधान पल्योपम क्षेत्रपल्योपम चेति । 'समयवाससयसमए केसवहारो त्ति' तत्रोद्धारपल्योपमे केशाना वालाग्राणा समये समयेऽपहार उद्धरण क्रियते, अद्धापल्योपमे वर्षशते केशापहार क्रियते, क्षेत्रपल्योपमे समये समये केशापहार केशस्पृष्टास्पृष्टाकाशप्रदेशापहार. क्रियते । तत्र 'दीवोदहिआउतसाइपरिमाण ति' तत्रोद्धारपल्योपमेन प्रयोजन द्वीपोदधिपरिमाण द्वीपा उदधयश्चानेन प्रमीयन्ते, तथाऽद्धापल्योपमेन प्रयोजनमायु परिमाण देवाना नारकतिर्यङ्मनुष्याणामायूंष्यनेन मीयन्त इत्यर्थ , क्षेत्रपल्योपमेन प्रयोजन त्रसादिपरिमाण आदिशब्दात्पृ-

थिवीकायिकाप्कायिकतेजस्कायिकवायुकायिकवनस्पतिकायिकानां परिमाणं ग्राह्यं । उक्तं च–"एएण खित्तसागरउव-
माणेणं हविज्ज नायव्वं । पुढविदगअगणिमारुयहरियतसाणं च परिमाणं ॥ १ ॥" इति गाथाक्षरार्थः । भावार्थः पुनर-
यम्–इह त्रिविधं पल्योपमं । तद्यथा–उद्धारपल्योपमं, अद्धापल्योपमं, क्षेत्रपल्योपमं । पुनरेकैकं द्विधा बादरं सूक्ष्मं च ।
तत्रायामविस्तराभ्यामवगाहेन चोत्सेधांगुलनिष्पन्नैकयोजनप्रमाणो वृत्तत्वाच्च परिधिना किंचिदूनषड्भागाधिकयोजनत्रय-
मानः पल्यो मुंडिते शिरसि एकेनाह्ना द्वाभ्यामहोभ्यां यावदुत्कर्षतः सप्तभिरहोभिः प्ररूढानि यानि वालाग्राणि तैः प्रच-
यविशेषान्निबिडतरमाकर्णं तथा भ्रियते यथा तानि वालाग्राणि वह्निर्न दहति वायुर्नापहरति जलं नोत्कोथयति, ततः
समये समये एकैक वालाग्रापहारेण यावता कालेन स पल्यः सकलोऽपि सर्वात्मना निर्लेपो भवति तावत्कालः संख्ये-
यसमयमानो बादरमुद्धारपल्योपमं, एतेषां च दशकोटिकोट्यो बादरमुद्धारसागरोपमं महत्वात्सागरेण समुद्रेणोपमा यस्येति
कृत्वा । बादरे च प्ररूपिते सूक्ष्मं सुखावसेयं स्यादिति बादरोद्धारपल्योपमसागरोपमयोः प्ररूपणं, न पुनरेतत्प्ररूपणेऽन्य-
द्विशिष्टं फलमस्तीति । एवं बादरेष्वद्धाक्षेत्रपल्योपमसागरोपमेष्वपि वक्तव्यं । यदुक्तमनुयोगद्वारेषु–"तेह णं जे से

१ एतेन क्षेत्रसागरोपमानेन भवेज्ज्ञातव्यं । पृथ्व्यंब्वग्निमारुतहरितत्रसानां च परिमाणं। १ ।

२ तत्र योऽसौ व्यावहारिक उद्धारपल्योपमः सोसौ अथ यथा नाम पल्यः स्यात् आयामविष्कंभाभ्यां योजनो योजनश्चोर्ध्वमुच्चैस्त्वेन सविशेषत्रिगुणः परिरयेण स एकाहिकद्व्यहिकत्र्यहिकयावदुत्कृष्टसप्तरात्रैः (वालाग्रकोट्या, संमृष्टः संनिचित्तो भृतः ते च वालाग्रा नाग्निना दह्ये-रन्न वायुना ह्रियेरन् नोक्थयेयुः न च विध्वस्येयुः न पूतिभावमवाप्नुयुः शीघ्रं ततश्च समये समय एव एकैकं वालाग्रमपहरता यावता कालेनासौ

वावहारिए उद्धारपलिओवमे से ण इमे से जहा नामए पल्ले सिया जोयणं आयामविक्खंभेणं जोयणं च उड्ढं उच्चत्तेणं तिगुणंसविसेसं परिरएणं से णं एगाहिय बेहिय तेहियाणं उक्कोससत्तरत्ताणं संमट्ठे सन्निचिए भरिए वालग्गकोडीणं, तेणं वालग्गा नो अग्गी डहिज्जा नो वाऊ हरिज्जा नो कुहिज्जा नो विद्धंसिज्जा नो पूइत्ताए हव्वमागच्छिज्जा तओ णं समए समए एगमेगं वालग्गमवहाय जावइएणं कालेणं से पल्ले खीणे नीरए निल्लेवे निट्ठिए भवइ से तं ववहारिए उद्धारपलिओवमे, एएसिं पल्लाणं कोडाकोडी हविज्ज दसगुणिया उद्धारसागरस्स उ एगस्स भवे परीमाणं । १ । एएहिं वावहारिएहिं उद्धारपलिओवमसागरोवमेहिं किं पओयणं । नत्थि किंचि पओयणं । केवलं पन्नवइज्जइत्ति " । उक्तं बादरमुद्धारपल्योपमं । अथ सूक्ष्मं तदुच्यते–तत्रैकैकं वालाग्रमसंख्येयानि खण्डानि कृत्वा पूर्ववत्पल्यो भ्रियते, तानि च खण्डानि द्रव्यतः प्रत्येकमत्यन्तशुद्धलोचनछद्मस्थो यदतीवसूक्ष्मं पुद्गलद्रव्यं चक्षुषा न पश्यति तदसंख्येयभागमात्राणि, क्षेत्रतस्तु सूक्ष्मपनकशरीरं यावति क्षेत्रेऽवगाहते ततोऽसंख्येयगुणानि बादरपर्याप्तपृथ्वीकायिकशरीरतुल्यानीति वृद्धाः । एषां च वालाग्राणामसंख्येयत्वात् प्रतिसमयमुद्धारे किल संख्येया वर्षकोट्योऽतिक्रामन्ति, अतः संख्येयवर्षकोटिमानमिदं सूक्ष्ममुद्धारपल्योपममवसेयं । तद्दशकोटिकोट्या सूक्ष्मोद्धारसागरोपमं, आभ्यां पल्योपमसागरोपमाभ्यां द्वीपाः समुद्राश्च मीयन्ते ।

---

पल्यः क्षीणो नीरजो निष्ठितो निर्लेपश्च भवति असौ स व्यावहारिक उद्धारपल्योपमं । एतेषां पल्यानां कोटीकोटी भवेद्दशगुणिता । उद्धारसागरस्य एकस्य भवेत्परिमाणं । १ । एतैर्व्यावहारिकैरुद्धारपल्योपमसागरोपमैः किं प्रयोजनं ? न किंचित्प्रयोजनं, केवलं प्रज्ञाप्यते ।

उक्तं चानुयोगद्वारेषु–"एएहिं सुहुमउद्धारपलिओवमसागरोवमेहिं किं पओयणं? एएहिं दीवसमुद्दाणं उद्धारे घिप्पइ। केवइयाणं भंते दीवसमुद्दा उद्धारेणं पन्नत्ता? गोयमा। जावइयाणं अड्ढाइज्जाणं उद्धारसागरोवमाणं उद्धारसमया एवइयाणं दीवसमुद्दा उद्धारेणं पन्नत्ता"। भाष्यसुधांभोनिधिरप्याह–"उद्धारसागराणं अड्ढाइज्जाण जत्तिया समया। दुगुणदुगुणपवित्थर दीवोदहि हुंति एवइया॥ १॥" इत्युक्तं बादरसूक्ष्मभेदतो द्विविधमप्युद्धारपल्योपमं, संप्रति द्विविधमेवाद्धापल्योपमं प्ररूप्यते–तत्र पूर्वोक्तपल्याद्वर्षशतेऽतिक्रान्ते एकैकवालाग्रापहारेण निर्लेपनाकालः संख्येयवर्षकोटीमानो बादरमद्धापल्योपमं, तद्दशकोटीकोट्यो बादरमद्धासागरोपमं। तथैव पूर्वोक्तपल्याद्वर्षशते वर्षशतेऽतिक्रान्ते एकैकवालाग्रासंख्येयतमखंडापहारेण निर्लेपनाकालोऽसंख्यातवर्षकोटीमानः सूक्ष्ममद्धापल्योपमं, तद्दशकोटीकोट्यः सूक्ष्ममद्धासागरोपमं, तद्दशकोटीकोटीप्रमाणाऽवसर्पिणी, तावत्प्रमाणैवोत्सर्पिण्यपि, अवसर्पिण्युत्सर्पिण्योऽनन्ताः पुद्गलपरावर्ताः, अनन्ताः पुद्गलपरावर्ताः अतीताद्धा, अनन्ताः पुद्गलपरावर्ता अनागताद्धा चेति। उक्तं च श्रीभगवतीटीकायां–"अहवा पडुच्च कालं न सव्वभव्वाण होइ वुच्छित्ती। जं तीयणागयाओ अद्धाओ दो वि तुल्लाओ॥ १॥" अयमत्राभिप्रायः–यथाऽनागताद्धाया

---

१ एतैः सूक्ष्मोद्धारपल्योपमसागरोपमैः किं प्रयोजनं? एतैर्द्वीपसमुद्राणामुद्धारो गृह्यते। कियन्तो भदन्त द्वीपसमुद्रा उद्धारेण प्रज्ञप्ताः? गौतम यावतामर्धतृतीयानामुद्धारसागरोपमाणां उद्धारसमया इयन्तो द्वीपसमुद्रा उद्धारेण प्रज्ञप्ताः।

२ अर्धतृतीयानां उद्धारसागराणां यावन्तः समयाः। द्विगुणद्विगुणप्रविस्तरा द्वीपोदधयो भवन्त्येतावन्तः। १।

३ अथवा प्रतीत्य कालं न सर्वेषां भव्यानां भवति व्युच्छित्तिः। यदतीतानागताद्धे द्वे अपि तुल्ये। १।

अन्तो नास्ति, एवमतीताध्वाया आदिरिति व्यक्त समत्वमिति । अन्ये त्वाहु –"उस्सप्पिणी अनन्ता पुग्गलपरियट्टओ मुणेयव्वो । तेणन्ता तीयद्धा अणागयद्धा अणतगुणा ॥ १ ॥" अत्रेय भावना–अतीताद्धातोऽनागताद्धाया अनन्तगुणत्व समयावलिकादिभिरनवरत क्षीयमाणाया अप्यनागताद्धाया अक्षयात्, आभ्या च सूक्ष्माद्धापल्योपमसागरोपमाभ्या सुरनरकनरतिरश्चा कर्मस्थिति कायस्थिति भवस्थितिश्च मीयते । उक्त चानुयोगद्वारेषु–"एएहिं सुहुमअद्धापलिओवमसागरोवमेहिं किं पओयण ? गोयमा । एएहि नेरइयतिरिक्खजोणियमणुस्सदेवाण य आउयाइ मविज्जति" । इत्यभिहित बादरसूक्ष्मभेदतो द्विविधमप्यद्धापल्योपम, साम्प्रत द्विविधमेव क्षेत्रपल्योपम निरूप्यते । तत्र पूर्वोक्तपल्यावालाग्रस्पृष्टास्पृष्टनभ प्रदेशाना प्रतिसमय एकैकापहारेण निर्लेपनाकालोऽसंख्येयोत्सर्पिण्यवसर्पिणीमानो बादरं क्षेत्रपल्योपम, तद्दशकोटीकोट्यो बादर क्षेत्रसागरोपम । तथैवैकैकवालाग्रासख्येयतमखण्डै स्पृष्टानामस्पृष्टाना च नभ प्रदेशाना प्रतिसमयमेकैकापहारेण निर्लेपनाकालो बादरासंख्येयगुणकालमान सूक्ष्म क्षेत्रपल्योपमं, तद्दशकोटीकोट्य सूक्ष्म क्षेत्रसागरोपमम् । उक्त चानुयोगद्वारेषु–"[3]से किं त सुहुमे खेत्तपलिओवमे से जहा नामए पल्ले सिया एगजोयणं आयामविक्खंभेण जोयण उड्ढ उच्चत्तेण जाव भरिए वालग्गकोडीण, तत्थ णं एक्कमिक्के वालग्गे असखेज्जाइं खंडाइ कीरइ, तेण

१ उत्सर्पिण्योऽनन्ता पुद्गलपरावर्त्तो ज्ञातव्य । तेऽनन्ता अतीताद्धाऽनागताद्धा चानन्तगुणा । २ एताभ्या सूक्ष्मोद्धारपल्योपमसागरोपमाभ्या किं प्रयोजन ? गौतमैताभ्या नैरयिकतिर्यग्योनिकमनुष्यदेवानामायूंषि मीयन्ते । ३ अथ कोऽसौ सूक्ष्म क्षेत्रपल्योपम अथ यथा नाम पल्य स्यात् आयामविष्कम्भाभ्यामेकयोजनो योजन ऊर्ध्वमुच्चैस्त्वेन यावद्भृतो वालाग्रकोट्या, तत्रैकैक वालाग्र क्रियतेऽस-

वालग्गा दिट्ठिओगाहणाओ असंखेज्जभागमित्ता सुहुमस्स पणगजीवस्स सरीरोगाहणाओ असंखेज्जगुणा, ते णं वालग्गा नो अग्गी डहिज्जा नो वाऊ हरिज्जा जाव नो पूइत्ताए हव्वमागच्छिज्जा, जेणं तस्स आगासपएसा तेहिं वालग्गेहिं फुन्ना वा अफुन्ना वा तओ णं समए समए इक्कमिक्कमागासपएसं अवहाय जावइएणं कालेणं से पल्ले खीणे जाव निल्लेवे भवइ से तं सुहुमे खेत्तपलिओवमे। तत्थ चोयए पन्नवगं एवं वयासी, अत्थि णं तस्स पल्लस्स आगासपएसा जे तेहिं वालग्गेहिं अफुन्ना? हंता अत्थि। तं जहा को दिट्ठन्तो? से जहानामए कुट्ठे सिया कुहंडाणं भरिए तत्थ माउलिंगा पक्खित्ता ते वि माया, तत्थ बिल्ला पक्खित्ता ते वि माया, तत्थ आमलया पक्खित्ता ते वि माया, तत्थ णं वयरा पक्खित्ता ते वि माया, तत्थ णं चिणगा पक्खित्ता ते वि माया, तत्थ णं मुग्गा पक्खित्ता ते वि माया, तत्थ णं सरिसवा पक्खित्ता ते वि माया, तत्थ णं गंगावालुया

---

ख्यखण्डं तच्च वालाग्रं दृष्टावगाहनाया असंख्यभागमात्रं सूक्ष्मस्य पनकजीवशरीरावगाहनायाश्चासंख्यगुणं तानि वालाग्राणि नाग्निर्दहेत् न वायुर्हरेत् यावन्न पूतिभावमागच्छेच्छीघ्रं ये तस्याकाशप्रदेशास्तैर्वालाग्रैः स्पृष्टा अस्पृष्टा वा तेभ्यः समये समये एकैकमाकाशप्रदेशमपहृत्य यावता कालेन स पल्यः क्षीणो निर्लेपो भवति सोऽसौ सूक्ष्मः क्षेत्रपल्योपमः। तत्र चोदकः प्रज्ञापकमेवमवादीत् अस्ति (सन्ति) तस्य पल्यस्याकाशप्रदेशा ये तैर्वालाग्रैर्न स्पृष्टाः? हंतास्ति (सन्ति) तद्यथा को दृष्टान्तः यथानाम कोष्ठः स्यात् कूष्माण्डैर्भृतः तत्र बीजपूरकाणि क्षिप्तानि तान्यपि अवगाढानि तत्र विल्वानि क्षिप्तानि तान्यप्यवगाढानि तत्रामलकानि प्रक्षिप्तानि तान्यप्यवगाढानि तत्र बदराणि क्षिप्तानि तान्यपि अवगाढानि तत्र चणकाः प्रक्षिप्तास्तेऽपि अवगाढास्तत्र सर्षपाः प्रक्षिप्तास्तेऽपि अवगाढास्तत्र गंगावालुकाः प्रक्षिप्तास्ता अप्यवगाढाः एवमेव संत्येव तस्य पल्यस्याकाशप्रदेशा ये तैर्वालाग्रैरस्पृष्टा इति।

परिक्त्ता सा वि माया, एवामेव अञ्जिए तस्स पल्लस्स आगासपएसा जेण तेहिं वालग्गेहिं अफुन्नत्ति" । एताभ्या च सूक्ष्मक्षेत्रपल्योपमसागरोपमाभ्या प्रायो दृष्टिवादे द्रव्यप्रमाणप्ररूपणाया प्रयोजन सकृदेव नान्यत्र । यदागम.–" एएहिं सुहुमखेत्तपलिओवमसागरोवमेहिं किं पओयण ? गोयमा ! एएहिं सुहुमखेत्तपलिओवमसागरोवमेहि दिट्ठिवाए दवाइ मविज्जति" । आह–यदि स्पृष्टा अस्पृष्टाश्चेह सूक्ष्मक्षेत्रपल्योपमे नभःप्रदेशा गृह्यन्ते तर्हि वालाग्रै कि प्रयोजन ? यथोक्तपल्यान्तर्गतनभ प्रदेशापहारमात्रत सामान्येनैव वक्तुमुचित स्यात्, सत्य, कि तु सूक्ष्मक्षेत्रपल्योपमेन दृष्टिवादे द्रव्याणि मीयन्ते, तानि च कानिचिद्यथोक्तवालाग्रस्पृष्टैरेव नभ प्रदेशैर्मीयन्ते कानिचिदस्पृष्टैरित्यतो दृष्टिवादोक्तद्रव्यमानोपयोगित्वाद्वालाग्रप्ररूपणाऽत्र प्रयोजनवतीति ॥ ८५ ॥

व्याख्यात बादरसूक्ष्मभेदतो द्विविधमपि क्षेत्रपल्योपम, तद्व्याख्याने च समर्थित सप्रपच पल्योपमसागरोपमस्वरूप, इदानीं किंचिदून पुद्गलपरावर्तार्ध सास्वादनादीनामुत्कृष्टमन्तरमुक्तमतस्तमेव सप्रपचं पुद्गलपरावर्त गाथात्रयेण निरूपयितुकाम प्रथम तावत्तस्यैव भेदान् परिमाण चाह–

दवे खित्ते काले भावे चउह दुह बायरो सुहुमो । होइ अणंतुस्सप्पिणिपरिमाणो पुग्गलपरट्टो ॥ ८६ ॥

टीका–द्रव्ये द्रव्यविषय., क्षेत्रे क्षेत्रविषय , काले कालविषय , भावे भावविषय., इत्थं चतुर्धा चतूरूप पुद्गलपरावर्तो भवतीत्युत्तरेण सटक । पुनरेकैको द्रव्यादिको द्विविधो द्विप्रकारो भवति । द्वैविध्यमेवाह–' बायरो सुहुमो त्ति' बादर-

---

१ एताभ्या सूक्ष्मक्षेत्रपल्योपमसागरोपमाभ्या किं प्रयोजन ? गौतमैताभ्या सूक्ष्मक्षेत्रपल्योपमसागरोपमाभ्या दृष्टिवादे द्रव्याणि मीयन्ते ।

सूक्ष्मभेदभिन्नः । अयमर्थः—द्रव्यपुद्गलपरावर्तो द्वेधा बादरः सूक्ष्मश्च, क्षेत्रपुद्गलपरावर्तो द्वेधा बादरः सूक्ष्मश्च, कालपुद्गलपरावर्तो द्वेधा बादरः सूक्ष्मश्च, भावपुद्गलपरावर्तो द्वेधा बादरः सूक्ष्मश्च । कियत्कालप्रमाणः पुनरयमेकैक इत्याह—'होइ अणंतुस्सप्पिणिपरिमाणो त्ति' भवति जायते उत्सर्पन्ति प्रतिसमयं कालप्रमाणं जन्तूनां शरीरायुःप्रमाणादिकमपेक्ष्य वृद्धिमनुभवन्तीत्युत्सर्पिण्यः, ततोऽनन्ता उत्सर्पिण्यः उपलक्षणत्वादवसर्पन्ति प्रतिसमयं कालप्रमाणं जन्तूनां शरीरायुःप्रमाणादिकमपेक्ष्य हानिमनुभवन्तीत्यवसर्पिण्यः, ताश्च परिमाणं यस्य सोऽनन्तोत्सर्पिण्यवसर्पिणीपरिमाणः पूरणगलनधर्माणः पुद्गलाः, तेषां पुद्गलानां=चतुर्दशरज्ज्वात्मकलोकवर्तिसमस्तपरमाणूनां परावर्त औदारिकादिशरीरतया गृहीत्वा मोचनं यस्मिन् कालविशेषे स पुद्गलपरावर्तः । यद्यपि क्षेत्रादिविषयस्य पुद्गलपरावर्तरूपोऽन्वर्थो न घटां प्रांचति तथाप्यन्यथाव्युत्पादितस्यापि शब्दस्यान्यथा गोशब्दवत् प्रवृत्तिदर्शनात्समयप्रसिद्धमर्थं विषयीकरोतीति न कश्चिद्दोष इति ८६

द्रव्यपुद्गलपरावर्तो बादरः सूक्ष्मश्च भवतीत्युक्तं, अतः क्रमप्राप्तं बादरसूक्ष्मद्रव्यपुद्गलपरावर्तस्वरूपं प्ररूपयन्नाह—

**उरलाइसत्तगेणं एगजिउ मुयइ फुसिय सव्वअणू । जत्तियकालि स थूलो दव्वे सुहुमो सगन्नयरा ॥ ८७ ॥**

टीका—सूचकत्वात्सूत्रस्य औदारिकादिसप्तकत्वेन औदारिकपरमाणूनौदारिकशरीरतया, आदिशब्दाद्वैक्रियपरमाणून् वैक्रियशरीरतया, तैजसपरमाणूंस्तैजसशरीरतया, कार्मणपरमाणून् कार्मणशरीरतया, भाषापरमाणून् भाषात्वेन, प्राणापानपरमाणून् प्राणापानतया, मनोवर्गणापरमाणून् मनस्त्वेन । न पुनराहारकशरीरमप्यत्र ग्राह्यं, कादाचित्कत्वात्तद्भावस्येति । स्पृष्ट्वा परिणमय्य तथापरिणामं नीत्वा एकजीवो विवक्षितैकसत्त्वो मुंचति त्यजति । सर्वाणूंश्चतुर्दशरज्ज्वात्मकव-

र्तिसमस्तपरमाणून् । 'जत्तियकालि त्ति' यावता कालेन, विभक्तिव्यत्ययश्च प्राकृतत्वात्, यदाह पाणिनिः स्वप्राकृतलक्षणे "व्यत्ययोऽप्यासामिति" स इह पुद्गलस्पर्शमानेनोपमितः कालविशेषः स्थूलो बादरो 'दवि त्ति' द्रव्यपुद्गलपरावर्तो भवतीति प्रक्रम । इह किल संसारकान्तारे पर्यटन्नेकजीवोऽनेकैर्भवग्रहणैः सकललोकवर्तिनः सर्वानपि पुद्गलान् यावता कालेन औदारिकशरीरवैक्रियशरीरतैजसशरीरभाषाप्राणापानमनःकार्मणशरीरलक्षणपदार्थसप्तकभावेन यथास्वं परिणमय्य मुञ्चति स तावत्प्रमाणः कालो द्रव्यतो बादरः पुद्गलपरावर्तो भवतीति तात्पर्यम् । इत्यभिहितो बादरो द्रव्यपुद्गलपरावर्त, इदानीं सूक्ष्मद्रव्यपुद्गलपरावर्तमाह–' सुहुमो सगन्नयर त्ति' सूक्ष्मो द्रव्यपुद्गलपरावर्तो भवतीति सम्बन्ध । कथमित्याह–सप्तकान्यतरात् (स्मात्) सप्तकान्यतरेण, विभक्तिव्यत्ययश्च प्राकृतत्वात् । इदमत्र हृदयम्–सप्तानामौदारिकवैक्रियतैजसभाषाप्राणापानमनःकार्मणमध्यादन्यतरेण पुनरेकेन केनचिदौदारिकादिना पूर्वप्रदर्शितप्रकारेण सकललोकवर्तिपुद्गलाना स्पर्शने औदारिकादिशरीरतया गृहीत्वा मोचने सूक्ष्मद्रव्यपुद्गलपरावर्तो भवति । विवक्षितभेदाविशेषे षड्भिर्भेदे परिणमिता अपि न गृह्यन्त इति । एके त्वाचार्या एवं द्रव्यपुद्गलपरावर्तस्वरूप प्रतिपादयन्ति–तथाहि, यदैको जीवोऽनेकैर्भवग्रहणैरौदारिकशरीरवैक्रियशरीरतैजसशरीरकार्मणशरीरचतुष्टयरूपतया यथास्वं सकललोकवर्तिन सर्वान् पुद्गलान् परिणमय्य मुंचति तदा बादरो द्रव्यपुद्गलपरावर्तो भवति । यदा पुनरौदारिकादिचतुष्टयमध्यादेकेन केनचिच्छरीरेण सर्वपुद्गलान् परिणमय्य मुंचति शेषशरीरपरिणमितास्तु पुद्गला न गृह्यन्ते एव तदा सूक्ष्मो द्रव्यपुद्गलपरावर्तो भवतीति ॥ ८४ ॥

उक्तो द्वेधापि द्रव्यपुद्गलपरावर्तः, संप्रति क्षेत्रकालभावपुद्गलपरावर्तान् बादरसूक्ष्मभेदभिन्नान्निरूपयन्नाह—

**लोगपएसोसप्पिणिसमया अणुभागबंधठाणा य। जह तह कममरणेणं पुठा खित्ताइ थूलियरा ॥८८॥**

टीका—लोकस्य चतुर्दशरज्ज्वात्मकक्षेत्रखंडस्य प्रदेशा निर्विभागा भागा लोकप्रदेशाः । तथोत्सर्पिणीशब्देनावसर्पिण्य-प्युपलक्ष्यते दिनग्रहणे रात्र्युपलक्षणवत् तयोः समयाः परमनिकृष्टकालविशेषा उत्सर्पिण्यवसर्पिणीसमयाः । समय-स्वरूपं च पट्टशाटिकापाटनदृष्टान्तादुत्पलपत्रशतभेदोदाहरणाच्चावसेयम् । ततो लोकप्रदेशाश्चोत्सर्पिण्यवसर्पिणीसमया-श्चेति द्वन्द्वः । तथाऽनुभागस्य रसस्य बन्धो बन्धनं तस्य निमित्तभूतानि स्थानानि कषायोदयविशेषलक्षणान्यनुभागबन्ध-स्थानानि अनुभागबन्धाध्यवसायस्थानानीत्यर्थः । चः समुच्चये । ततश्चैते प्रत्येकं त्रयोऽपि पदार्था यदा मरणशब्दस्य प्रत्येकमभिसंबन्धाद्यथा तथा मरणेन क्रमोत्क्रमाभ्यां प्राणपरित्यागलक्षणेन स्पृष्टा व्याप्ता भवन्ति तदा ' खित्ताइ थूल त्ति' क्षेत्रपुद्गलपरावर्तकालपुद्गलपरावर्तभावपुद्गलपरावर्ताः स्थूला बादरा भवन्ति । यदा पुनस्त एव लोकाकाशप्रदेशा उत्सर्पिण्यवसर्पिणीसमया अनुभागबन्धाध्यवसायस्थानानि चेति प्रत्येकं त्रयोऽपि पदार्थाः क्रममरणेन पूर्वस्पृष्टाकाशप्र-देशादिभ्योऽव्यवधानतः प्राणपरित्यागलक्षणेन स्पृष्टा भवन्ति तदा क्षेत्रपुद्गलपरावर्तकालपुद्गलपरावर्तभावपुद्गलपरावर्ताः ' इयर त्ति ' इतरे सूक्ष्मा भवन्तीति गाथाक्षरार्थः । भावार्थः पुनरयम्—यदाऽनन्तभवभ्रमणशीलो जन्तुरनन्तरेषु व्यवहि-तेषु चापरापराकाशप्रदेशेषु म्रियमाणः सर्वानपि चतुर्दशरज्ज्वात्मकलोकाकाशप्रदेशान्मरणेन स्पृशति तदा बादरक्षेत्र-पुद्गलपरावर्तो भवति । नवरं येष्वपरप्रदेशवृद्धिरहितेषु पूर्वावगाढेष्वेव नभःप्रदेशेषु मृतस्ते न गण्यन्तेऽपूर्वास्तु दूरव्य-

रहिता अपि स्पृष्टा गण्यन्त एवेति । कालतस्तु यदोत्सर्पिण्यवसर्पिणीसमयेषु सर्वेष्वपि क्रमेणोत्क्रमेण चानन्तानन्तैर्भवैरेको जन्तुर्मृतो भवति तदा बादरकालपुद्गलपरावर्तो भवति। केवलं येषु समयेष्वेकदा मृतोऽन्यदापि यदि तेष्वेव समयेषु म्रियते तदा ते न गण्यन्ते, यदा पुनरेकद्वितीयादिसमयक्रममुल्लङ्घ्यापि अपूर्वेषु समयेषु म्रियते तदा ते व्यवहिता अपि समया गण्यन्त इति । भावत पुद्गलपरावर्त उच्यते–अनुभागबन्धाध्यवसायस्थानानि मन्दप्रवृद्धप्रवृद्धतरादिभेदेनासंख्येयानि वर्तन्ते, एतेषां चासंख्येयत्वप्रमाणमुत्तरत्र वक्ष्याम: । ततो यदैकैकस्मिन्ननुभागबन्धाध्यवसायस्थाने क्रमेणोत्क्रमेण च म्रियमाणेन जन्तुनाऽसंख्येयलोकाकाशप्रदेशप्रमाणानि सर्वाण्यपि तानि स्पृष्टानि भवन्ति तदा बादरो भावपुद्गलपरावर्तो भवति, अत्रापि यदध्यवसायस्थानमेकदा मरणेन स्पृष्टं तदेवान्यदापि यदि स्पृशति तदा तन्न गण्यते, अपूर्वं तु दूरव्यवहितमपि स्पृष्टं गण्यत एवेति भाविता बादरा: क्षेत्रपुद्गलपरावर्तकालपुद्गलपरावर्तभावपुद्गलपरावर्ता:, साम्प्रतमेत एव सूक्ष्मा भाव्यन्ते–इह येष्वाकाशप्रदेशेष्ववगाढो जन्तुरेकदा मृतस्तेभ्योऽनन्तरव्यवस्थितेष्वेव नभ:प्रदेशेष्वन्यदापि यदि म्रियतेऽपरस्यां वेलायां तेषामप्यनन्तरव्यवस्थितेष्वाकाशप्रदेशेष्वन्यस्यां वेलायां तेषामप्यनन्तरव्यवस्थितेष्वाकाशप्रदेशेष्वन्यस्यां तु वेलायां तेषामप्यनन्तरेष्वन्येष्वेव तावन्नेयं यावदित्थमपरापरेषु नैरन्तर्यव्यवस्थितेषु नभ:प्रदेशेषु क्रमेण म्रियमाणो जन्तु: सर्वानपि लोकाकाशप्रदेशान् स्पृशति, ये चापरप्रदेशवृद्धिरहिता पूर्वावगाढा एव दूरव्यवस्थिता वाकाशप्रदेशा मरणेन स्पृष्टास्ते च न गण्यन्ते तदा सूक्ष्म: क्षेत्रपुद्गलपरावर्त इति । पञ्चसंग्रहशास्त्रे तु सूक्ष्मबादरभेदतो द्विविधोऽपि क्षेत्रपुद्गलपरावर्त इत्थं व्याख्यात:–यथा–चतुर्दशरज्ज्वात्मकलोकस्य सर्वप्रदेशेषु

प्रत्येकं यावता कालेनैकजीवो मृतो भवति। कोऽर्थः ? यावन्तो लोकाकाशप्रदेशास्ते प्रदेशे प्रदेशे क्रमोत्क्रमाभ्यां मरणं कुर्वाणेन यदा सर्वे व्याप्ता भवन्ति तदा बादरः क्षेत्रपुद्गलपरावर्तः, सूक्ष्मस्तु यावता कालेन प्रथमप्रदेशानुबद्धप्रदेशक्रमेण मृतो भवति, कोऽर्थः ? यत्राकाशप्रदेशे मृतस्तदनन्तरप्रदेशक्रमेण यदा सर्वेऽपि लोकाकाशप्रदेशा मरणेन व्याप्ता भवन्ति तदाऽसौ भवति, व्यवहितेषु च मरणं न गण्यते। यद्यपि जीवस्यैकप्रदेशेऽवस्थानमेव नास्ति तथापि जीवाव(गाहना)-स्थानां प्राधान्येनैकः परिकल्प्यते, तस्माद्गणनाप्रवृत्तिः, अमुना च प्रकारेण प्रभूतकालख्यापनं कृतं भवतीति । सूक्ष्मस्तु कालपुद्गलपरावर्तस्तदा भवति यदोत्सर्पिण्या अवसर्पिण्या वा प्रथमसमये कश्चिन्मृतस्ततः पुनरपि समयोनविंशतिकोटीकोटीभिरतिक्रान्ताभिर्भूयोऽपि स एव जन्तुः कालान्तरेण तस्या एव द्वितीयसमये म्रियते पुनरपि कदाचित्तथैव ताभिरतिक्रान्ताभिस्तस्या एव तृतीयसमये, एवं चतुर्थपंचमषष्ठादिसमयक्रमेणानन्तानन्तैर्भवैर्यावत्सर्वेऽप्युत्सर्पिण्यवसर्पिण्योर्विंशतिसागरोपमकोटीकोटीमानयोः समया मरणेन व्याप्ता भवन्ति । ये तु प्रथमादिसमयक्रममुल्लंघ्य व्यवहितसमयाः पूर्वस्पृष्टा वा मरणेन व्याप्तास्ते तु न गृह्यन्त एवेति। सूक्ष्मो भावपुद्गलपरावर्त उच्यते-इह किलानुभागबन्धाध्यवसायस्थानानि बध्यमानकर्मपुद्गलेषु तादृशानुभागपलिच्छेदनिर्वर्तकानि असंख्येयलोकाकाशप्रदेशप्रमाणानि मन्दप्रवृद्धप्रवृद्धतरादिभेदतो वर्तन्ते, तत्र च सर्वस्तोकानुभागपलिच्छेदजनके कषायोदये वर्तमानः कश्चिज्जन्तुर्मृतः, ततः कदाचित् पुनरपि तस्मादनन्तरव्यवस्थिते द्वितीयेऽनुभागबन्धाध्यवसायस्थाने विशेषाधिकानुभागपलिच्छेदजनके वर्तमानो मृतः, पुनरपि तस्मात् कदाचिद्विशेषाधिकानुभागपलिच्छेदजनके तृतीये, एवं क्रमेण क्रमेण विशेषाधिकानुभागप-

विछेदजनकाध्यवसायस्थानकेषु वर्तमानस्य मरणं तावद्वाच्यं यावत्सर्वोत्कृष्टानुभागबन्धाध्यवसायस्थाने म्रियमाणेन जन्तुनाऽनन्तानन्तैर्मरणैः सर्वाण्यपि स्पृष्टानि भवन्तीति व्यवहितानि पूर्वस्पृष्टानि च न गण्यन्त इति ॥ ८८ ॥

व्याख्यातं सप्रपञ्चं पुद्गलपरावर्तस्वरूपं, सम्प्रति यो जन्तुर्यथाविधं समुत्कृष्टं यथाविधश्च जघन्यं प्रदेशबन्धं विधत्ते इत्येतत् स्वामित्वद्वारेण निरूपयन्नाह–

**अप्पयरपयडिबंधी उक्कडजोगी य सन्निपज्जत्तो । कुणइ पएसुक्कोसं जहन्नयं तस्स वच्चासे ॥ ८९ ॥**

टीका–अल्पतराश्च ताः प्रकृतयश्चाऽल्पतरप्रकृतयस्तासां बन्धः स विद्यते यस्यासावल्पतरप्रकृतिबन्धी । यो यो मौलानामौत्तराणां चाल्पप्रकृतिभेदानां बन्धकः स स उत्कृष्टप्रदेशबन्धं करोति, भागानामल्पत्वसद्भावात् । उत्कटयोगी उत्कटवीर्यवान् सर्वोत्कृष्टयोगव्यापारे वर्तमान इत्यर्थः । 'च' समुच्चये स च भिन्नक्रमे पर्याप्तश्चेति योक्ष्यते । संज्ञा मनोविकल्पनरूपा सा विद्यते यस्यासौ संज्ञी, पर्याप्तश्च समासपर्याप्तिकः, करोति विदधाति प्रदेशानामुत्कर्षं उत्कृष्टं प्रदेशोत्कर्षस्तमुत्कृष्टप्रदेशमिति यावत् । इह संज्ञीति विशेष्यं शेषाणि तु विशेषणानि । अत्र च यो मनःपूर्विकां क्रियां विदधाति तस्य सर्वजीवेभ्य उत्कृष्टा चेष्टा भवति, तयैव चोत्कृष्टप्रदेशबन्धो भवतीति संज्ञिग्रहणं । संज्ञ्यपि जघन्ययोग्युत्कृष्टयोगी च भवत्यतो जघन्ययोगिव्युदासार्थमुत्कृष्टयोगिग्रहणं तस्यैवोत्कृष्टप्रदेशबन्धात् । संज्ञ्यप्यपर्याप्तको नोत्कृष्टप्रदेशबन्धं विदधातुमक्षमोऽल्पवीर्यत्वात् तस्येति पर्याप्तग्रहणं । एवंविधस्यापि बहुतरप्रकृतिबन्धकस्य भागबाहुल्यात् स्तोकप्रदेशबन्धो लभ्यते इत्यल्पतरप्रकृतिबन्धीत्युक्तं । तस्मादेवंविधविशेषणविशिष्टो जन्तुरुत्कृष्टं प्रदेशबन्धं विधत्ते

इति । तर्हि जघन्यं प्रदेशबन्धं कथं करोतीत्याह–' जहन्नयं तस्स वच्चासे त्ति ' जघन्य एव जघन्यकः " यावादिभ्य ( ५-३-१५ आकृतिगणोऽयं ) इति स्वार्थे कः प्रत्ययः " तं जघन्यकं प्रदेशबन्धं इति प्रक्रमः । तस्य पूर्वप्रदर्शितस्य विशेष्यस्य विशेषणकलापकस्य च व्यत्यासे विपर्यये सति जन्तुः करोतीति योगः । अयमर्थः–बहुतरप्रकृतिबन्धको मन्दयोगोऽपर्याप्तकोऽसंज्ञी जीवो जघन्यप्रदेशबन्धं विदधातीति ॥ ८९ ॥

अभिहितः सामान्योत्कृष्टजघन्यप्रदेशबन्धस्वामी, सम्प्रति मूलप्रकृतीरुत्तरप्रकृतीश्च प्रतीत्योत्कृष्टप्रदेशबन्धस्वामिनं निरूपयन्नाह–

**मिछ अजयचउ आऊ बितिगुण विणु मोहि सत्त मिछाइ। छण्हं सतरस सुहुमो अजया देसा बितिकसाए**

टीका–' आउ त्ति ' आयुषः उत्कृष्टप्रदेशबन्धस्वामिनः पंच, तद्यथा–' मिछ त्ति ' मिथ्यादृष्टिः, ' अजयचउ त्ति ' अयतेनाविरतसम्यग्दृष्टिनोपलक्षिताश्चत्वारोऽविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तलक्षणाः पंचैव जनाः " अप्पयरपयडिबंधी " इत्यादिभणितगाथासंभवद्विशेषणविशिष्टा आयुष उत्कृष्टप्रदेशबन्धमुपकल्पयन्ति । सम्यग्मिथ्यादृष्टिरपूर्वकरणादयश्चायुर्न बध्नन्तीति नेह गृहीताः । सास्वादनस्तर्ह्यायुर्बध्नात्येव स किमिति न गृहीतः ? इति चेदुच्यते–तत्रोत्कृष्टप्रदेशनिबन्धनोत्कृष्टयोगाभावात् । तथाहि–अनन्तानुबन्धिनामुत्कृष्टोऽनुत्कृष्टश्च प्रदेशबन्धो मिथ्यादृष्टौ साद्यध्रुव एव भणिष्यते, यदि तु सास्वादनेऽप्युत्कृष्टयोगो लभ्यते तदाऽसावप्यनन्तानुबन्धिनो बध्नात्येव, अतो यथाऽविरतादिष्वप्रत्याख्यानावरणादिप्रकृतीनामुत्कृष्टप्रदेशबन्धसद्भावतोऽनुत्कृष्टः प्रदेशबन्धः साद्यादिचतुर्विकल्पोऽप्यभिधास्यते तथैवानन्तानुब-

न्धिना मिथ्यात्वजागलाजात् सास्वादने उत्कृष्टप्रदेशबन्धसद्भावतोऽनुत्कृष्टः प्रदेशबन्धः साद्यादिचतुर्विकल्पोऽपि स्यात्, न चैव निर्दिश्यते, तस्माज्ज्ञायतेऽल्पकालजावित्वेन तथाविधप्रयत्नाभावादन्यतो वा कुतश्चित्कारणात्सास्वादनस्योत्कृष्टयोगो नास्ति । किं चानन्तरमेवोत्तरप्रकृतिस्वामित्वे मतिज्ञानावरणादिप्रकृतीना प्रत्येकं सूक्ष्मसंपरायादिषूत्कृष्ट प्रदेशबन्धमभिधाय जणितशेषप्रकृतीना मिथ्यादृष्टिमेवोत्कृष्टप्रदेशबन्धस्वामिनं निर्देक्ष्यति न सास्वादन, यद्वक्ष्यति–" सेसा उक्कोसपएसगा मिच्छो " । बृहच्छतकेऽप्युक्त–" सेसपएसुक्कड ( कोसं ) मिच्छो त्ति " अतोऽपि ज्ञायते 'नास्ति सास्वादनस्योत्कृष्टयोगसम्भव ' । अतो ये सास्वादनमप्यायुष उत्कृष्टं प्रदेशस्वामिनमिच्छन्ति तन्मतमुपेक्षणीयमिति स्थित । ' वितिगुण विणु मोहि सत्त मिच्छाइति ' मोहे मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामित्वे द्वितीयतृतीयगुणौ विना सास्वादनसम्यग्दृष्टिसम्यग्मिथ्यादृष्टिगुणस्थानके च वर्जयित्वा शेषाणि मिथ्यादृष्ट्यादीनि अनिवृत्तिबादरान्तानि सप्त गुणस्थानकान्यधिक्रियन्ते । इदमत्र हृदयम्–मिथ्यादृष्ट्यविरतदेशविरतप्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरगुणस्थानकवर्तिन सप्त जना उत्कृष्टयोगे वर्तमानाः सप्तविधबन्धका मोहस्योत्कृष्ट प्रदेशबन्ध कुर्वन्ति । अन्ये तु सास्वादनमिश्रावपि संगृह्य " मोहस्स नव उ ठाणाणि त्ति " पठन्ति, तच्च न युक्तियुक्त, यत सास्वादनस्योत्कृष्टयोगो न लभ्यते इत्युक्तमेव, मिश्रेऽप्युत्कृष्टयोगो न लभ्यते, तथाहि–द्वितीयकषायाणामुत्कृष्टप्रदेशबन्धस्वामिनमविरतमेव निर्देक्ष्यति ' अजया देसा वितिकसाए ' इति वचनात् । यदि तु मिश्रेऽप्युत्कृष्टयोगो लभ्यते तदा सोऽपि तत्स्वामितया निर्दिश्येत, न च वक्तव्य मिश्रादल्पतरप्रकृतिबन्धकोऽविरत इत्ययमेव गृहीतो, यतोऽविरतोऽपि मूलप्रकृतीना सप्तविधबन्धकस्तत्र गृहीष्यते, मिश्रोऽपि सप्तविधब-

न्धक एव, उत्तरप्रकृतीरपि मोहनीयस्य सप्तदशाविरतो बध्नाति, मिश्रोऽप्येतावतीरेव, तस्मादुत्कृष्टयोगाद्भावं विहाय नापरं तत्परित्यागे कारणं समीक्षामहे इति। मिश्रेऽप्युत्कृष्टयोगाद्भावात्सप्तैव मोहोत्कृष्टप्रदेशबन्धका इति स्थितम्। 'छण्हं सतरस सुहुमु त्ति' मूलप्रकृतीनां षण्णां ज्ञानावरणदर्शनावरणवेदनीयनामगोत्रान्तरायलक्षणानां। सूचकत्वात्सूत्रस्य सूक्ष्मसंपराय उत्कृष्टयोगे वर्तमान उत्कृष्टप्रदेशबन्धं विदधाति, सूक्ष्मसंपरायो हि मोहायुषी न बध्नात्यतस्तद्भागोऽधिको लभ्यत इत्यस्यैव ग्रहणमिति। तथा सप्तदशानां ज्ञानावरणपंचकदर्शनावरणचतुष्टयसातवेदनीययशःकीर्त्युच्चैर्गोत्रान्तराय-पंचकलक्षणानामुत्तरप्रकृतीनां सूक्ष्मसंपराय उत्कृष्टयोगे वर्तमान उत्कृष्टप्रदेशबन्धं विदधाति, मोहायुषी असौ न बध्ना-तीत्यत्र तद्भागोऽधिको लभ्यते। अपरं च दर्शनावरणभागो नामभागश्च सर्वोऽपीह यथासंख्यं दर्शनावरणचतुष्कस्य यशःकीर्तेश्चैकस्या भवतीति सूक्ष्मसंपरायस्यैव ग्रहणम्। 'अजया देसा बितिकसाए त्ति' अयता अविरतसम्यग्दृष्टयः सप्तविधबन्धका उत्कृष्टयोगे वर्तमाना द्वितीयकषायानप्रत्याख्यानावरणानुत्कृष्टप्रदेशबन्धान् विदधति, मिथ्यात्वमनन्ता-नुबन्धिनश्चैते न बध्नन्त्यतस्तद्भागद्रव्यमधिकं लभ्यत इत्यमीषामेव ग्रहणम्। तथा देशा देशविरताः सप्तविधबन्धका उत्कृष्टयोगे वर्तमानास्तृतीयकषायान् प्रत्याख्यानावरणाख्यानुत्कृष्टप्रदेशबन्धान् कुर्वते, प्रत्याख्यानावरणानामप्यमी अबन्धका अतस्तद्भागोऽधिको लभ्यत इति कृत्वा ॥ ९० ॥

**पण अनियट्टी सुखगइ नराउसुरसुभगतिगविउव्विदुगं।समचउरंसमसायं वइरं मिच्छो व संमो वा ॥९१॥**

टीका–'पण त्ति' पंच प्रकृतीः पुरुषवेदसंज्वलनचतुष्टयलक्षणा अनिवृत्तिबादरः सर्वोत्कृष्टयोगे वर्तमान उत्कृष्टप्र-

देशनन्धा करोति। तत्र पुरुषवेदस्य पुंवेदसज्वलनचतुष्टयात्मक पञ्चविध बध्नन्नसावुत्कृष्टं प्रदेशबन्ध करोति, हास्यरतिभयजुगुप्साभागो लभ्यत इत्यस्यैव ग्रहण । सज्वलनक्रोधस्यानिवृत्तिबादर' पुंवेदबन्धे व्यवच्छिन्ने सज्वलनक्रोधादिचतुष्टय बध्नन्नुत्कृष्टयोगे वर्तमान उत्कृष्टं प्रदेशबन्ध विदधाति, मिथ्यात्वाद्यकषायद्वादशकभाग सर्वनोकषायभागश्च लभ्यत इति कृत्वा । सज्वलनमानस्य स एव क्रोधबन्धे व्यवच्छिन्ने सज्वलनमानादित्रय बध्नन्नुत्कृष्टप्रदेशबन्धं मानस्य करोति क्रोधभागो लभ्यत इति कृत्वा । स एव मानबन्धे व्यवच्छिन्ने मायालोभौ बध्नन् मायाया उत्कृष्ट प्रदेशबन्ध करोति मानभागोऽपि लभ्यत इति कृत्वा । स एव मायाबन्धे व्यवच्छिन्ने लोभमेक बध्नस्तस्यैवोत्कृष्ट प्रदेशबन्धं करोति एक द्वौ वा समयौ,एतच्च विशेषण प्रागपि द्रष्टव्य समस्तमोहनीयभागस्तत्र लभ्यत इति लोभबन्धकस्यैव ग्रहणमिति। तथा सुखगति' प्रशस्तविहायोगति ,नरायु , त्रिकशब्दस्य प्रत्येक सम्बन्धात् सुरत्रिक सुरगतिसुरानुपूर्वीसुरायुर्लक्षण, सुभगत्रिक सुभगसुस्वरादेयस्वरूप, वैक्रियद्विक वैक्रियशरीरवैक्रियाङ्गोपाङ्गलक्षण, समचतुरस्रसस्थान, असातवेदनीय, 'वइर त्ति' वज्रऋषभनाराचसहनन, इत्येतास्त्रयोदश प्रकृतीर्मिथ्यादृष्टि सम्यग्दृष्टिर्वा उत्कृष्टप्रदेशा करोति । तथाहि–असात यथा मिथ्यादृष्टिः सप्तविधबन्धको बध्नाति तथा सम्यग्दृष्टिरपि सप्तविधबन्धक एवैतद्बध्नात्यत प्रकृतिलाघवादिविशेषाभावादुत्कृष्टयोगे वर्तमानौ द्वावप्यसातमुत्कृष्टप्रदेशबन्ध कुरुत । देवमनुष्यायुषोरप्यष्टविधबन्धकावुत्कृष्टयोगे वर्तमानौ द्वावप्यविशेषेणोत्कृष्टप्रदेशबन्ध कुरुत । देवगतिदेवानुपूर्वीवैक्रियशरीरवैक्रियाङ्गोपाङ्गसमचतुरस्रसस्थानप्रशस्तविहायोगतिसुभगसुस्वरादेयलक्षणा नव नामप्रकृतयो नाम्नोऽष्टाविंशतिबन्धकाले एव बन्धमागच्छन्ति, नाधस्तनेषु पूर्वोक्तरूपेषु त्रयोविंशति-

पंचविंशतिषड्विंशतिबन्धेषु। तां चाष्टाविंशतिं देवगतिप्रायोग्यां सम्यग्दृष्टिर्मिथ्यादृष्टिश्च बध्नाति । तथाहि—देवगतिर्देवानुपूर्वी पंचेन्द्रियजातिर्वैक्रियशरीरं वैक्रियांगोपांगं तैजसकार्मणे समचतुरस्रसंस्थानं वर्णचतुष्कं अगुरुलघुनाम पराघातनाम उपघातनाम उच्छ्वासनाम प्रशस्तविहायोगतिनाम त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं सुभगनाम सुस्वरनाम आदेयनाम यशःकीर्त्ययशःकीर्त्योरेकतरं निर्माणनामेति देवगतिप्रायोग्याष्टाविंशतिबन्धसहचरिता एता नव प्रकृतीर्निर्वर्तयति । सप्तविधबन्धकौ सम्यग्दृष्टिमिथ्यादृष्टी उत्कृष्टयोगे वर्तमानावविशेषेणोत्कृष्टप्रदेशा विधत्तो यत एषाऽष्टाविंशतिर्मिथ्यादृष्टिसास्वादनमिश्राविरतदेशविरतानां देवगतिप्रायोग्यं बध्नतामवसेया । अष्टाविंशतेरुपरितनेष्वेकोनत्रिंशदादिबन्धस्थानेष्वप्येता नव प्रकृतयो बध्यन्ते केवलं तत्र भागबाहुल्यादुत्कृष्टः प्रदेशबन्धो न लभ्यत इत्यष्टाविंशतिसहचरितत्वेन ग्रहणम् । वज्रऋषभनाराचस्यापि सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा सप्तविधबन्धको नाम्नो वज्रऋषभनाराचसहितामेकोनत्रिंशतं तिर्यग्गतितिर्यगानुपूर्व्यौ पंचेन्द्रियजातिरौदारिकशरीरमौदारिकांगोपांगं तैजसकार्मणे वज्रऋषभनाराचसंहननं समचतुरस्रसंस्थानं वर्णचतुष्कं अगुरुलघु उपघातं पराघातं उच्छ्वासनाम प्रशस्तविहायोगतिः त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं सुभगनाम सुस्वरनाम आदेयनाम यशःकीर्त्ययशःकीर्त्योरेकतरं निर्माणमितिलक्षणां, मनुष्यगतिमनुष्यानुपूर्व्यौ पंचेन्द्रियजातिरौदारिकशरीरमौदारिकांगोपांगं तैजसकार्मणे समचतुरस्रसंस्थानं वज्रऋषभनाराचसंहननं वर्णचतुष्कमगुरुलघु पराघातं उपघातनाम उच्छ्वासनाम प्रशस्तविहायोगतिः त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं सुभग-

नाम सुस्वरनाम आदेयनाम यश कीर्त्ययश कीर्त्योरेकतर निर्माणमितिलक्षणा वा निर्वर्तयन्नुत्कृष्टयोगे वर्तमान उत्कृष्टप्रदेशवन्ध करोति, एकोनत्रिंशतोऽधस्तनवन्धेष्विद न वध्यते त्रिंशद्बन्धे तु वध्यते । केवल जागवाहुल्यात्तत्रोत्कृष्टप्रदेशवन्धो न लभ्यत इत्येकोनत्रिंशद्बन्धगतस्यैव ग्रहणमिति सम्यग्दृष्टिमिथ्यादृष्ट्योरविरोधेन जावितस्त्रयोदशानामपि प्रकृतीनामुत्कृष्टः प्रदेशवन्ध इति ॥ ए१ ॥

निद्दापयलादुजुयलजयकुच्छातित्थ सम्मगो सुजई । आहारदुगं सेसा उक्कोसपएसगा मिच्छो ॥ ए२ ॥

टीका–निद्रा, प्रचला, द्वयोर्युगलयो समाहारो द्वियुगलं हास्यरत्यरतिशोकाख्य, जय, ' कुच्छ त्ति ' जुगुप्सा, ' तित्थ ति ' तीर्थकरनामेत्येतत्प्रकृतिनवक । सम्यग्गच्छति ज्ञानादिमोक्षमार्गमिति सम्यग्ग सम्यग्दृष्टि उत्कृष्टयोगे वर्तमान उत्कृष्टप्रदेश वध्नाति । तत्र निद्राप्रचलयोरविरतसम्यग्दृष्ट्यादयोऽपूर्वकरणान्ता सर्वोत्कृष्टयोगे वर्तमाना' सप्तविधवन्धकाले एक द्वौ वा समयावुत्कृष्ट प्रदेशवन्ध कुर्वन्ति आयुर्दल्यजागोऽधिको लभ्यत इति सप्तविधवन्धकग्रहण, स्त्यानर्द्धित्रिक सम्यग्दृष्टयो न वध्नन्त्यतस्तद्भागलाजोऽपि जवतीति सम्यग्दृष्टीनामेव ग्रहण । मिथ्यादृष्टिसास्वादनौ स्त्यानर्द्धित्रिक वध्नीत इति नेह गृहीतौ । मिश्रस्त्वेतन्न वध्नाति, केवलमुक्तनीत्या तस्योत्कृष्टयोगो न लभ्यत इति सोऽपि नेहाधिकृत । हास्यरत्यरतिशोकजयजुगुप्साना तु ये ये सम्यग्दृष्टयोऽविरताद्यपूर्वकरणान्ताना मध्ये तद्बन्धकास्ते ते उत्कृष्टयोगे वर्तमाना उत्कृष्ट प्रदेशवन्धमत्रिनिर्वर्तयन्ति मिथ्यात्वजागो लभ्यत इति सम्यग्दृष्टिग्रहण । तीर्थकरनाम्नोऽप्यविरताद्यपूर्वकरणान्तः सम्यग्दृष्टिर्मूलप्रकृतिसप्तविधवन्धक देवगतिर्देवानुपूर्वी पचेन्द्रियजातिवैक्रियशरीर वैक्रियागोपागं समचतुरस्रसंस्थानमुच्छ्वास-

नाम पराघातनाम प्रशस्तविहायोगतिस्त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम स्थिरास्थिरयोः शुभाशुभयोर्यशःकीर्त्य-
यशःकीर्त्योः पृथगन्यतरं सुभगनाम सुस्वरनामादेयनाम वर्णचतुष्कं तैजसकार्मणे अगुरुलघूपघातनाम निर्माणमित्येता-
मष्टाविंशतिं तीर्थंकरनामसहितामेकोनत्रिंशतं देवगतिप्रायोग्यामुत्तरप्रकृतीर्बध्नन्नुत्कृष्टयोगे वर्तमान उत्कृष्टं प्रदेशबन्धं
करोति, मिथ्यादृष्टिरेतन्न बध्नातीति सम्यग्दृष्टिग्रहणं। तीर्थंकरनामसहिताश्च त्रयोविंशत्यादिकाः पूर्वोक्तरूपा नाम्न उत्त-
रप्रकृतयो न बध्यन्ते, त्रिंशदेकत्रिंशद्बन्धौ तु पूर्वोक्तनीत्या तीर्थंकरनामसहितौ बध्येते, केवलं तत्र भागबाहुल्याडुत्कृष्टप्र-
देशबन्धो न लभ्यत इति शेषपरिहारेणैकोनत्रिंशत्प्रकृतिबन्धग्रहणं। तथा सुयतिः शोभनसाधुः प्रस्तावादप्रमत्तयतिरपूर्व-
करणश्च गृह्यते, द्वयोरपि प्रमादरहितत्वेन सुयतित्वात्। ततश्चैतौ द्वावपि देवगतिर्देवानुपूर्वी पंचेन्द्रियजातिर्वैक्रियशरीरं
वैक्रियांगोपांगं समचतुरस्रसंस्थानं पराघातनामोच्छ्वासनाम प्रशस्तविहायोगतिस्त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम
स्थिरनाम शुभनाम सुभगनाम सुस्वरनामादेयनाम यशःकीर्तिनाम वर्णचतुष्कं तैजसकार्मणे अगुरुलघुनामोपघातनाम
निर्माणनामाहारकशरीरमाहारकांगोपांगमित्येतद्देवगतिप्रायोग्यं त्रिंशन्नामोत्तरप्रकृतिकदंबकं बध्नन्तावुत्कृष्टयोगे वर्तमानावा-
हारकद्विकमाहारकशरीराहारकांगोपांगलक्षणमुत्कृष्टप्रदेशं बध्नीतः, तीर्थंकरनामसहिते एकत्रिंशद्बन्धेऽप्येतद्बध्यते, किंतु तत्र
भागबाहुल्यान्न गृह्यते। तथा शेषा भणितचतुःपंचाशत्प्रकृतिभ्य उद्धरिताः स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिचतुष्टयस्त्री-
वेदनपुंसकवेदनारकायुष्कतिर्यगायुष्कनरकगतिनरकानुपूर्वीतिर्यग्गतितिर्यगानुपूर्वीमनुष्यगतिमनुष्यानुपूर्व्येकेन्द्रियजातिद्वी-
न्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजातिपंचेन्द्रियजातिरौदारिकशरीरौदारिकांगोपांगतैजसकार्मणप्रथमवज्रसंहननप्रथ-

मवर्जसंस्थानवर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासातपोद्योताप्रशस्तविहायोगतित्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तप्रत्येक-
साधारणस्थिरास्थिरशुभाशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनिर्माणनीचैर्गोत्राणि चेत्येताः षट्षष्टिप्रकृतय उत्कृष्टप्रदेशका
उत्कृष्टप्रदेशबन्धा 'मिच्छो त्ति' मिथ्यादृष्टिरेव करोति । तथाहि—मनुष्यद्विकपञ्चेन्द्रियजात्यौदारिकद्विकतैजसकार्म-
णवर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभायशःकीर्तिनिर्माणलक्षणाः पञ्चविंश-
तिप्रकृतीर्मुक्त्वा शेषा एकचत्वारिंशत्सम्यग्दृष्टेर्बन्ध एव नागच्छन्ति । सास्वादनस्तु काश्चिद्बध्नाति परं तस्योत्कृष्टयोगो
न लभ्यतेऽत एता एकचत्वारिंशत्प्रकृतीर्मिथ्यादृष्टिरेवोत्कृष्टयोगे वर्तमानो मूलप्रकृतीनामुत्तरप्रकृतीनां च यथासम्भव-
मल्पतरबन्धक उत्कृष्टप्रदेशां करोति । या अपि चोक्तस्वरूपाः पञ्चविंशतिप्रकृतयः सम्यग्दृष्टेर्बन्धे समागच्छन्ति तास्वपि
मध्ये औदारिकतैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातबादरप्रत्येकास्थिराशुभायशःकीर्तिनिर्माणलक्षणानां पञ्चदशप्रकृती-
नामपर्याप्तैकेन्द्रिययोग्यो नाम्नस्त्रयोविंशतिप्रकृतिनिष्पन्नः तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतिर्यग्गतितिर्यगा-
नुपूर्व्येकेन्द्रियजात्यौदारिकशरीरहुण्डसंस्थानत्रसस्थावरसूक्ष्मैकतरापर्याप्तप्रत्येकसाधारणान्यतरास्थिराशुभदुर्भगानादेयायशः-
कीर्तिलक्षणो बन्धः तेनैव सह बध्यमानानामुत्कृष्टप्रदेशबन्धो लभ्यते नोत्तरैः पंचविंशत्यादिबन्धैः भागबाहुल्यात् ।
शेषाणां तु मनुष्यद्विकपंचेन्द्रियजात्यौदारिकाङ्गोपाङ्गपराघातोच्छ्वासत्रसपर्याप्तस्थिरशुभलक्षणानां दशप्रकृतीनां यथासम्भवं
पर्याप्तैकेन्द्रियापर्याप्तत्रसयोग्यपञ्चविंशतिबन्धेनैव सह बध्यमानानामुत्कृष्टः प्रदेशबन्धो लभ्यते नोत्तरैः षड्विंशत्यादिबन्धैः-
र्भागबाहुल्यादेव । नाप्यधस्तनेन त्रयोविंशतिबन्धेन तत्रैतासां बन्धाभावादेव । तौ च त्रयोविंशतिपञ्चविंशतिबन्धौ सम्य-

ग्दृष्टेर्न जवतः देवपर्याप्तमनुष्यप्रायोग्यबन्धकत्वात्तस्येत्यत एतासामपि पंचविंशतिप्रकृतीनां यथोक्तप्रकारेण त्रयोविंशत्या पंचविंशत्या च सह बध्यमानानां सप्तविधबन्धक उत्कृष्टयोगो मिथ्यादृष्टिरेवोत्कृष्टं प्रदेशबन्धं करोतीति ॥ ए२ ॥

निरूपितमुत्तरप्रकृतीनामुत्कृष्टप्रदेशबन्धस्वामित्वं, अधुना तासामेव जघन्यप्रदेशबन्धस्वामित्वमभिधित्सुराह—

**सुमुणी कुन्नि असन्नी निरयतिगसुराउसुरविउव्विडुगं।संमो जिणं जहन्नं सुहुमनिगोयाइखणि सेसाए३**

टीका–सुमुनिः प्रमादरहितत्वेन प्रधानसाधुरप्रमत्तयतिः। ' कुन्नि त्ति ' द्वे प्रकृती आहारकशरीराहारकांगोपांगलक्षणे जघन्यप्रदेशे बध्नाति। अयमर्थः–परावर्तमानयोगो घोलनयोगीत्यर्थः । अष्टविधबन्धकः स्वप्रायोग्यसर्वजघन्यवीर्ये व्यवस्थितो नाम्नो देवगतिर्देवानुपूर्वी पंचेन्द्रियजातिर्वैक्रियशरीरं वैक्रियांगोपांगं समचतुरस्रसंस्थानं उच्छ्वासनाम पराघातनाम प्रशस्तविहायोगतिस्त्रसनाम बादरनाम पर्याप्तकनाम प्रत्येकनाम स्थिरनाम शुजनाम यशःकीर्तिनाम सुजगनाम सुस्वरनामादेयनाम वर्णचतुष्कं तैजसकार्मणे अगुरुलघूपघातं निर्माणं तीर्थकरनामाहारकशरीरमाहारकांगोपांगमित्येवमेकत्रिंशतं प्रकृतीर्बध्नन्नप्रमत्तयतिराहारकशरीराहारकांगोपांगलक्षणे द्वे प्रकृती जघन्यप्रदेशे बध्नाति । त्रिंशद्बन्धेऽप्येते बध्येते परं तत्राल्पा जागा इत्येकत्रिंशद्बन्धग्रहणं। एतच्च प्रकृतिद्वयमन्यत्र न बध्यत इत्यप्रमत्तयतिग्रहणं । तथाऽसंज्ञी सामान्योक्तावपि घोलमानयोगः परावर्तमानयोग इत्यर्थः। नरकत्रिकं नरकगतिनरकानुपूर्वीनरकायुर्लक्षणं, सुरायुः, इत्येताश्चतस्रः प्रकृतीर्जघन्यप्रदेशबन्धाः करोति। तथाहि–पृथिव्यप्तेजोवायुवनस्पतिकायिकद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रिया देवनारकेषूत्पत्त्यजावादेवैताश्चतस्रः प्रकृतीर्न बध्नन्तीति नेहाधिक्रियन्ते । असंख्यप्यपर्याप्तकस्तथाविधसंक्लेशविशुद्ध्य-

भावान्नैता बध्नात्यत सूत्रे सामान्योक्तावपि व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात् पर्याप्तकोऽसौ द्रष्टव्य । सोऽपि यद्येकस्मिन्नेव वाग्योगे काययोगे वा चिरमवतिष्ठमानो गृह्येत तदा तीव्रचेष्टो भवेत् । योगात्तु योगान्तर पुन सक्रामत· स्वभावादल्पचेष्टो भवतीति परावर्तमानयोगग्रहणं । ततश्च परावर्तमानयोगोऽष्टविध बध्नन्नपर्याप्तोऽसञ्ज्ञी स्वप्रायोग्यसर्वजघन्यवीर्ये वर्तमान प्रस्तुतप्रकृतिचतुष्टस्यैक चतुरो वा समयान् यावज्जघन्यप्रदेशबन्ध करोतीति परमार्थ । पर्याप्तजघन्ययोगस्योत्कृष्टतोऽपि चतु समयावसानत्वादुत्तरत्राप्येप कालनियमो द्रष्टव्य· । ननु पर्याप्तसञ्ज्ञी किमिति प्रकृतप्रकृतिचतुष्टय न बध्नातीति चेदुच्यते–प्रभूतयोगत्वाज्जघन्योऽपि हि पर्याप्तसञ्ज्ञियोग पर्याप्तासञ्ज्युत्कृष्टयोगादप्यसंख्येयगुण इति । तथा 'सुरविउव्विदुग ति' द्विकशब्दस्य प्रत्येक सबन्धात्सुरद्विक सुरगतिसुरानुपूर्वीरूप, वैक्रियद्विक वैक्रियशरीरवैक्रियागोपागलक्षण, जिननाम तीर्थकरनामेत्येतत्प्रकृतिपचक 'समो त्ति' सम्यग्दृष्टिर्व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायाद्भवाद्यसमये वर्तमानो 'जहन्न ति' जघन्यं जघन्यप्रदेश करोति । तथाहि—कश्चिन्मनुष्यस्तीर्थकरनाम बद्ध्वा देवेषु समुत्पन्नः प्रथमसमय एव मनुष्यगतिप्रायोग्या तीर्थकरनामसहिता नामप्रकृतित्रिंशत मनुष्यगतिर्मनुष्यानुपूर्वी पचेन्द्रियजातिरौदारिकशरीरमौदारिकागोपाग समचतुरस्रसस्थानं वज्रऋषभनाराचसहनन पराघातमुच्छ्वासं प्रशस्तविहायोगतिस्त्रस बादर पर्याप्त प्रत्येक स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतर यश कीर्त्ययश·कीर्त्योरेकतर सुभग सुस्वरमादेय तीर्थकरनाम वर्णचतुष्क तैजसकार्मणे अगुरुलघूपघात निर्माणमितिलक्षणा बध्नन्मूलप्रकृतिसप्तविधबन्धकोऽविरतसम्यग्दृष्टि स्वप्रायोग्यजघन्यवीर्ये वर्तमानस्तीर्थकरनामजघन्यप्रदेशबन्ध करोति । नारकोऽपि श्रेणिकादिवदेव

तद्बन्धकः संभवति, परमिह देवोऽल्पयोगत्वादनुत्तरवासी गृह्यते, नारकेषु त्वेवंभूतो जघन्ययोगो न लभ्यतेऽतस्तेषु समुत्पन्नो नेह गृहीतः, तिर्यंचस्तु तीर्थंकरनाम न बध्नन्तीत्युपेक्षिताः, मनुष्यास्तु भवाद्यसमये तीर्थंकरनामसहितां नाम्न एकोनत्रिंशतमेव बध्नन्त्यतस्तत्राल्पा भागा भवन्ति । एकत्रिंशद्बन्धस्तु तीर्थंकरनामसहितः संयतस्यैव भवति, तत्र च वीर्यमल्पं न लभ्यते, अन्येषु तु नामबन्धेषु तीर्थंकरनामैव न बध्यतेऽतः शेषपरिहारेण त्रिंशद्बन्धकस्य देवस्यैव ग्रहणं, देवद्विकवैक्रियद्विकयोस्तु बद्धतीर्थंकरनामा देवनारकेभ्यश्च्युत्वा समुत्पन्नो मूलप्रकृतिसप्तविधबन्धको देवगतिर्देवानुपूर्वी पंचेन्द्रियजातिर्वैक्रियशरीरं वैक्रियांगोपांगं समचतुरस्रसंस्थानं उच्छ्वासं पराघातं प्रशस्तविहायोगतिस्त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरं सुभगनाम सुस्वरनाम आदेयनाम वर्णचतुष्टयं तैजसकार्मणे अगुरुलघूपघातं निर्माणं तीर्थंकरनामेतिलक्षणां देवगतिप्रायोग्यां नामैकोनत्रिंशतं निर्वर्तयन् स्वप्रायोग्यं सर्वजघन्यवीर्ये व्यवस्थितो भवाद्यसमये वर्तमानो मनुष्यो जघन्यप्रदेशबन्धं करोति । देवनारका हि तावद्भवप्रत्ययादेवैतत्प्रकृतिचतुष्टयं न बध्नन्तीति नेहाधिकृताः । तिर्यंचः पुनरभोगभूमिजा भवाद्यसमयेऽपि बध्नन्त्येतत् केवलं ते देवगतिप्रायोग्यामष्टाविंशतिमेव पूर्वप्रदर्शितस्वरूपां रचयन्ति, नैकोनत्रिंशदादिबन्धाः, तेषां तीर्थंकराहारकसहितत्वात् । तिरश्चां तु तदबन्धकत्वात् । अतस्तेषु भागा अल्पे लभ्यन्ते इति तेऽपीह नाधिक्रियन्ते । मनुष्यस्याप्यष्टाविंशतिबन्धकस्य भागा बहवो न लभ्यन्ते, त्रिंशदेकत्रिंशद्बन्धौ तु देवगतिप्रायोग्यौ संयतस्य भवतः, तत्र च वीर्यमल्पं न लभ्यते । अन्ये तु देवगतिप्रायोग्यबन्धा एव न सन्तीत्यालोच्यैकोनत्रिंशद्बन्धकस्य मनुष्यस्यैव ग्रहणं । ननु तिर्यक्षु

पर्याप्तसञ्ज्ञी देवगतिप्रायोग्यमेतत्प्रकृतिचतुष्टयं बध्नाति स कस्मादिह नाङ्गीकृत ? उच्यते-प्रभूतयोगत्वात्, अपर्याप्त-पर्याप्तसञ्ज्ञी देवगतिप्रायोग्यमेतत्प्रकृतिचतुष्टयं ... सञ्ज्ञियोगाद्धि पर्याप्तसञ्ज्ञियोगो जघन्योऽप्यसङ्ख्येयगुण इति। 'सुहुमनिगोयाइखणि सेस त्ति' सूक्ष्मनिगोदजीवोऽपर्याप्तक आदिक्षणे भवाद्यसमये शेषा उक्तैकादशप्रकृतिभ्योऽवशिष्टा नवोत्तरशतसङ्ख्या प्रकृतीराश्रित्य सर्वजघन्यवीर्यलब्धि-युक्तो यथासम्भव च बह्वी' प्रकृतीर्बध्नन् जघन्यप्रदेशबन्धा करोति, सर्वासामप्यत्र बन्धसद्भावात्, सर्वजघन्यवीर्यस्य चात्रैव सम्भवादिति ॥ ९३ ॥

निरूपित जघन्यप्रदेशबन्धस्वामित्व, अधुना प्रदेशबन्धमेव साद्यादिभङ्गकैर्निरूपयन्नाह—

**दंसणछगभयकुच्छाबितितुरियकसायविग्घनाणाणं। मूलछगे णुक्कोसो चउह दुहा सेसि सव्वह ॥ ९४ ॥**

टीका-दर्शनषट्क=चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनावरणनिद्राप्रचलालक्षण, भय, जुगुप्सा, 'बितितुरिय-कसाय त्ति' कषायशब्दस्य प्रत्येक योगाद्द्वितीयकषाया अप्रत्याख्यानावरणा, तृतीयकषाया प्रत्याख्यानावरणा, तुर्या-श्चतुर्था कषाया सञ्ज्वलनकषाया, विघ्नानि पञ्च=(दानलाभभोगोपभोगवीर्यान्तरायाख्यानि,) ज्ञानानि ज्ञानावरणानि (मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमन.पर्यायज्ञानावरणकेवलज्ञानावरणलक्षणानि पञ्च,) इत्येतासामुत्तरप्रकृतिषु मध्ये त्रिंशत प्रकृतीना। तथा 'मूलछगेति' मूलप्रकृतिषट्के=ज्ञानावरणदर्शनावरणवेदनीयनामगोत्रान्तरायलक्षणेऽनुत्कृष्ट एव प्रदेशबन्ध। 'चउह त्ति' चतुर्धा साद्यनादिध्रुवाध्रुवरूपचतुर्विकल्पोऽपि भवतीत्यर्थ.। इह तावद्यत्र सर्वबहव कर्मस्कन्धा गृह्यन्ते स उत्कृष्ट' प्रदेशबन्ध, तत स्कन्धहानिमाश्रित्य यावत्सर्वस्तोककर्मस्कन्धग्रहण तावत्सर्वोऽप्यनुत्कृष्ट

इत्युत्कृष्टानुत्कृष्टप्रकारद्वयेन सर्वोऽपि प्रदेशबन्धः संगृहीतः । यत्र सर्वस्तोककर्मस्कन्धग्रहणं स जघन्यः प्रदेशबन्धः । ततः स्कन्धवृद्धिमाश्रित्य यावत्सर्वबहुस्कन्धग्रहणं तावत्सर्वोऽप्यजघन्यः इति जघन्याजघन्यप्रकारद्वयेन सर्वोऽपि प्रदेशबन्धः संगृहीत इत्यनया परिभाषया दर्शनावरणषट्कादीनामुत्तरप्रकृतीनामनुत्कृष्टप्रदेशबन्धः साद्यादिचतुर्विकल्पो भवतीति । तथाहि—चक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणकेवलदर्शनावरणलक्षणप्रकृतिचतुष्कविषयः क्षपकस्योपशमकस्य वा सूक्ष्मसंपरायस्य सर्वोत्कृष्टयोगे वर्तमानस्यैकं द्वौ वा समयौ यावदुत्कृष्टः प्रदेशबन्धः प्राप्यते । सूक्ष्मसंपरायो हि मोहनीयायुःकर्मद्वयं सर्वथा न बध्नाति, दर्शनावरणस्याप्येतदेव प्रकृतप्रकृतिचतुष्टयं बध्नाति, न शेषप्रकृतीः, अतो मोहनीयायुर्भागयोर्यथास्वमत्र प्रवेशान्निद्रापंचकभागस्यापि चात्र प्रवेशाद्बहुद्रव्यमिह लभ्यत इति सूक्ष्मसंपरायग्रहणं । उत्कृष्टश्च प्रदेशबन्ध उक्तनीत्या उत्कृष्टेनैव योगेन भवतीत्युत्कृष्टयोगग्रहणं । उत्कृष्टयोगावस्थानकालश्चैतावानेव भवतीत्येकद्विसमयग्रहणं । एनं चोत्कृष्टप्रदेशबन्धं कृत्वोपशांतमोहावस्थां चारुह्य पुनः प्रतिपत्योत्कृष्टयोगाद्वाऽत्रैव प्रतिपत्य यदाऽनुत्कृष्टप्रदेशबन्धं करोति तदाऽसौ सादिः, एतच्च स्थानमप्राप्तपूर्वाणामनादिः सदा निरन्तरं बध्यमानत्वात्, ध्रुवोऽभव्यानां, अध्रुवो भव्यानामिति । निद्राप्रचलाद्विकस्य त्वविरतसम्यग्दृष्ट्यादयोऽपूर्वकरणान्ताः सर्वोत्कृष्टयोगवृत्तयः सप्तविधबन्धकाले एकं द्वौ वा समयावुत्कृष्टप्रदेशबन्धं विदधति, आयुर्द्रव्यभागोऽधिको लभ्यत इति सप्तविधबन्धकग्रहणं । स्त्यानर्द्धित्रिकं सम्यग्दृष्टयो न बध्नन्तीत्यतस्तद्भागलाभोऽपि भवतीति सम्यग्दृष्टीनामेव ग्रहणं । मिथ्यादृष्टिसास्वादनौ स्त्यानर्द्धित्रिकं बध्नीत इति नेह गृहीतौ । मिश्रस्त्वेतन्न बध्नाति, केवलमुक्तनीत्या तस्योत्कृष्टयोगो न लभ्यत

इति सोऽपि नेहाधिकृत । एते चाविरतसम्यग्दृष्ट्यादयो यदोत्कृष्टयोगाद्बन्धव्यवच्छेदाद्वा प्रतिपत्यानुत्कृष्टं प्रदेशबन्धमुपकल्पयन्ति तदाऽसौ सादि, सम्यक्त्वसहितं चोत्कृष्टयोगमप्राप्तपूर्वाणामनादि, ध्रुवोऽभव्याना, अध्रुवो भव्यानामिति । तथा भयजुगुप्सयो· सम्यग्दृष्टिरविरतादिरपूर्वकरणान्त उत्कृष्टयोगे वर्तमान उत्कृष्ट प्रदेशबन्ध करोति, मिथ्यात्वभागो लभ्यत इति सम्यग्दृष्टिग्रहण । कषायभागः पुन सजातित्वात्कषायाणामेव भवति, नैतयो· । मिथ्यादृष्टिस्तु मिथ्यात्व बध्नातीति मिथ्यात्वभागो न लभ्यत इति तस्येहाग्रहण । सास्वादनमिश्रयोस्तु लभ्यते मिथ्यात्वभाग· केवलमुक्तनीत्या तयोरुत्कृष्टयोगो न लभ्यत इति तावपि नेहाधिकृतौ । अपूर्वकरणोपरिवर्तिनस्तु भयजुगुप्से न बध्नन्तीत्यपूर्वकरणान्तविशेषणम् । एते चाविरतसम्यग्दृष्ट्यादयो यदोत्कृष्टयोगाद्बन्धव्यवच्छेदाद्वा प्रतिपत्यानुत्कृष्ट प्रदेशबन्धमुपकल्पयन्ति तदाऽसौ सादि, तत्स्थानमप्राप्तपूर्वाणामनादि, ध्रुवोऽभव्याना, अध्रुवो भव्यानामिति । तथाऽप्रत्याख्यानावरणचतुष्टयस्योत्कृष्टयोगोऽविरतसम्यग्दृष्टि सप्तविधबन्धक उत्कृष्ट प्रदेशबन्ध करोति, मिथ्यात्वमनन्तानुबन्धिनश्चासौ न बध्नात्यतस्तद्भागद्रव्यमधिक लभ्यत इत्यस्यैव ग्रहण । मिथ्यादृष्टिर्मिथ्यात्वमनन्तानुबन्धिनश्च सास्वादनस्त्वनन्तानुबन्धिनो बध्नातीति तयोरग्रहण । मिश्रस्तु मिथ्यात्वमनन्तानुबन्धिनश्च न बध्नाति, केवलमुक्तनीत्या तस्योत्कृष्टयोगो न लभ्यते, देशविरतादयस्त्वप्रत्याख्यानावरणान्न बध्नन्तीति शेषव्युदासेनाविरतसम्यग्दृष्टिरेवाधिकृत । एष चाविरतसम्यग्दृष्टिर्यदा बन्धव्यवच्छेदादुत्कृष्टयोगाद्वा प्रतिपत्य पुनरनुत्कृष्टप्रदेशबन्ध विदधाति तदाऽसौ सादि, तत्स्थानमप्राप्तपूर्वाणामनादि·, ध्रुवोऽभव्याना, अध्रुवो भव्यानामिति । तथा प्रत्याख्यानावरणचतुष्टयस्योत्कृष्टयोगो देशविरतः सप्त-

विधबन्धक उत्कृष्टप्रदेशबन्धं करोति । अप्रत्याख्यानावरणानामप्यसावबन्धकोऽतस्तद्भागोऽधिको लभ्यत इति । एष च देशविरतो यदा बन्धव्यवच्छेदादनुत्कृष्टयोगाद्वा प्रतिपत्य पुनरनुत्कृष्टप्रदेशबन्धं करोति तदाऽसौ सादिः, तत्स्थानमप्राप्तपूर्वाणामनादिः, ध्रुवोऽभव्यानां, अध्रुवो भव्यानामिति । तथा संज्वलनक्रोधस्यानिवृत्तिबादरः पुंवेदबन्धे व्यवच्छिन्ने संज्वलनक्रोधादिचतुष्टयं बध्नन्नुत्कृष्टयोगे स्थितः उत्कृष्टं प्रदेशबन्धं करोति । मिथ्यात्वाद्यकषायद्वादशकभागः सर्वनोकषायभागश्च लभ्यत इति कृत्वा । संज्वलनमानस्य स एव क्रोधबन्धे व्यवच्छिन्ने संज्वलनमानादित्रयं बध्नन्नुत्कृष्टप्रदेशं करोति क्रोधभागो लभ्यत इति कृत्वा । स एव मानबन्धे व्यवच्छिन्ने मायालोभौ बध्नन्मायाया उत्कृष्टप्रदेशं करोति मानभागोऽपि लभ्यत इति कृत्वा । स एव मायाबन्धे व्यवच्छिन्ने लोभमेकं बध्नंस्तस्यैवोत्कृष्टप्रदेशं करोति एकं द्वौ वा समयौ, एतच्च विशेषणं प्रागपि द्रष्टव्यं, समस्तमोहनीयभागस्तत्र लभ्यत इति लोभबन्धकस्यैव ग्रहणं । एष चानिवृत्तिबादरो यथा बन्धव्यवच्छेदादनुत्कृष्टयोगाद्वा प्रतिपत्य पुनरनुत्कृष्टप्रदेशबन्धं करोति तदाऽसौ सादिः, तत्स्थानमप्राप्तपूर्वाणामनादिः, ध्रुवोऽभव्यानां, अध्रुवो भव्यानामिति । तथा ज्ञानावरणपंचकान्तरायपंचकविषयः क्षपकस्योपशमकस्य वा सूक्ष्मसंपरायस्य सर्वोत्कृष्टयोगे वर्तमानस्यैकं द्वौ वा समयौ यावदुत्कृष्टः प्रदेशबन्धः प्राप्यते । सूक्ष्मसंपरायो हि मोहनीयायुःकर्मद्वयं न बध्नाति एतयोर्भागयोरप्यत्र ज्ञानावरणपंचकेऽन्तरायपंचके च यथास्वं प्रवेशाद्बहुद्रव्यमिह लभ्यत इति सूक्ष्मसंपरायग्रहणं । इह चोत्कृष्टप्रदेशबन्धं कृत्वोपशान्तमोहावस्थां चारुह्य पुनः प्रतिपत्योत्कृष्टयोगाद्वाऽत्रैव प्रतिपत्य यदा पुनरनुत्कृष्टप्रदेशबन्धं करोति तदाऽसौ सादिः, एतच्च स्थानमप्राप्तपूर्वाणामनादिः सदा निरन्तरं बध्यमानत्वात् ध्रुवोऽभव्यानां, अध्रुवो भव्यानामिति । तदेवं त्रिंशत उत्तरप्रकृतीनामनुत्कृष्टः प्रदेशबन्धः साद्यादिचतुर्विकल्पोऽपि भावितः ।

शेषत्रयस्य का वार्तेत्याह—"दुहा सेसि सव्व त्ति" शेषे भणितोद्धरिते उत्कृष्टजघन्याजघन्यप्रदेशबन्धलक्षणे सर्वत्र त्रिविधेऽपि द्विधा द्विविकल्पः साद्यध्रुवलक्षणो बन्धो भवतीत्यर्थः । तत्रानुत्कृष्टभणनक्रमेणोत्कृष्टस्त्रिंशतोऽपि प्रकृतीनां सूक्ष्मसंपरायादिषु दर्शितः, स च तत्प्रथमतया बध्यमानत्वात्सादिः, सर्वथा बन्धाभावेऽनुत्कृष्टबन्धसम्भवे वाऽभव्यस्य न भवतीत्यध्रुवः । जघन्यः पुनरेतासां त्रिंशत्प्रकृतीनां प्रदेशबन्धोऽपर्याप्तस्य सर्वमन्दवीर्यलब्धिकस्य सप्तविधबन्धकस्य सूक्ष्मनिगोदस्य भवाद्यसमये लभ्यते । जघन्यप्रदेशबन्धो हि जघन्ययोगेन भवतीत्युक्तः, स चास्यैव यथोक्तविशेषणविशिष्टस्य लभ्यते । द्वितीयादिसमयेषु पुनरसावसंख्येयगुणवृद्धेन वीर्येण वर्धत इति भवाद्यसमयग्रहणम् । द्वितीयादिसमयेष्वयमप्यजघन्यं बध्नाति, पुनः संख्यातेनासंख्यातेन वा कालेन पूर्वोक्तजघन्ययोगं प्राप्य स एव जघन्यं प्रदेशबन्धं करोति, पुनरजघन्यमित्येवं जघन्याजघन्ययोः प्रदेशबन्धयोः संसरतामसुमतां द्वावप्येतौ साद्यध्रुवौ भवतः । इति भावितास्त्रिंशत उत्तरप्रकृतीनामनुत्कृष्टप्रदेशबन्धश्चतुर्धा,उत्कृष्टजघन्याजघन्यप्रदेशबन्धश्च द्विधा । शेषे का वार्तेत्याह—"दुहा सेसि सव्व त्ति" पदं भूयोऽप्यनुवर्त्यते । शेषे भणितत्रिंशत्प्रकृत्यवशिष्टे स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिचतुष्टयवर्णादिचतुष्कतैजसकार्मणागुरुलघूपघातनिर्माणलक्षणे सप्तदशध्रुवप्रकृतिकदम्बके औदारिकवैक्रियाहारकशरीरत्रयाङ्गोपाङ्गत्रयसंस्थानषट्कसंहननषट्कजातिपञ्चकगतिचतुष्कविहायोगतिद्विकानुपूर्वीचतुष्कतीर्थकरनामोच्छ्वासनामोद्योतनामातपनामपराघातनामत्रसदशकस्थावरदशकोच्चैर्गोत्रनीचैर्गोत्रसातासातवेदनीयहास्यरत्यरतिशोकवेदत्रयायुश्चतुष्टयलक्षणत्रिसप्ततिसंख्याध्रुवबन्धिप्रकृतिसमूहे च सर्वत्रोत्कृष्टानुत्कृष्टजघन्याजघन्यलक्षणे चतुर्विकल्पेऽपि प्रदेशबन्धे द्विधा द्विप्रकारः सादिरध्रुवश्च बन्धो भवति ।

तथाहि—अध्रुवबन्धिनीनामध्रुवबन्धित्वादेवोत्कृष्टानुत्कृष्टजघन्याजघन्यस्तत्प्रदेशबन्धः सर्वोऽपि साद्यध्रुव एव भवति, स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिनां सप्तविधबन्धक उत्कृष्टयोगे वर्तमानो मिथ्यादृष्टिरुत्कृष्टप्रदेशबन्धमेकं द्वौ वा समयौ यावत् करोति, सम्यग्दृष्टिरेताः प्रकृतीर्न बध्नातीति मिथ्यादृष्टिग्रहणं । मिथ्यात्ववर्जा एताः प्रकृतीः सास्वादनोऽपि बध्नाति, परं भणितप्रकारेण सास्वादनस्योत्कृष्टयोगो न लभ्यत इति तस्याग्रहणं । उत्कृष्टयोगस्यैतावानेव काल इत्येकद्विसमयनियमः । उत्कृष्टयोगात्प्रतिपत्य स एवानुत्कृष्टप्रदेशबन्धं करोति, पुनः स एवोत्कृष्टमित्येवं द्वावप्येतौ साद्यध्रुवौ । जघन्यप्रदेशबन्धं पुनरेतासां सर्वजघन्यवीर्यलब्धिर्भवाद्यसमये वर्तमानः सप्तविधं बध्नन्नपर्याप्तसूक्ष्मनिगोदः करोति । द्वितीयादिसमयेषु च स एवाजघन्यं करोति, कालान्तरेण पुनः स एव जघन्यं करोतीत्येतावपि द्वौ साद्यध्रुवौ भवतः । तथा वर्णचतुष्कतैजसकार्मणागुरुलघूपघातनिर्माणलक्षणस्य प्रकृतिनवकस्याप्युत्कृष्टानुत्कृष्टौ जघन्याजघन्यौ च प्रदेशबन्धौ साद्यध्रुवावेवमेव वक्तव्यौ । नवरमुत्कृष्टयोगो मूलप्रकृतिसप्तविधबन्धको नाम्नस्तिर्यग्गतिस्तिर्यगानुपूर्वी एकेन्द्रियजातिरौदारिकशरीरं हुंडसंस्थानं स्थावरनाम बादरसूक्ष्मयोरन्यतरत् अपर्याप्तकं प्रत्येकसाधारणयोरन्यतरत् अस्थिरनाम अशुभनाम दुर्भगनाम अनादेयनाम अयशःकीर्तिर्वर्णचतुष्कं तैजसकार्मणे अगुरुलघूपघातं निर्माणमित्येवं त्रयोविंशतिमुत्तरप्रकृतीर्बध्नन्मिथ्यादृष्टिरुत्कृष्टप्रदेशबन्धको वाच्यः । शेषं तथैव । नाम्नो हि पंचविंशत्यादिबन्धग्रहणे बहवो भागा भवन्तीति त्रयोविंशतिबन्धग्रहणं । इति भाविता उत्तरप्रकृतीराश्रित्योत्कृष्टानुत्कृष्टजघन्याजघन्यप्रदेशबन्धेषु साद्यादिविकल्पाः, संप्रति मूलप्रकृतीः प्रतीत्य उत्कृष्टप्रदेशबन्धादिभंगेषु साद्यादिभंगकानभिधित्सुराह—'मूलछगे णुक्को

सो चउह त्ति' मूलपद्के मूलप्रकृतिपद्के ज्ञानावरणदर्शनावरणवेदनीयनामगोत्रान्तरायलक्षणेऽनुत्कृष्ट प्रदेशबन्धश्चतुर्धा साद्यनादिध्रुवाध्रुवलक्षणश्चतु प्रकारो भवति। तथाहि–प्रस्तुतकर्मपट्कविषय क्षपकस्योपशमकस्य वा सूक्ष्मसपरायस्य सर्वोत्कृष्टयोगे वर्तमानस्यैक द्वौ वा समयौ यावदुत्कृष्ट प्रदेशबन्ध प्राप्यते । सूक्ष्मसपरायो हि मोहनीयायु'कर्मद्वय न बध्नाति, कि त्वेतदेव प्रस्तुतकर्मपट्क बध्नात्यतो मोहनीयायुर्भागयोरत्रैव कर्मपट्के प्रवेशो, बहुद्रव्यमिह लभ्यत इति सूक्ष्मसपरायग्रहण, उत्कृष्टश्च प्रदेशबन्ध उक्तनीत्या उत्कृष्टेनैव योगेन भवतीत्युत्कृष्टयोगग्रहण, उत्कृष्टयोगावस्थानकालश्चैतावानेव भवतीत्येकद्विसमयग्रहण। एन चोत्कृष्ट प्रदेशबन्ध कृत्वोपशान्तमोहावस्था चारुह्य पुन' प्रतिपत्य उत्कृष्टयोगाद्वाऽत्रैव प्रतिपत्य यदा पुनरनुत्कृष्टप्रदेशबन्ध करोति तदाऽसौ सादि, एतच्च स्थानमप्राप्तपूर्वाणामनादिः सदा निरन्तर बध्यमानत्वात्, ध्रुवोऽभव्याना, अध्रुवो भव्यानामित्युक्त पणणा मूलप्रकृतीनामनुत्कृष्टप्रदेशबन्धश्चतुर्विकल्प । शेपबन्धत्रिके साद्यादिभगकानाह–'दुहा सेसि सव्वउ त्ति'शेपे भणितोद्धरिते जघन्याजघन्योत्कृष्टप्रदेशबन्धलक्षणे त्रिके द्विधा साद्यध्रुवलक्षणो द्विप्रकारो बन्धो भवति। तत्रानुत्कृष्टभणनप्रसगेनोत्कृष्ट' सूक्ष्मसपरायेऽनन्तर दर्शित, स च तत्प्रथमतया बध्यमानत्वात्सादि, उपशान्ताद्यवस्थाया पुनरनुत्कृष्टबन्धगमने चावश्य न भवतीत्यध्रुव, जघन्य पुनरमीषा पणणा कर्मणा प्रदेशबन्धोऽपर्याप्तस्य सर्वमन्दवीर्यलब्धिकस्य सप्तविधबन्धकस्य सूक्ष्मनिगोदस्य भवाद्यसमये लभ्यते। जघन्यप्रदेशबन्धो हि जघन्ययोगेन भवतीत्युक्त। स चास्यैव यथोक्तविशेषणविशिष्टस्य लभ्यते, द्वितीयादिसमयेषु त्वसावसख्येयगुणवृद्धेन वीर्येण वर्धत इति भवाद्यसमयग्रहणं । द्वितीयादिसमयेष्वयमप्यजघन्य बध्नाति, पुन सख्याते-

नासंख्यातेन वा कालेन पूर्वोक्तजघन्ययोगं प्राप्य स एव जघन्यप्रदेशबन्धं करोति, पुनरजघन्यमित्येवं जघन्याजघन्ययोः प्रदेशबन्धयोः संसरतामसुमतां द्वावप्येतौ साद्यध्रुवौ भवत इति । भाविता मूलप्रकृतिषट्कस्योत्कृष्टादिबन्धविकल्पाः साद्यादिभंगकैः, अथावशिष्टयोर्मोहायुषोरुत्कृष्टादिप्रदेशबन्धान् साद्यादिविकल्पतः प्ररूपयन्नाह—'दुहा सेसि सव्वह त्ति' शेषे भणितोद्धरिते मोहे आयुषि च सर्वत्रोत्कृष्टेऽनुत्कृष्टे जघन्येऽजघन्ये च प्रदेशबन्धे द्विधा साद्यध्रुवलक्षणो द्विविकल्पो बन्धो भवति । तत्र मिथ्यादृष्टिः सम्यग्दृष्टिर्वाऽनिवृत्तिबादरान्तः सप्तविधबन्धकाले उत्कृष्टयोगे वर्तमानो मोहनीयस्योत्कृष्टप्रदेशबन्धं करोति, पुनरनुत्कृष्टयोगं प्राप्यानुत्कृष्टं प्रदेशबन्धं करोति, पुनरुत्कृष्टं, पुनरप्यनुत्कृष्टमित्येवमुत्कृष्टानुत्कृष्टप्रदेशबन्धयोः संसरतां जन्तूनां मोहस्योत्कृष्टानुत्कृष्टप्रदेशबन्धौ द्वावपि साद्यध्रुवौ भवतः, जघन्याजघन्यौ त्वेतत्प्रदेशबन्धौ यथा सूक्ष्मनिगोदादिषु संसरतामसुमतां कर्मषट्कस्यानन्तरमेव भावितौ तथाऽत्रापि निर्विशेषं भावनीयौ । आयुष्कस्य त्वध्रुवबन्धित्वादेव तत्प्रदेशबन्ध उत्कृष्टादिचतुर्विकल्पोऽपि साद्यध्रुव एव भवतीति ॥ ९४ ॥

निरूपितः प्रदेशबन्धः साद्यादिप्ररूपणतः, संप्रति प्रागुक्तचतुर्विधबन्धे योगस्थानानि कारणं, प्रकृतयः प्रदेशाश्च तत्कार्यं प्रवर्तन्ते, तथा स्थितिबन्धाध्यवसायस्थानानि कारणं स्थितिविशेषास्तु तत्कार्यं, अनुभागबन्धाध्यवसायस्थानानि कारणं अनुभागस्थानानि तु तत्कार्यं वर्तन्ते इति कृत्वा सप्तानामप्येषां पदार्थानां परस्परमल्पबहुत्वमभिधित्सुराह—

**सेढिअसंखिज्जंसे जोगट्ठाणाणि पयडिठिइभेया । ठिइबंधज्झवसायाणुभागठाणा असंखगुणा ॥ ९५ ॥**

टीका—योगो वीर्यं तस्य स्थानानि वीर्यविभागांशसंघातरूपाणि । कियन्ति पुनस्तानि भवन्तीत्याह—'सेढिअसंखिज्जं'

सेत्ति ' श्रेणेरसंख्येयाश श्रेण्यसख्येयाश' । एतदुक्त जवति–श्रेणेर्वक्ष्यमाणरूपाया असख्येयजागे यावन्त आकाशप्र-
देशा जवन्ति तावन्ति योगस्थानानि । एतानि चोत्तरपदापेक्षया सर्वस्तोकानीति शेष' । तत्र यथैतानि योगस्थानानि
जवन्ति तथोच्यते–इह किल सूक्ष्मनिगोदस्यापि सर्वजघन्यवीर्यलब्धियुक्तस्य प्रदेशाः केचिदल्पवीर्ययुक्ता', केचित्तु वहु-
वहुतरजहुतमवीर्योपेता । तत्र सर्वजघन्यवीर्ययुक्तस्यापि प्रदेशस्य सवन्धि वीर्यं केवलिप्रज्ञाछेदेन छिद्यमानमसख्येयलो-
काकाशप्रदेशप्रमाणान् जागान् प्रयछति, तस्यैवोत्कृष्टवीर्ययुक्ते प्रदेशे यद्वीर्यं तदेतेज्योऽसख्येयगुणान् जागान्
प्रयछति । उक्त च–" पन्नाए छिज्जंता असखलोगाण जत्तिय पएसा । तत्तिय वीरियजागा जीव पएसमि इक्किके
॥ १ ॥ सघजहन्नगनिरिए जीवपएसमि तत्तिया संखा । तत्तो असखगुणिया वहुविरिए जियपएसमि ॥ २ ॥"
जागा अविजागपलिछेदा इति चानर्थान्तर । ततः सर्वस्तोकाविजागपलिछेदकलिताना लोकासख्येयजागवर्त्य-
सख्येयप्रतरप्रदेशराशिसख्याना जीवप्रदेशाना समानवीर्यपलिछेदतया जघन्यैका वर्गणा, तत एकेन योगपलिछेदेनाधि-
काना तावतामेव जीवप्रदेशाना द्वितीयवर्गणा, एवमेकैकयोगपलिछेदवृद्ध्या वर्धमानाना जीवप्रदेशाना समानजातीयरूपा
घनीकृतलोकाकाशश्रेणेरसख्येयजागप्रदेशराशिप्रमाणा वर्गणा वाच्या' । एताश्चैतावत्योऽप्यसत्कल्पनया षड् स्थाप्यन्ते।
तत्र जघन्यवर्गणाया जीवप्रदेशा असख्येयवीर्यजागान्विता अप्यसत्कल्पनया दशजागान्विता स्थाप्यन्ते । ते च जीवप्र-

१ प्रज्ञया च्छिद्यमाना यावन्तोऽसख्यलोकाना प्रदेशा । तावन्तो वीर्यभागा एकैकस्मिञ्जीवप्रदेशे । १ । सर्वजघन्यकवीर्ये जीवप्रदेशे
तावती सख्या । ततोऽसख्यगुणिता वहुवीर्ये जीवप्रदेशे ( वीर्यभागा ) । २ ।

देशा एकैकस्यां वर्गणायामसंख्येयप्रतरप्रदेशमाना अप्यसत्कल्पनया त्रयस्त्रयः स्थाप्यन्ते । एताश्चैतावत्यः समुदिता एकं वीर्यस्पर्धकमित्युच्यते । अथ स्पर्धक इति कः शब्दार्थः ? उच्यते–एकैकोत्तरवीर्यभागवृद्ध्या परस्परं स्पर्धन्ते वर्गणा यत्र तत्स्पर्धकं । तत ऊर्ध्वमेकेन द्व्यादिभिर्वा वीर्यपलिच्छेदैरधिका जीवप्रदेशा न प्राप्यन्ते, किं तर्हि प्रथमस्पर्धकचरमवर्गणायां जीवप्रदेशेषु यावन्तो वीर्यपलिच्छेदास्तेभ्योऽसंख्येयलोकाकाशप्रदेशप्रमाणैरेव वीर्यपलिच्छेदैरधिका जीवप्रदेशा लभ्यन्तेऽतस्तेषामपि समानवीर्यभागानां समुदायो द्वितीयस्पर्धकस्याद्यवर्गणा । तत एकेन वीर्यभागेनाधिकानां समुदायो द्वितीया वर्गणा । एवमेकोत्तरवृद्धिक्रमेणैता अपि श्रेण्यसंख्येयभागवर्तिप्रदेशमाना वाच्याः । एतासामपि समुदायो द्वितीयं स्पर्धकं । इत ऊर्ध्वं पुनरप्येकोत्तरवृद्धिर्न लभ्यते, किं तर्ह्यसंख्येयलोकाकाशप्रदेशतुल्यैरेव वीर्यभागैरधिकास्तत्प्रदेशाः प्राप्यन्तेऽतस्तेनैव क्रमेण तृतीयस्पर्धकमारभ्यते, पुनस्तेनैव क्रमेण चतुर्थं, पुनः पंचममित्येवमेतान्यपि वीर्यस्पर्धकानि श्रेण्यसंख्येयभागवर्तिप्रदेशराशिप्रमाणानि वाच्यानि । एतेषां चैतावतां स्पर्धकानां समुदाय एकं योगस्थानकमुच्यते । इदं तावदेकस्य सूक्ष्मनिगोदस्य भवाद्यसमये सर्वजघन्यवीर्यस्य योगस्थानकमभिहितं, तदन्यस्य तु किंचिदधिकवीर्यस्य जन्तोरनेनैव क्रमेण द्वितीयं योगस्थानकमुत्तिष्ठते, तदन्यस्य तु तेनैव क्रमेण तृतीयं, तदन्यस्य तु तेनैव क्रमेण चतुर्थमित्यमुना क्रमेणैतान्यपि योगस्थानानि नानाजीवानां कालभेदेनैकजीवस्य वा श्रेणेरसंख्येयभागवर्तिनभःप्रदेशराशिप्रमाणानि भवन्ति । ननु जीवानामनन्तत्वात्तद्भेदाद्योगस्थानान्यनन्तानि कस्मान्न भवन्ति ? नैतदेवं, यत एकैकस्मिन् सदृशे योगस्थानेऽनन्ताः स्थावरजीवा वर्तन्ते, त्रसास्त्वेकैकस्मिन् सदृशे योगस्थानेऽसंख्याता वर्तन्ते, तेषां च तदैकै-

क्रमेन निवर्छित, अतो निरन्तराणि यथोक्तमानान्येव योगस्थानकानि जवन्ति । तथाऽपर्याप्ता॰ सर्वेऽप्येकैकस्मिन् योगस्थानके एकसमयमेवावतिष्ठन्ते, तत परमसंख्येयगुणवृद्धेषु प्रतिसमयमन्योऽन्ययोगस्थानकेषु सङ्क्रामन्ति । पर्याप्तास्तु सर्वेऽपि स्वप्रायोग्ये सर्वजघन्ययोगस्थानके जघन्यत समयमुत्कृष्टतश्चतुर॰ समयान् यावद्वर्तन्ते । तत परमन्ययोगस्थानकमुपजायते । स्वप्रायोग्योत्कृष्टयोगस्थानकेषु तु जघन्यत समयमुत्कृष्टतस्तु द्वौ समयौ । मध्यमेषु जघन्यत समयमुत्कृष्टतस्तु क्वचित्त्रीन् क्वचिच्चतुरः क्वचित्पञ्च क्वचित् षट् क्वचित्सप्त क्वचिदष्टौ समयान् यावद्वर्तन्ते इति, अथ चैतावानपि योगो मन प्रभृतिसहकारिकारणवशात् सङ्क्षिप्य सत्यमनोयोगासत्यमनोयोगसत्यमृषामनोयोगासत्यमृषामनोयोगसत्यवाग्योगासत्यवाग्योगसत्यमृषावाग्योगासत्यमृषावाग्योगौदारिककाययोगौदारिकमिश्रकाययोगवैक्रियकाययोगवैक्रियमिश्रकाययोगाहारककाययोगाहारकमिश्रकाययोगकार्मणकाययोगभेदत पंचदशधा प्रोक्त॰, इत्यल प्रसगेन । एतेभ्यश्च योगस्थानेभ्योऽसंख्येयगुणा असंख्यातगुणिता 'पयडि त्ति' भेदशब्दस्य प्रत्येक सम्बन्धात् प्रकृतिभेदा ज्ञानावरणादीना भेदाः । 'असंखगुण त्ति' पदमनुभागबन्धस्थानानि यावत्सर्वत्र योजनीय । इयमत्र भावना—इह तावदावश्यकादिष्ववधिज्ञानदर्शनयो क्षयोपशमवैचित्र्यादसंख्यातास्तावद्भेदा भवन्ति (भणिता), ततश्चैतदावरणबन्धस्यापि तावत्प्रमाणा भेदा॰ संगच्छन्ते, वैचित्र्येण बद्धस्यैव विचित्रक्षयोपशमोपपत्तेरिति । कथ पुन क्षयोपशमवैचित्र्येऽप्यसंख्येयभेदत्व प्रतीयत इति चेदुच्यते—क्षेत्रतारतम्येनेति । तथा हि–त्रिसमयाहारकसूक्ष्मपनकसत्त्वावगाहनामान जघन्यमवधिविषयस्य क्षेत्रं परिच्छेद्यतयोक्त ।

यदाह सकलश्रुतपारदृश्वा विश्वानुग्रहकाम्यया विहितानेकशास्त्रसंदर्भो भगवान् श्रीभद्रबाहुस्वामी-"[1]जावइय तिसमयाहारगस्स सुहुमस्स पणगजीवस्स । ओगाहणा जहन्ना ओहिखेत्तं जहन्नं तु ॥ १ ॥" उत्कृष्टं तु सर्वबहुतैजस्कायिकजन्तूनां शूचिः सर्वतो भ्रमिता यावन्मात्रं क्षेत्रं स्पृशति तावन्मात्रं तस्य प्रमाणं भवति । यदाहुः श्रीमदाराध्यपादाः-"[2]सव्वबहुअगणिजीवा निरंतरं जत्तियं भरिज्जंसु । खेत्तं सव्वदिसागं परमोहि खेत्त निद्दिट्ठो ॥ १ ॥ इति" ततो जघन्यात्क्षेत्रादारभ्य प्रदेशवृद्ध्या प्रवृद्धोत्कृष्टक्षेत्रविषयत्वे सत्यसंख्येयभेदत्वमवधिद्विकस्य क्षेत्रतारतम्येन भवति, अतस्तदावारकस्यावधिद्विकस्यापि नानाजीवानां क्षेत्रादिभेदेन बन्धवैचित्र्यादुदयवैचित्र्याद्वाऽसंख्येयगुणभेदत्वं । एवं नानाजीवानाश्रित्य मतिज्ञानावरणादीनां शेषाणामप्यावरणानां तथाऽन्यासामपि सर्वासां मूलप्रकृतीनामुत्तरप्रकृतीनां च क्षेत्रादिभेदेन बन्धवैचित्र्यादुदयवैचित्र्याद्वाऽसंख्याता भेदाः संपद्यन्ते इति । उक्तं च-"[3]जम्हा उ ओहिविसओ उक्कोसो सव्वबहुयसिहिसूई। जत्तियमित्तं फुसई तत्तियमित्तप्पएससमो ॥ १ ॥ तत्तारतम्मभेया जेण बहुं हुंति आवरणजणिया । तेणासंखगुणत्तं पयडीणं जोगओ जाणे ॥ २ ॥ इति" चतसृणामानुपूर्वीणां बन्धोदयवैचित्र्येणासंख्याता भेदास्ते च लोकस्यासंख्येयभागवर्तिप्रदेशराशितुल्या इति बृहच्छतकचूर्णिकारोक्तो विशेषः । ननु जीवानामनन्तत्वात्तेषां बन्धोदयवैचित्र्ये-

---

१ त्रिसमयाहारकस्य सूक्ष्मपनकजीवस्य । यावती अवगाहना जघन्या जघन्यमवधिज्ञानक्षेत्रम् । २ सर्वबहुकाग्निजीवा निरंतरं यावत्क्षेत्रं भृतवन्तस्तावत् सर्वदिक्कं परमावधिक्षेत्रं निर्दिष्टं । ३ यस्मात्त्ववधिविषय उत्कृष्टः सर्वबहुकशिखिसूची (मानः)। यावन्मात्रं स्पृशति तावन्मात्रप्रदेशसमः । १ तत्तारतम्यभेदा येन बहवो भवन्त्यावरणजनिताः । तेनासंख्यगुणत्वं प्रकृतीनां योगतो जानीहि। २ ।

णानन्ता अपि प्रकृति भेदा कस्मान्न भवन्ति ? नैतदेवं सदृशाना बन्धोदयानामेकत्वेन विवक्षितत्वाद्विसदृशास्त्वेतावन्त एव तद्भेदा भवन्ति । ते च भेदा प्रकृतिभेदत्वात्प्रकृतय इत्युच्यते । ततश्च योगस्थानेभ्योऽसंख्यातगुणाः प्रकृतय । यत एकैकस्मिन् योगस्थाने वर्तमानैर्नानाजीवै कालभेदादेकजीवेन वा सर्वा अप्येता प्रकृतयो बध्यन्त इति । तथा तेभ्य प्रकृतिभेदेभ्य स्थितिभेदा' स्थितिविशेषा अन्तर्मुहूर्तसमयाधिकान्तर्मुहूर्तद्विसमयाधिकान्तर्मुहूर्तत्रिसमयाधिकान्तर्मुहूर्तादिलक्षणा असंख्यातगुणा भवन्ति, एकैकस्या' प्रकृतेरसंख्यातैः स्थितिविशेषैर्बध्यमानत्वात् । एकमेव हि प्रकृतिभेद कश्चिज्जीवोऽन्येन स्थितिविशेषेण बध्नाति, स एव च त कदाचिदन्येन, कदाचिदन्यतरेण, कदाचिदन्यतमेनेत्येवमेक प्रकृतिभेदमेक च जीवमाश्रित्यासख्याता. स्थितिभेदा भवन्ति, किं पुन सर्वप्रकृती. सर्वजीवानाश्रित्य प्रकृतिभेदेभ्य स्थितिभेदानामसंख्यातगुणत्वमिति, अत प्रकृतिभेदेभ्य स्थितिभेदा असंख्यातगुणा भवन्ति इति । तथा स्थितिभेदेभ्यः सकाशात् स्थितिबन्धाध्यवसाया' पदैकदेशे पदसमुदायोपचारात् स्थितिबन्धाध्यवसायस्थानान्यसख्यातगुणानि । तत्र स्थान स्थिति कर्मणोऽवस्थानं तस्या बन्ध स्थितिबन्ध । अध्यवसानान्यध्यवसाया , ते चेह कषायजनिता जीवपरिणामविशेषा' । तिष्ठन्ति जीवा एष्विति स्थानानि । अध्यवसाया एव स्थानान्यध्यवसायस्थानानि । स्थितिबन्धस्य कारणभूतान्यध्यवसायस्थानानि स्थितिबन्धाध्यवसायस्थानानि । तानि स्थितिभेदेभ्योऽसख्येयगुणानि, यत सर्वजघन्योऽपि स्थितिविशेषोऽसंख्येयलोकाकाशप्रदेशप्रमाणैरध्यवसायस्थानैर्जन्यते, उत्तरेषु तु स्थितिविशेषास्तैरेव यथोत्तर विशेषवृद्धैर्जन्यन्तेऽत' स्थितिभेदेभ्यः स्थितिबन्धाध्यवसायस्थानान्यसं-

ख्यातगुणानि सिद्धानि भवन्ति । तथा 'अणुभागठाण त्ति' पदैकदेशे पदसमुदायोपचारादनुभागस्थानान्यनुभागबन्धाध्यवसायस्थानानि । तत्रानु पश्चाद्बन्धोत्तरकालं भज्यते सेव्यतेऽनुभूयते इत्यनुभागो रसस्तस्य बन्धोऽनुभागबन्धः । अध्यवसानान्यध्यवसायास्ते चेह कषायजनिता जीवपरिणामविशेषाः । तिष्ठन्ति जीवा एष्विति स्थानानि । अध्यवसाया एव स्थानान्यध्यवसायस्थानानि । अनुभागबन्धस्य कारणभूतान्यध्यवसायस्थानान्यनुभागबन्धाध्यवसायस्थानानि । स्थितिबन्धाध्यवसायस्थानेभ्यस्तान्यसंख्येयगुणानि भवन्ति। स्थितिबन्धाध्यवसायस्थानं ह्येकैकमन्तर्मुहूर्तप्रमाणमुक्तं,अनुभागबन्धाध्यवसायस्थानं त्वेकैकं जघन्यतः सामयिकमुत्कृष्टतस्त्वष्टसामयिकान्तमेवोक्तं, अत एकैकस्मिन्नपि नगरकल्पे स्थितिबन्धाध्यवसायस्थाने तदन्तर्गतानि नगरान्तर्गतोच्चैर्नीचैर्गृहकल्पानि नानाजीवान् कालभेदेनैकं जीवं वा समाश्रित्यासंख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागबन्धाध्यवसायस्थानानि भवन्ति । तथाहि–जघन्यस्थितिजनकानामपि स्थितिबन्धाध्यवसायस्थानानां मध्ये यदाद्यं सर्वलघुस्थितिकं बन्धाध्यवसायस्थानं तस्मिन्नपि देशक्षेत्रकालभावजीवभेदेनासंख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागबन्धाध्यवसायस्थानानि प्राप्यन्ते, द्वितीयादिषु तु तान्यप्यधिकान्यधिकतराणि च प्राप्यन्त इति सर्वेष्वपि स्थितिबन्धाध्यवसायस्थानेषु भावना कार्या, अतः स्थितिबन्धाध्यवसायस्थानेभ्योऽनुभागबन्धाध्यवसायस्थानान्यसंख्येयगुणानीति ॥ ८९ ॥

**तत्तो कम्मपएसा अणंतगुणिया तउ रसछेया । जोगा पयडिपएसं ठिइअणुभागं कसायाउ ॥ ९६ ॥**

टीका–ततस्तेभ्योऽनुभागबन्धाध्यवसायस्थानेभ्यः कर्मप्रदेशाः कर्मस्कन्धा अनन्तगुणिता भवन्ति । अयमत्र तात्प-

वीर्य-प्रत्येकमभव्यानन्तगुणैः सिद्धानन्तभागवर्तिभिः परमाणुभिर्निष्पन्नानभव्यानन्तगुणानेव स्कन्धान्मिथ्यात्वादिभि-र्हेतुभिः प्रतिसमयं जीवो गृह्णातीत्युक्तं, अनुभागबन्धाध्यवसायस्थानानि तु सर्वाण्यप्यसंख्येयलोकाकाशप्रदेशप्रमाणा-न्येवाभिहितानि, अतोऽनुभागबन्धाध्यवसायस्थानेभ्यः कर्मप्रदेशा अनन्तगुणा सिद्धा भवन्ति। तथा 'तत्तो रसछेय त्ति' ततस्तेभ्यः कर्मप्रदेशेभ्यो रसभेदा अनन्तगुणा भवन्ति। तथाहि-इह क्षीरनिवरसाद्यधिश्रयणैरिवानुभागबन्धा-ध्यवसायस्थानैस्तन्दुलेष्विव कर्मपुद्गलेषु रसो जन्यते, स चैकस्यापि परमाणोः सम्बन्धी केवलिप्रज्ञया छिद्यमानः सर्वजी-वानन्तगुणानविभागपलिच्छेदान् प्रयच्छति, यस्माद्भागादतिसूक्ष्मतयाऽन्यो भागो नोत्तिष्ठति सोऽविभागपलिच्छेद उच्यते, एवंभूताश्चानुभागस्याविभागपलिच्छेदा रसपर्यायाः सर्वकर्मस्कन्धेषु प्रतिपरमाणु सर्वजीवानन्तगुणाः समाप्यन्ते। उक्तं च-"गहणसमयंमि जीवो उप्पाएइ उ गुणे सपच्चयओ। सव्वजियाणन्तगुणे कम्मपएसेसु सव्वेसु ॥ १ ॥" गुणशब्देनेहा-विभागपलिच्छेदा उच्यन्ते, शेषं सुगमम्। कर्मप्रदेशाः पुनः प्रतिस्कन्धं सर्वेऽपि सिद्धानामप्यनन्तभाग एव वर्तन्तेऽतः कर्मप्रदेशेभ्यो रसभेदा अनन्तगुणाः सिद्धा भवन्ति इति। अत्राह-ननूक्तो भवद्भिः सप्रपञ्चः प्रदेशबन्धः, परं कस्माद्धे-तोरमुं जीवः करोतीति वक्तव्यमिति प्रश्नमाशङ्क्य प्रदेशबन्धस्य प्रसंगतः पूर्वोक्तानां प्रकृतिस्थित्यनुभागबन्धानां च हेतू-न्निरूपयन्नाह-'जोगा पयडिपएसं ठिइअणुभागं कसायाओ त्ति' योगो वीर्यं शक्तिरुत्साहः पराक्रम इति पर्यायाः। तस्मा-द्योगात्मकरणं प्रकृतिं कर्मणां ज्ञानावरणादिस्वभावं, प्रकृष्टाः पुद्गलास्तिकायदेशाः प्रदेशाः कर्मवर्गणान्तःपातिनः कर्म-

---

१ ग्रहणसमये जीव उत्पादयति तु गुणान् स्वप्रत्ययात्। सर्वजीवानन्तगुणान् कर्मप्रदेशेषु सर्वेषु।

स्कन्धाः, प्रकृतयश्च प्रदेशाश्च प्रकृतिप्रदेशं समाहारो द्वन्द्वः । तज्जीवः करोतीति शेषः । प्रकृतिप्रदेशबन्धयोर्योगो हेतुरित्यर्थः । एतदुक्तं भवति—यद्यपि षडशीतिकशास्त्रे मिथ्यात्वाविरतिकषाययोगाः सामान्येन कर्मणो बन्धहेतव उक्तास्तथाप्याद्यकारणत्रयाभावेऽप्युपशान्तमोहादिगुणस्थानकेषु केवलयोगसद्भावे वेदनीयलक्षणा प्रकृतिस्तत्प्रदेशाश्च बध्यन्ते, अयोग्यवस्थायां तु योगाभावे न बध्यन्ते, इत्यन्वयव्यतिरेकाभ्यां ज्ञायते प्रकृतिप्रदेशबन्धयोर्योग एव प्रधानं कारणं । तथा 'ठिइअणुभागं कसायाउ त्ति ' स्थानं स्थितिः कर्मणोऽन्तर्मुहूर्तादिकं सप्ततिसागरोपमकोटीकोटीपर्यन्तमवस्थानमित्यर्थः । अनु पश्चाद्बन्धोत्तरकालं भजनं स्थितेः सेवनमनुभवनं यस्यासावनुभागो रस इत्यर्थः । स्थितिश्चानुभागश्च स्थित्यनुभागं समाहारो द्वन्द्वः । तज्जीवः करोतीति शेषः । कस्मादित्याह—कषायात् कषायवशात् । इयमत्र भावना—कषायाः क्रोधमानमायालोभास्तज्जनितो जीवस्याध्यवसायविशेषः कषायशब्देनेहोच्यते । कषाया ह्युदीरणा नानाजीवानां कालभेदेनैकजीवस्य वा सर्वजघन्याया अपि ज्ञानावरणादिकर्मस्थितेर्निर्वर्तकान्यसंख्येयलोकाकाशप्रदेशप्रमाणान्यान्तर्मौहूर्तिकान्यध्यवसायस्थानानि जनयन्ति, समयाधिकतज्जघन्यस्थितिजनकानि तु त एव तेभ्यस्तानि विशेषाधिकानि जनयन्ति, द्विसमयाधिकतज्जघन्यस्थितिजनकानि पुनस्त एवानन्तरेभ्यस्तानि विशेषाधिकानि जनयन्ति, त्रिसमयाधिकतज्जघन्यस्थितिजनकानि पुनस्त एवानन्तरेभ्यस्तानि विशेषाधिकानि जनयन्ति, एवं समयोत्तरवृद्धतज्जघन्यस्थितिजनकानि विशेषाधिकानि तावद्वाच्यानि यावत्त एव कषायाः समयोनोत्कृष्टज्ञानावरणादिस्थितिजनकाध्यवसायस्थानेभ्यः सर्वोत्कृष्टतत्स्थितिजनकाध्यवसायस्थानानि विशेषाधिकानि निर्वर्तयन्ति । एतानि सर्वाण्यपि मिलिता-

न्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्येव भवन्ति । स्थाप्यमानानि च विषमचतुरस्रं क्षेत्रमास्तृणन्ति । स्थापना चेयं । तदेवमेते कषायजनिताध्यवसायैर्जन्यत्वात् कर्मणः स्थितिः कषायप्रत्यया सिद्धा । तथा तेषामेव कषायाणां सम्बन्धि यद्दलिकमुदयं प्राप्तं तत्र यदनुभागस्थानकमुदेति तेन जीवस्य योऽध्यवसायो जन्यते तद्वशेन बध्यमानकर्मणामनुभागो निष्पद्यते । तथाहि–इह तावदनन्तैः परमाणुभिर्निष्पन्नान् स्कन्धान् जीवः कर्मतया गृह्णाति, तत्र चैकैकस्कन्धे यः सर्वजघन्यरसः परमाणुः सोऽपि केवलिप्रज्ञया छिद्यमानः किल सर्वजीवेभ्योऽनन्तगुणान् भागान् प्रयच्छति, अपरस्तु तानप्येकाधिकान्, अन्यस्तु तानपि द्व्यधिकानित्यादिवृद्ध्या तावन्नेयं यावदन्त्य उत्कृष्टरसः परमाणुर्मौलराशेरनन्तगुणानपि रसभागान् प्रयच्छति । अत्र च जघन्यरसा ये केचन परमाणवस्तेषु सर्वजीवानन्तगुणरसभागयुक्तेष्वप्यसत्कल्पनया शतं रसांशानां परिकल्प्यते । एतेषां च समुदायः समानजातीयत्वादेका वर्गणेत्यभिधीयते । अन्येषां त्वेकोत्तरशतरसभागयुक्तानामणूनां समुदायो द्वितीया वर्गणा । अपरेषां द्व्युत्तरशतरसभागयुक्तानामणूनां समुदायस्तृतीया वर्गणा । अपरेषां तु त्र्युत्तरशतरसभागयुक्तानामणूनां समुदायश्चतुर्थी वर्गणा । एवमनया दिशा एकैकरसभागवृद्धानामणूनां समुदायरूपा वर्गणासिद्धानामनन्तभागेऽभव्येभ्योऽनन्तगुणा वाच्या । एतासां चैतावतीनां वर्गणानां समुदायः स्पर्धकमित्युच्यते, स्पर्धन्त इवात्रोत्तरोत्तररसवृद्ध्या परमाणुवर्गणेति कृत्वा । एताश्चानन्तरोक्तानन्तकप्रमाणा अप्यसत्कल्पनया षट् स्थाप्यन्ते, इदमेकं स्पर्धकं । इत ऊर्ध्वमेकोत्तरया निरन्तरवृद्ध्या वृद्धो रसो न लभ्यते, किं तर्हि सर्वजीवानन्तगुणैरेव रसभागैर्वृद्धो लभ्यत इति तेनैव क्रमेण द्वितीयं स्पर्धकमारभ्यते, ततस्तथैव तृतीयमित्यादि यावदनन्तान्यनुभागस्पर्धकान्युत्तिष्ठन्ति । एषा चानुभा·

गस्पर्धकानां सिद्धानन्तभागवर्तिनामभव्येभ्योऽनन्तगुणानां समुदायः प्रथममनुभागस्थानकं भवति । अन्येषु त्वधिकरसेषु स्कन्धेषु तेनैव क्रमेण द्वितीयं तावत्प्रमाणमेवानुभागस्थानकमुत्तिष्ठति । अपरेषु त्वधिकरसेषु स्कन्धेषु तेनैव क्रमेण तृतीयमनुभागस्थानकमुत्तिष्ठतीत्येवं सर्वेष्वपि कषायकर्मस्कन्धेष्वसंख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागस्थानानि भवन्ति । ज्ञानावरणादिसमस्तकर्मस्कन्धेष्वप्येतावन्त्येवामूनि भवन्ति, परं तावदिह कषाया एव कारणत्वेन विचारयितुं प्रक्रान्ताः, तत्र च जघन्यान्यनुभागस्थानान्युत्कृष्टतश्चतुरः समयान् यावदुदये समागच्छन्ति, मध्यमानि तु कानिचिद्द्वौ समयौ, कानिचित्त्रीन् समयान्, अपराणि चतुरः समयान्, अन्यानि पंच समयान्, अन्यानि षट् समयान्, अपराणि सप्त समयान्, अन्यान्यष्टौ समयान् यावदुत्कृष्टत उदये समागच्छन्ति । उत्कृष्टानुभागस्थानान्युत्कृष्टतो द्वौ समयौ यावदुदये समागच्छन्ति, ततः परं सर्वत्रान्यत् परावर्तते । जघन्यतस्तु सर्वाण्यपि समयस्थितीन्येव भवन्ति, अतस्तज्जघन्यमध्यमोत्कृष्टभेदभिन्नोऽध्यवसायोऽप्येतावत्कालस्थितिक एव भवति, तेन च जघन्यादिभेदेनाध्यवसायवैचित्र्येण बध्यमानकर्मानुभागो जघन्यादिभेदविचित्रो जन्यते, अतः कषायानुभागजनिताध्यवसायवैचित्र्यनिर्वर्त्यत्वात्कर्मणामनुभागः कषायप्रत्ययः सिद्धः । मिथ्यात्वाविरतिकारणद्वयाभावेऽपि कषायसद्भावेऽपि प्रमत्तादिषु स्थित्यनुभागबन्धौ भवतः, कषायाभावे तूपशान्तमोहादिषु न भवतः, इतीहाप्यन्वयव्यतिरेकाभ्यां ज्ञायते कषाया एव स्थित्यनुभागबन्धयोः प्रधानं कारणमिति ॥ ए६ ॥

'योगस्थानानि श्रेणेरसंख्येयभागे भवन्तीति यदुक्तं' तत्र श्रेणिस्वरूपं प्रतिपिपादयिषुः, सा च घनीकृतलोकस्वरूपप्ररू-

पणापूर्विकेव च वक्तुं शक्यतेऽत प्रसंगतो घनस्वरूपमन्यत्र बहुस्थानोपयोगित्वात्प्रतरस्वरूपं च प्रचिकटयिषुराह—

**चउदसरज्जू लोओ बुद्धिकओ होइ सत्तरज्जुघणो । तद्दीहेगपएसा सेढी पयरो य तव्वग्गो ॥ ९७ ॥**

टीका—चतुर्दश रज्जवो यस्य स चतुर्दशरज्जुः, रज्जुप्रमाणं तु स्वयंभूरमणसमुद्रस्य पौरस्त्यपाश्चात्यवेदिकान्तं यावद्दक्षिणोत्तरवेदिकान्तं वा यावदवसेयं, उच्छ्रयमानमिदमस्य, अधस्ताद्देशोनसप्तरज्जुविस्तरः, तिर्यग्लोकमध्ये एकरज्जुविस्तरः ब्रह्मलोकमध्ये पंचरज्जुविस्तीर्णः, उपरि तु लोकान्ते एकरज्जुविस्तृतः, शेषस्थानेषु पुनः कोऽपि कियानस्य विस्तर इति । तदेवंरूपो लोको बुद्धिकृतो मतिपरिकल्पनया विहितो भवति संपद्यते । किंरूपो भवतीत्याह—सप्तरज्जवः प्रमाणतया यस्य स सप्तरज्जुः स चासौ घनश्च समचतुरस्रः आयामविष्कम्भबाहल्यैस्तुल्यत्वात् सप्तरज्जुघनः । स चेत्थं बुद्ध्या निर्धीयते—इह रज्जुविस्तीर्णायास्त्रसनाड्या दक्षिणदिग्वर्त्यधोलोकखंडमधो देशोनरज्जुत्रयविस्तृतं, क्रमेण हीयमानविस्तारं तावद्यावदुपरिष्टाद्रज्जुसंख्येयभागविस्तरं सातिरेकसप्तरज्जूच्छ्रयं गृहीत्वा त्रसनाडिकाया एवोत्तरदिग्भागे विपरीतं योज्यते उपरितनं भागमधः कृत्वाऽधस्तनं चोपरि विधाय संघात्यते इत्यर्थः । एवं च कृतेऽधस्तनं लोकस्यार्धं सातिरेकसप्तरज्जूच्छ्रितं किंचिदूनरज्जुचतुष्टयविस्तीर्णं बाहल्यतोऽप्यधः क्वचिद्देशोनसप्तरज्जुमानमन्यत्र पुनरनियतबाहल्यं जायते । इदानीमुपरितनलोकार्धं संवर्त्यते—तत्रापि रज्जुविस्तरायास्त्रसनाडिकाया दक्षिणदिग्वर्तिनी ब्रह्मलोकमध्यादधस्तनमुपरितनं च द्वे अपि खंडे ब्रह्मलोकमध्ये प्रत्येकं द्विरज्जुविस्तरे उपर्यलोकसमीपेऽधस्तु रत्नप्रभाक्षुल्लकप्रतरसमीपेऽङ्गुलसहस्रभागविस्तरवती देशोनसार्धत्रयरज्जूच्छ्रिते बुद्ध्या गृहीत्वा त्रसनाडिकाया एवोत्तरपार्श्वे पूर्वोदितस्वरूपेणैव वैपरीत्येन संघात्येते, एवं

च कृते उपरितनं लोकस्यार्धं द्वाभ्यामंगुलसहस्रभागाभ्यामधिकरज्जुत्रयविष्कंभं, इह चतुर्णां खंडानां पर्यंतेषु चत्वारोऽ-ङ्गुलसहस्रभागा भवन्ति, केवलमेकस्यां दिशि योजिताभ्यां द्वाभ्यामप्येक एवांगुलसहस्रभाग एकदिग्वर्तित्वादेवमपरमपि द्वाभ्यामिन्नमेवेत्यतस्तद्वयाधिकत्वमुक्तं देशोनसप्तरज्जूच्छ्रितं। बाहल्यतस्तु ब्रह्मलोकमध्ये पंचरज्जुबाहल्यमन्यत्र त्वनियतबा-हल्यं। इदं च सर्वं गृहीत्वा अधस्त्यसंवर्तितलोकार्धस्योत्तरपार्श्वे संघात्यते। एवं च योजिते आधस्त्यखंडस्योच्छ्रये यदि-तरोच्छ्रयाधिकं तत् खंडयित्वोपरितनसंघातितखंडस्य बाहल्ये ऊर्ध्वायतं संयोज्यते, एवं च सातिरेकाः पंच रज्जवः क्वचि-द्वाहल्यं सिध्यति। तथा आधस्त्यखंडमधस्ताद्यथासंभवं देशोनसप्तरज्जुबाहल्यं प्रागुक्तं, अत उपरितनखंडबाहल्यादे-शोनरज्जुद्वयमत्राधस्त्यखंडेऽतिरिच्यते इत्यस्मादतिरिच्यमानबाहल्यार्धं देशोनरज्जुरूपं गृहीत्वोपरितनखंडबाहल्ये संघात्यते, एवं च कृते बाहल्यतस्तावत्सर्वमप्येतच्चतुरस्रीकृतनभःखंडं कियत्यपि प्रदेशे रज्ज्वसंख्येयभागाधिकाः षड् रज्जवो भवन्ति। व्यवहारतस्तु सर्वं सप्तरज्जुबाहल्यमिदमुच्यते। व्यवहारनयो हि किंचिदूनसप्तहस्तादिप्रमाणमपि पटादिवस्तु परिपूर्णसप्त-हस्तादिमानं व्यपदिशति, देशतोऽपि च हृष्टं बाहल्यादिधर्मे परिपूर्णेऽपि वस्तुन्यध्यवस्यति स्थूलदृष्टित्वादिति भावः। अत एव तन्मतेनैवात्र सप्तरज्जुबाहल्यता सर्वगता द्रष्टव्या। आयामविष्कंभाभ्यां तु प्रत्येकं देशोनसप्तरज्जुप्रमाणमिदं जातं। व्यवहारतस्तु तत्रापि सप्तरज्जुप्रमाणता द्रष्टव्या। तदेवं लोको व्यवहारनयमतेनात्रायामविष्कंभबाहल्यैः प्रत्येकं सप्त-रज्जुप्रमाणो घनो भवतीति समुदायार्थः। एतच्च वैशाखस्थानस्थितपुरुषाकारं सर्वत्र वृत्तस्वरूपं लोकं संस्थाप्य सर्वं भाव-नीयमिति। प्ररूपितो घनः, संप्रति श्रेणिनिरूपणायाह–'तद्दीहेगपएसा सेढि त्ति' स एव घनीकृतलोकः सप्तरज्जुप्रमाणो

दीर्घं दैर्घ्यं यस्या सा तद्दीर्घा । एकप्रदेशेति वीप्साप्रधानत्वान्निर्देशस्यैकैकाकाशप्रदेशा शुचि श्रेणिरित्युच्यते । एतेन च यत्र कुत्राप्यविशेषिताया श्रेणे सामान्येन ग्रहण तत्र सर्वत्रास्य घनीकृतलोकस्य सबन्धिनीयमेव सप्तरज्जुप्रमाणा एकप्रदेशिकी श्रेणिर्ग्राह्या । अधुना प्रतर प्ररूपयितुमाह–प्रतरश्च प्रतर' पुन । क इत्याह–तद्वर्ग., तस्या. शूचिस्वरूपाया' श्रेणेर्वर्ग शूच्या' शूचिगुणनलक्षणस्तद्वर्ग । कोऽर्थ ? शूच्या शूचेर्गुणन प्रतर उच्यते । तद्यथा–इहासख्येययोजनकोटीकोटीदीर्घापि श्रेणिरसत्कल्पनया त्रिप्रदेशप्रमाणा दृष्टव्या, तस्याश्च तयैव गुणने प्रतरो नवप्रदेशात्मको भवति । स्थापना । इति ॥ ए७ ॥

निरूपित सप्रपंच प्रदेशवन्धस्तत्स्वामी च, तन्निरूपणे च समर्थिता 'नमिय जिण धुवबधोदयसत्ताघाइपुन्नपरियत्ता । सेयर चउहविवागा वुच्छ बधविहसामी य ॥ १ ॥' इत्याद्यद्वारगाथा, अधुना चशब्दसूचितामुपशमश्रेणि क्षपकश्रेणि च व्याचिख्यासु प्रथम तावदुपशमश्रेणि प्रकटयन्नाह–

अणदंसनपुंसित्थी वेयछक्क च पुरिसवेय च । दो दो एगंतरिए सरिसे सरिस उवसमेइ ॥ ए८ ॥

टीका–तत्र प्रथमतोऽनन्तानुवन्धिनामुपशमनाभिधीयते–अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तानामन्यतमोऽन्यतमस्मिन् योगे वर्तमानस्तेज पद्मशुक्ललेश्यानामन्यतमलेश्यायुक्त. साकारोपयोगोपयुक्तोऽन्त सागरोपमकोटीकोटीस्थितिसत्कर्मा करणकालात् पूर्वमप्यन्तर्मुहूर्त काल यावदवर्धमानचित्तसन्ततिरवतिष्ठति ( ते ), तथाऽवतिष्ठमानश्च परावर्तमाना प्रकृती शुभा एव वध्नाति, नाशुभा , अशुभाना च प्रकृतीनामनुभाग चतु स्थानक सन्तं द्विस्थानक करोति-

शुभानां च द्विस्थानकं चतुःस्थानकं । स्थितिबन्धेऽपि च पूर्णे सति अन्यं स्थितिबन्धं पूर्वपूर्वस्थितिबन्धापेक्षया पल्योपमासंख्येयभागहीनं करोति । एवं करणकालात् पूर्वमन्तर्मुहूर्तं कालं यावदवस्थाय ततो यथाक्रमं त्रीणि करणानि प्रत्येकमान्तर्मौहूर्तिकानि करोति । तद्यथा–यथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं चतुर्थीं तूपशांताद्धा । तत्र यथाप्रवृत्तिकरणे प्रविशन् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रविशति, पूर्वोक्तं च शुभप्रकृतिबन्धादिकं तथैव तत्र कुरुते, न च स्थितिघातं रसघातं गुणश्रेणिं गुणसंक्रमं वा करोति, तद्योग्यविशुद्ध्यभावात् । प्रतिसमयं च नानाजीवापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति षट्स्थानपतितानि च । अन्यच्च प्रथमसमयापेक्षया द्वितीयसमयेऽध्यवसायस्थानानि विशेषाधिकानि, ततोऽपि तृतीयसमये विशेषाधिकानि, एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणचरमसमयः, एवमपूर्वकरणेऽपि द्रष्टव्यं । अत एवैतानि स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति । स्थापना चेयं । इह कल्पनया द्वौ पुरुषौ युगपत्करणप्रतिपन्नौ विवक्ष्येते, तत्रैकः सर्वजघन्यया विशोधिश्रेण्या प्रतिपन्नः, अपरस्तु सर्वोत्कृष्टया विशोधिश्रेण्या । तत्र प्रथमजीवस्य प्रथमसमये जघन्या विशोधिः सर्वस्तोका, ततो द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा, एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणाद्धायाः संख्येयभागो गतो भवति । ततः संख्येयभागे गते सति चरमसमये जघन्यविशुद्धेः सकाशात्प्रथमसमये द्वितीयस्य जीवस्योत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि यतो जघन्यविशुद्धिस्थानान्निवृत्तस्तत उपरितनं जघन्यविशोधिस्थानमनन्तगुणं, ततो द्वितीयसमये उत्कृष्टा विशुद्धिरनन्तगुणा, तत उपरितनं जघन्यं विशोधिस्थानमनन्तगुणं, ततस्तृतीयसमये उत्कृष्टा विशुद्धि-

रनन्तगुणा, एवमुपर्यधश्चैकैक विशोधिस्थानमनन्तगुणतया द्वयोर्जीवयोस्तावन्नेय यावद्यथाप्रवृत्तकरणस्य चरमसमये जघन्य विशुद्धिस्थान । ततः शेषाणि उत्कृष्टानि यानि विशोधिस्थानान्यनुक्तानि तिष्ठन्ति तानि निरन्तरमनन्तगुणया वृद्ध्या तावन्नेतव्यानि यावच्चरमसमये उत्कृष्ट विशोधिस्थान । भणितं यथाप्रवृत्तिकरण, सम्प्रत्यपूर्वकरणमुच्यते—तत्रापूर्वकरणे प्रतिसमयमसंख्येयलोकाकाशप्रदेशप्रमाणानि अध्यवसायस्थानानि भवन्ति, प्रतिसमय च षट्स्थानपतितानि । तत्र प्रथमसमये जघन्या विशोधि सर्वस्तोका, सा च यथाप्रवृत्तकरणचरमसमयसत्कोत्कृष्टविशोधिस्थानादनन्तगुणा । तत प्रथमसमय एवोत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततोऽपि तस्मिन्नेव द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा, एवं जघन्यमुत्कृष्ट च विशोधिस्थानमनन्तगुणया वृद्ध्या तावन्नेयं यावदपूर्वकरणस्य चरमसमये जघन्यत उत्कृष्टविशुद्धिरनन्तगुणा । स्थापना चेय । अस्मिंश्चापूर्वकरणे प्रविशन् स्थितिघातं रसघात गुणश्रेणिं गुणसंक्रममन्य स्थितिबन्ध च युगपदारभते । तत्र स्थितिघातो नाम स्थितिसत्कर्मणोऽग्रिमभागादुत्कृष्टतः प्रभूतसागरोपमशतपृथक्त्वमात्र जघन्यत पल्योपमसंख्येयभागमात्र स्थितिखण्डं खण्डयति, तद्दलिक चाधस्त्याया स्थितीर्न खण्डयिष्यति तत्र प्रक्षिपति, अन्तर्मुहूर्तेन च कालेन तत् स्थितिखण्डमुत्कीर्यते खण्ड्यत इत्यर्थ । ततः पुनरप्यधस्तात्पल्योपमसंख्येयभागमात्र स्थितिखण्डमन्तर्मुहूर्तेन कालेनोत्किरति पूर्वोक्तप्रकारेणैव च निक्षिपति । एवमपूर्वकरणाद्धाया प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामन्ति । तथा च सत्यपूर्वकरणस्य प्रथमसमये यत् स्थितिसत्कर्मासीत्तत्तस्यैव चरमसमये संख्येयगुणहीन जात । रसघातो नामाशुभप्रकृतीना यदनुभागसत्कर्म तस्या-

नन्ततमं भागं मुक्त्वा शेषाननुभागानन्तर्मुहूर्तेन कालेनाशेषानपि विनाशयति । ततः पुनरपि तस्य प्रागमुक्तस्यानन्ततमभागस्यानन्ततमं भागं मुक्त्वा शेषाननुभागानन्तर्मुहूर्तेन कालेन विनाशयति । एवमनेकान्यनुभागखंडसहस्राण्येकस्मिन् स्थितिखंडे व्यतिक्रामन्ति । तेषां च स्थितिखंडानां सहस्रैरपूर्वकरणं परिसमाप्यते । गुणश्रेणिर्नामान्तर्मुहूर्तप्रमाणानां स्थितीनामुपरि याः स्थितयो वर्तन्ते, तन्मध्याद्दलिकं गृहीत्वोदयावलिकाया उपरितनीषु स्थितिषु प्रतिसमयमसंख्येयगुणतया निक्षिपति । तद्यथा—प्रथमसमये स्तोकं द्वितीयसमयेऽसंख्येयगुणं, तृतीयसमयेऽसंख्येयगुणं, एवं तावन्नेयं यावदन्तर्मुहूर्तचरमसमयः । तच्चान्तर्मुहूर्तमपूर्वकरणानिवृत्तिकरणकालाभ्यां मनागतिरिक्तं वेदितव्यं । एष प्रथमसमयगृहीतदलिकस्य निक्षेपविधिः । एवं द्वितीयादिसमयगृहीतानामपि दलिकानां निक्षेपो वक्तव्यः । अन्यच्च गुणश्रेणिरचनाय प्रथमसमये यद्दलिकं गृह्यते तत् स्तोकं, ततोऽपि द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं तावन्नेयं यावद्गुणश्रेणिकरणचरमसमयः । अपूर्वकरणसमयेष्वनिवृत्तिकरणसमयेषु चानुभवतः क्रमशः क्षीयमाणेषु गुणश्रेणिदलिकनिक्षेपः शेषे शेषे भवति उपरि च न वर्धत इति । तथा गुणसंक्रमो नाम अपूर्वकरणस्य प्रथमसमयेऽनन्तानुबन्ध्यादीनामशुभप्रकृतीनां यद्दलिकं परप्रकृतिषु संक्रमयति तत्स्तोकं, ततो द्वितीयसमये परप्रकृतिषु संक्रम्यमाणमसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं तावद्वक्तव्यं यावच्चरमसमयः । तथाऽन्यस्थितिबन्धो नामापूर्वकरणस्य प्रथमसमयेऽन्य एवापूर्वः स्तोकः स्थितिबन्ध आरभ्यते । स्थितिबन्धस्थितिघातौ युगपदारभ्येते युगपदेव च निष्ठां यातः । एवमेते पंच पदार्था अपूर्वकरणे प्रवर्तन्ते। व्याख्यातमपूर्वकरणम् । इदानीमनिवृत्तिकरणमुच्यते—अनिवृत्तिकरणं नाम यत्र-

प्रविष्टाना सर्वेषामपि तुल्यकालानामेकमेवाध्यवसायस्थान । तथाहि—अनिवृत्तिकरणस्य प्रथमसमये ये वर्तन्ते ये च वृत्ता ये च वर्तिष्यन्ते तेषा सर्वेषामप्येकरूपमेवाध्यवसायस्थान । द्वितीयसमयेऽपि ये वर्तन्ते ये च वृत्ता ये च वर्तिष्यन्ते तेषामपि सर्वेषामेकरूपमध्यवसायस्थान । नवर प्रथमसमयभाविविशोधिस्थानापेक्षयाऽनन्तगुण । एवं तावद्वाच्यं यावदनिवृत्तिकरणचरमसमय । अत एवास्मिन् करणे प्रविष्टाना तुल्यकालानामसुमता सबन्धिनामध्यवसायस्थानाना परस्पर निवृत्तिर्व्यावृत्तिर्न विद्यत इत्यनिवृत्तिकरणमिति नाम । अस्मिश्चानिवृत्तिकरणे यावन्त. समयास्तावन्त्यध्यवसायस्थानानि पूर्वस्मात्पूर्वस्मादनन्तगुणवृद्धानि। एतानि च मुक्तावलीसस्थाने(न) स्थापयितव्यानि। अत्रापि प्रथमसमयादेवारभ्य पूर्वोक्ता पच पदार्था युगपत्प्रवर्तन्ते । अनिवृत्तिकरणाद्धायाश्च सख्येयेषु भागेषु गतेषु सत्सु एकस्मिन् भागेऽवतिष्ठमानेऽनन्तानुबन्धिनामधस्तादावलिकामात्र मुक्त्वाऽन्तर्मुहूर्तप्रमाणमन्तरकरणमभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्त्तप्रमाणेन कालेन करोति, अन्तरकरणसत्क च दलिकमुत्कीर्यमाण परप्रकृतिषु वध्यमानासु प्रक्षिपति, प्रथमस्थितिगत च दलिकमावलिकामात्र वेद्यमानासु परप्रकृतिषु स्तिवुकसक्रमेण सक्रमयति, अन्तरकरणे कृते सति द्वितीयसमयेऽनन्तानुबन्धिनामुपरितनस्थितिदलिकमुपशमयितुमारभते । तद्यथा—प्रथमसमये स्तोकमुपशमयति, द्वितीयसमयेऽसख्येयगुण, तृतीयसमयेऽसख्येयगुण, एव यावदन्तर्मुहूर्त कालं । एतावता च कालेन साकल्यतोऽनन्तानुबन्धिन उपशमिता भवन्ति । उपशमिता नाम यथा रेणुनिकर सलिलबिन्दुनिवहैरभिषिच्याभिषिच्य द्रुघणादिभिर्निष्कुट्टितो नि.स्यन्दो भवति, तथा कर्मरेणुनिकरोऽपि विशोधिसलिलप्रवाहेण परिषिच्य परिषिच्यानिवृत्तिकरणरूपद्रुघणनिष्कुट्टित. सक्रमणोदयोदीरणा ( निधत्त )

निकाचनकरणानामयोग्यो भवति । तदेवमेकेषामाचार्याणां मतेनानन्तानुबन्धिनामुपशमनाभिहिता । अन्ये त्वाचक्षते—अनन्तानुबन्धिनामुपशमना न भवति, किं तु विसंयोजनैव । विसंयोजना क्षपणा, सा चैवं—इह श्रेणिमप्रतिपद्यमाना अपि अविरता विरताश्चतुर्गतिका अपि । तद्यथा—नारका देवा अविरतसम्यग्दृष्टयः, तिर्यंचोऽविरतसम्यग्दृष्टयो देशविरता वा, मनुष्या अविरतसम्यग्दृष्टयो देशविरताः सर्वविरता वा अनन्तानुबन्धिनां विसंयोजनार्थं यथाप्रवृत्त्यादीनि त्रीणि करणानि कुर्वन्ति, करणवक्तव्यता सर्वापि प्राग्वत् । नवरमिहानिवृत्तिकरणे प्रविष्टः सन् अन्तरकरणं न करोति । उक्तं च कर्मप्रकृतौ—" चउगइया पज्जत्ता तिन्नि विसंजोयणे विसंजोयंति । करणेहिं तीहिं सहिया नंतरकरणं उवसमो वा ॥ १ ॥ " अस्या अक्षरगमनिका—चतुर्गतिका नारकतिर्यङ्मनुष्यदेवाः सर्वाभिः पर्याप्तिभिः पर्याप्तास्त्रयोऽप्यविरतदेशविरतसर्वविरताः । तत्राविरतसम्यग्दृष्टयश्चतुर्गतिकाः, देशविरतास्तिर्यंचो मनुष्या वा, सर्वविरता मनुष्या एव । संयोजनाननन्तानुबन्धिनो विसंयोजयन्ति विनाशयन्ति । किंविशिष्टाः सन्त इत्याह—करणैस्त्रिभिर्यथाप्रवृत्त्यपूर्वकरणानिवृत्तिबादरैः सहिताः । नवरमिहान्तरकरणं न वक्तव्यं, उपशमो वा उपशमश्चानन्तानुबन्धिनां न भवतीत्यर्थः । किं तु कर्मप्रकृत्यभिहितस्वरूपेणोद्वलनासंक्रमेणाधस्तादावलिकामात्रं मुक्त्वा उपरि निरवशेषाननन्तानुबन्धिनो विनाशयति, आवलिकामात्रं तु स्तिबुकसंक्रमेण वेद्यमानासु प्रकृतिषु संक्रमयति । तदेवमुक्ताऽनन्तानुबन्धिनां विसंयोजना । संप्रति दर्शनत्रिकस्योपशमना भण्यते—तत्र मिथ्यात्वस्योपशमना मिथ्यादृष्टेर्वेदकसम्यग्दृष्टेश्च, सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु वेदकसम्यग्दृष्टेरेव । तत्र मिथ्यादृष्टेर्मिथ्यात्वोपशमना प्रथमं सम्यक्त्वमुत्पादयतः । सा चैवं—पंचेन्द्रियः संज्ञी सर्वाभिः पर्या-

भिन्नि पर्याप्त करणकालात्पूर्वमप्यन्तर्मुहूर्तं कालं प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रवर्धमानोऽभव्यसिद्धिकविशु-द्ध्यपेक्षयाऽनन्तगुणविशुद्धिको मतिश्रुताज्ञानविभङ्गज्ञानानामन्यतमस्मिन् साकारोपयोगे उपयुक्तोऽन्यतमस्मिन् योगे वर्तमानो जघन्यपरिणामेन तेजोलेश्याया मध्यमपरिणामेन पद्मलेश्यायामुत्कृष्टपरिणामेन शुक्ललेश्याया वर्तमानो मिथ्या-दृष्टिश्चतुर्गतिकोऽन्त सागरोपमकोटीकोटीस्थितिसत्कर्मा, इत्यादि पूर्वोक्तं तावद्वाच्य यावद्यथाप्रवृत्तिकरणमपूर्वकरणं च परिपूर्णं भवति । नवरमिहापूर्वकरणे गुणसक्रमो न वक्तव्य , किंतु स्थितिघातरसघातस्थितिबन्धगुणश्रेणय एव वक्तव्याः गुणश्रेणिदलिकरचनाप्युदयसमयादारभ्य वेदितव्या । ततोऽनिवृत्तिकरणेऽप्येव वक्तव्य । अनिवृत्तिकरणाद्धायाश्च सख्ये-येषु भागेषु गतेषु सत्सु एकस्मिन् सख्येयतमे भागेऽवतिष्ठमानेऽन्तर्मुहूर्तमात्रमधो मुक्त्वा मिथ्यात्वस्यान्तरकरणमन्तर्मु-हूर्तप्रमाण प्रथमस्थिते किंचित् समधिक न्यून वाऽभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्तेन कालेन करोति । अन्तरकरण-सत्कं च दलिकमुत्कीर्य प्रथमस्थितौ द्वितीयस्थितौ च वर्तमान उदीरणाप्रयोगेण यत्प्रथमस्थितिगत दलिक समाकृष्यो-दये प्रक्षिपति सा उदीरणा । यत्पुनर्द्वितीयस्थिते. सकाशादुदीरणाप्रयोगेणैव दलिक समाकृष्योदये प्रक्षिपति सा उदी-रणापि पूर्वसूरिभिर्विशेषप्रतिपत्त्यर्थमागाल इत्युच्यते । उदयोदीरणाभ्या च प्रथमस्थितिमनुभवन् तावद्गतो यावदावलि-काद्वय शेष तिष्ठति । तस्मिश्च स्थिते आगालो व्यवच्छिद्यते । तत उदीरणैव केवला प्रवर्तते, सापि तावद्यावदावलिकाशेषो न भवति, आवलिकाया तु शेषीभूतायामुदीरणापि निवर्तते, तत केवलेनैवोदयेनावलिकामात्रमनुभवति । आवलिका-मात्रचरमसमये च द्वितीयस्थितिगत दलिकमनुभागभेदेन त्रिधा करोति । तद्यथा—सम्यक्त्वं सम्यग्मिथ्यात्व मिथ्यात्व चेति।

उक्तं च कर्मप्रकृतिचूर्णौ–" चरमसमयमिच्छदिठ्ठी सेअ काले उवसमसम्मदिठ्ठी होहिई ताहे बिइयठिइं तिहाणुभागं करेइ । तं जहा–सम्मत्तं सम्मामिच्छत्तं मिच्छत्तं चेति । " स्थापना । ततोऽन्तरसमये मिथ्यात्वस्योदयाभावादौपशमिकं सम्यक्त्व-मवाप्नोति । उक्तं च कर्मप्रकृतौ–" मिच्छुदए खीणे लहइ संमत्तमोवसमियं सो । लंभेण जस्स लब्भइ आयहियमलद्धपुव्वं जं । " अन्यत्राप्युक्तं–"जात्यन्धस्य यथा पुंसश्चक्षुर्लाभे शुभोदये । सद्दर्शनं तथैवास्य सम्यक्त्वे सति जायते ॥ १ ॥ आनन्दो जायतेऽत्यन्तं सात्त्विकोऽस्य महात्मनः । सद्व्याध्यपगमे यद्वद्व्याधितस्य सदौषधात् ॥ २ ॥ एत्र च प्रथमसम्यक्त्व-लाभो मिथ्यात्वस्य सर्वोपशमनाद्भवति । उक्तं च" सम्मत्तपढमलंभो सव्वोवसमा " इति सम्यक्त्वं चेदं प्रतिपद्यमानः कश्चिद्देशविरतिसहितं प्रपद्यते, कश्चित्सर्वविरतिसहितं । उक्तं च पंचसंग्रहे–" सम्मत्तेणं समगं सव्वं देसं च कोवि पडि-वज्जे" । बृहच्छतकबृहच्चूर्णावप्युक्तं–" उवसमसम्मद्दिठ्ठी अंतरकरणे ठिउ कोइ देसविरइं पि लहेइ । कोइ पमत्तापमत्त-भावं पि, सासायणो पुण न किं पि लहेइ त्ति " । ततो देशविरतप्रमत्ताप्रमत्तसंयतेष्वपि मिथ्यात्वमुपशान्तं लभ्यते । संप्रति वेदकसम्यग्दृष्टेस्त्रयाणामपि दर्शनमोहनीयानामुपशमनाविधिरुच्यते–इह वेदकसम्यग्दृष्टिः संयमे वर्तमानः सन्न-

---

१ चरमसमयमिथ्यादृष्टिरसौ भविष्यति भविष्यति औपशमिकसम्यग्दृष्टिस्तदा द्वितीयस्थितिं त्रिधानुभागं करोति, तद्यथा सम्यक्त्वं सम्यग्मिथ्यात्वं मिथ्यात्वं च । २ मिथ्यात्वोदये क्षीणे लभते सम्यक्त्वमौपशमिकं सः। लाभेन तस्य लभ्यत आत्महितमलब्धपूर्वं यत् ॥ १ ॥ ३ सम्यक्त्वप्रथमलाभः सर्वोपशमात् ( मिथ्यात्वस्येति प्रकृतं ) ४ सम्यक्त्वेन समं सर्वविरतिं देशविरतिं च कोपि प्रतिपद्येत । ५ औप-शमिकसम्यग्दृष्टिरंतरकरणे स्थितः कश्चित् देशविरतिमपि लभते, कश्चित् प्रमत्ताप्रमत्तत्वमपि, सास्वादनः पुनर्न किमपि लभते ।

न्तर्मुहूर्तमात्रेण कालेन दर्शनत्रितयमुपशमयति, उपशमयतश्च करणत्रिकादिविधिर्यथा कर्मप्रकृतिटीकाया तथा वेदितव्य । एवमुपशान्तदर्शनमोहनीयत्रिकश्चारित्रमोहनीयमुपशमयितुकाम पुनरपि यथाप्रवृत्तादीनि त्रीणि करणानि करोति । करणाना च स्वरूप प्राग्वत्, केवलमिह यथाप्रवृत्तकरणमप्रमत्तगुणस्थानके द्रष्टव्य, अपूर्वकरणमपूर्वकरणगुणस्थानके, अनिवृत्तिकरणमनिवृत्तिकबादरसंपरायगुणस्थानके । अत्रापि स्थितिघातादय पूर्ववदेव प्रवर्तन्ते, नवरमिह सर्वासामशुभप्रकृतीनामबध्यमानाना गुणसक्रम प्रवर्तते इति वक्तव्य । अपूर्वकरणाद्धायाश्च सख्येयतमे भागे गते सति निद्राप्रचलयोर्बन्धव्यवच्छेद । तत प्रभूतेषु स्थितिखण्डसहस्रेषु गतेषु सत्सु अपूर्वकरणाद्धाया संख्येया भागा गता भवन्ति एकोऽवशिष्यते । अत्र चान्तरे देवगतिदेवानुपूर्वीपंचेन्द्रियजातिवैक्रियशरीरवैक्रियागोपागाहारकशरीराहारकागोपागतैजसकार्मणसमचतुरस्रवर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासत्रसबादरपर्याप्तप्रत्येकप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेयनिर्माणतीर्थकरसज्ञिताना त्रिशत प्रकृतीना बन्धव्यवच्छेद । तत स्थितिखंडपृथक्त्वे गते सत्यपूर्वकरणाद्धायाश्चरमसमये हास्यरतिभयजुगुप्साना बन्धव्यवच्छेद, हास्यरत्यरतिशोकभयजुगुप्सानामुदयव्यवच्छेद सर्वकर्मणा देशोपशमना निधत्तिनिकाचनाकरणव्यवच्छेदश्च । ततोऽनन्तरसमयेऽनिवृत्तिकरणे प्रविशति, तत्रापि स्थितिघातादीनि पूर्ववत्करोति । ततोऽनिवृत्तिकरणाद्धाया संख्येयेषु भागेषु गतेषु सत्सु दर्शनसप्तकशेषाणामेकविंशतिमोहनीयप्रकृतीनामन्तरकरण करोति । तत्र चतुर्णा सज्वलनानामन्यतमस्य वेद्यमानस्य सज्वलनस्य त्रयाणा च वेदानामन्यतमस्य वेद्यमानस्य वेदस्य प्रथमा स्थिति स्वोदयकालप्रमाणा, शेषाणा त्वेकादशकषायाणामष्टाना च नोकषायाणामावलिकामात्र । स्वोदयकाल-

प्रमाणं च चतुर्णां संज्वलनानां त्रयाणां च वेदानामिदं—स्त्रीवेदनपुंसकवेदयोरुदयकालः सर्वस्तोकः, स्वस्थाने च परस्परं तुल्यं। ततः पुरुषवेदस्य संख्येयगुणः, ततः संज्वलनक्रोधस्य विशेषाधिकः, ततः संज्वलनमानस्य विशेषाधिकः, ततः संज्वलनमायाया विशेषाधिकः, ततः संज्वलनलोभस्य विशेषाधिकः। इहानिवृत्तिकरणे बहु वक्तव्यं, तत्तु ग्रन्थगौरवभयान्नोच्यते, केवलं विशेषार्थिना कर्मप्रकृतिटीका निरीक्षितव्या। अन्तरकरणं च कृत्वा, ततो नपुंसकवेदमन्तर्मुहूर्तमात्रेणोपशमयति, ततोऽन्तर्मुहूर्तमात्रेण स्त्रीवेदं, ततोऽन्तर्मुहूर्तमात्रेण हास्यादिषट्कं, तस्मिंश्चोपशान्ते तस्मिन्नेव समये पुरुषवेदस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन पुरुषवेदमुपशमयति। ततो युगपदन्तर्मुहूर्तमात्रेणाप्रत्याख्यानावरणप्रत्याख्यानावरणक्रोधावुपशमयति, तदुपशान्तौ च तत्समयमेव संज्वलनक्रोधोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन संज्वलनक्रोधमुपशमयति। ततोऽन्तर्मुहूर्तमात्रेणाप्रत्याख्यानावरणप्रत्याख्यानावरणमानौ युगपदुपशमयति, तदुपशान्तौ च तत्समयमेव संज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन संज्वलनमानमुपशमयति। ततो युगपदन्तर्मुहूर्तमात्रेणाप्रत्याख्यानावरणप्रत्याख्यानावरणमाये उपशमयति, तदुपशान्तौ च तत्समयमेव संज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन संज्वलनमायामुपशमयति। ततो युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणलोभावुपशमयति, तत्समयमेव संज्वलनलोभस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः संज्वलनलोभमुपशमयंस्त्रिधा करोति, द्वौ भागौ युगपदुपशमयति, तृतीयभागं संख्येयखंडानि करोति, तान्यपि पृथक् पृथक् कालभेदेनोपशमयति, पुनः संख्येयानां खंडानां किट्टीत्यपरपर्यायाणां चरमखंडमसंख्येयानि खंडानि सूक्ष्मकिट्टी-

तावत्पर्यायाणि करोति, ततः समये समये एकैकं खण्डमुपशमयतीति । इह च दर्शनसप्तके उपशान्ते निवृत्तिबादरोऽभि-धीयते, ततः ऊर्ध्वमनिवृत्तिबादरो यावल्लोभस्यासंख्येयान्तिमचरमखण्डमिति । प्ररूपिता मोहनीयस्याष्टाविंशतिभेदभिन्न-स्याप्युपशमना । सम्प्रति गाथार्थो निगद्यते—इहोपशमश्रेणिप्रारम्भको ऽप्रमत्तसंयत एव । अन्ये तु प्रतिपादयन्ति—अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतम इति । श्रेणिपरिसमाप्तौ चाविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमो भवति, स च प्रथम युगपत् 'अण त्ति' अनन्तानुबन्धिन क्रोधमानमायालोभानुपशमयति । ततो दर्शनं दर्शस्तं दर्शं मिथ्यात्वसम्यग्मिथ्यात्वसम्यग्दर्शनं युगपदुपशमयति, ततोऽनुदीर्णमपि नपुंसकवेदं । यदि पुरुषः प्रारम्भकस्ततः प्रथमं नपुंसकवेदं, ततः पश्चात् स्त्रीवेदं, ततः षट् हास्यरत्यरतिशोकभयजुगुप्सालक्षणं, ततः पुरुषवेदं । अथ स्त्री प्रारम्भिका ततः प्रथमं नपुंसकवेदं, ततः पुरुषवेदं, ततः षट्कं, ततः स्त्रीवेदमिति । अथ नपुंसक एव प्रारम्भकस्ततोऽसावनुदीर्णमपि प्रथमं स्त्रीवेदमुपशमयति, ततः पुरुषवेदं, ततः षट्कं, ततो नपुंसकवेदमिति । पुनश्च द्वौ द्वौ क्रोधाद्यावेकान्तरितौ संज्वल-नविशेषक्रोधाद्यन्तरितौ सदृशौ तुल्यावुपशमयति । अयमर्थः—अप्रत्याख्यानावरणप्रत्याख्यानावरणक्रोधौ सदृशौ क्रोध-त्वेन युगपत् उपशमयति, ततः संज्वलनक्रोधमेकाकिनं । ततोऽप्रत्याख्यानावरणप्रत्याख्यानावरणमानौ युगपदुपशम-यति, ततः संज्वलनमानं । ततोऽप्रत्याख्यानावरणप्रत्याख्यानावरणमाये युगपदुपशमयति, ततः संज्वलनमायां । ततो-ऽप्रत्याख्यानावरणप्रत्याख्यानावरणलोभौ युगपदुपशमयति, ततः संज्वलनलोभमिति । स्थापना चेयं । ननु संज्वलना-दीनां युक्त उपशमः, अनन्तानुबन्धिनां तु दर्शनप्राप्तावेवोपशमितत्वान्न युज्यते, न, दर्शनप्रतिपत्तौ तेषां क्षयोपशमादिह

चोपशमादित्यविरोध इति। आह–क्षयोपशमोपशमयोः कः प्रतिविशेषः? उच्यते–क्षयोपशमो ह्युदीर्णस्य क्षयोऽनुदीर्णस्य च विपाकानुभवापेक्षयोपशमः, प्रदेशानुभवतस्तु उदयोऽस्त्येव, उपशमे तु प्रदेशानुभवोऽपि नास्तीति। यदाह भाष्यपीयूषपाथोधिः–"वेएइ संतकम्मं खओवसमिएत्थ नाणुभावं सो। उवसंतकसाओ पुण वेएइ न संतकम्मं पि॥ १॥" अन्यत्राप्युक्तं–"उवसंतं कम्मं जं न तओ कड्ढेइ न देइ उदए वि। न य गम्मई परपगइं न चेव उक्कड्ढए तं तु॥ १॥" अस्याक्षरगमनिका–सर्वोपशमेन यदुपशान्तं मोहनीयं कर्म, अन्यस्य सर्वोपशमायोगात् "सव्वोवसमो मोहस्स चेव" इति वचनात्, न तदपकर्षति न तदपवर्तनाकरणेन स्थितिरसाभ्यां हीनं करोतीत्यर्थः। अपिशब्दस्य भिन्नक्रमत्वान्नाप्युदये तद्ददाति नापि तद्वेदयतीत्यर्थः। उपलक्षणात्तदविनाभाविन्यामुदीरणायामपि न ददातीत्यपि मन्तव्यं। न च वध्यमानसजातीयरूपां परप्रकृतिं संक्रमकरणेन गमयति संक्रमयति। न च तत्कर्मोपशान्तं सदुत्कर्षयति उद्वर्तनाकरणेन स्थितिरसाभ्यां वृद्धिं नयति, निधत्तिनिकाचनायास्तु प्रागपूर्वकरणकाल एव निवृत्तत्वान्नेहोपशान्तत्वेन तन्निषेधः क्रियते इति। आह–संयतस्यानन्तानुबन्धिनामुदयो निषिद्धस्तत्कथमुपशम इत्युच्यते–स ह्यनुभागकर्मांगीकृत्य, न तु प्रदेशकर्मेति। तथा चाभ्यधायि परमगुरुणा–जीवेणं भंते सयंकडं कम्मं वेएइ? गोयमा! अत्थेगइयं वेएइ अत्थे गइयं न वेएइ।

---

१ वेदयति सत्कर्म क्षायोपशमिकोऽत्र नानुभावं सः। उपशान्तकषायः पुनर्वेदयति न सत्कर्मापि। २ जीवो भदन्त स्वयंकृतं कर्म वेदयति? गौतमास्त्येकं किंचिद्वेदयति। एककं न वेदयति तत्केनार्थेन (इति) पृच्छा गौतम द्विविधं कर्म प्रज्ञप्तं तद्यथा प्रदेशकर्म चानुभागकर्म च तत्र यदनुभागकर्म तदस्त्येककं वेदयति एककं (च) न वेदयति।

मे केणट्ठेणं पुच्छा ? गोयमा ! दुविहे कम्मे पन्नत्ते, त जहा–पएसकम्मे य अणुभागकम्मे य, तत्थ णं जं अणुभागकम्म तं अत्थेगइय वेएइ अत्थेगइयं न वेएइ" इत्यादि । ततश्च प्रदेशकर्मानुभवोदयस्येहोपशमो द्रष्टव्य । आह–यद्येव सयतस्यानन्तानुबन्ध्युदयतः कथ दर्शनविघातो न भवतीत्युच्यते–प्रदेशकर्मणो मन्दानुभावत्वात् । तथा कस्यचिदनुभागकर्मानुभावोऽपि नात्यन्तमपकाराय भवन्नुपलभ्यते । यथा सपूर्णमत्यादिचतुर्ज्ञानिनस्तदावरणोदय इति । तत सूक्ष्मलोभचरमकिट्टयुपशमे सज्वलनलोभ उपशान्तो भवति, तत्समयमेव च ज्ञानावरणपचकदर्शनावरणचतुष्कान्तरायपंचकयश -कीर्त्युच्चैर्गोत्राणा बन्धव्यवच्छेद', ततोऽनन्तरसमयेऽसावुपशान्तकषायो भवति, स च जघन्येनैक समयमात्रमुत्कर्षेण त्वन्तर्मुहूर्तं काल यावत्, तत ऊर्ध्व नियमादसौ प्रतिपतति। प्रतिपातश्च द्विधा–भवक्षयेणाद्धा क्षयेण च। तत्र भवक्षयो भवक्षयेण म्रियमाणस्य, अद्धाक्षय उपशान्ताद्धाया समाप्तायां । अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति । यत्र यत्र बन्धोदयोदीरणा व्यवच्छिन्नास्तत्र तत्र पतता सता ते आरभ्यन्त इति यावत् । प्रतिपतश्च तावत्प्रतिपतति यावत्प्रमत्तसयतगुणस्थानक । कश्चित् पुनस्ततोऽप्यधस्तन गुणस्थानकद्वयं याति, कोऽपि सास्वादनभावमपि, यः पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धनादीनि करणानि प्रवर्तयतीति शेष. । उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते, तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभाव' । य' पुनरेकं वार प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपि । उक्त च सप्ततिकाचूर्णौ–"जो दुवारे उवसमसेढिं पडिवज्जइ तस्स नियमा तंमि भवे खवगसेढी नत्थि, जो इक्कसि उव-

१ यो द्वे वारे उपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन्भवे क्षपकश्रेणिर्नास्ति, य सकृदेवोपशमश्रेणिं प्रतिपद्यते तस्य भवेत्क्षपकश्रेणि ।

समसेढिं पडिवज्जइ तस्स खवगसेढी हुज्ज त्ति"। एष कामग्रन्थिकाभिप्रायः । सिद्धान्ताभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते। उक्तं च कल्पाध्ययने—"एवं अप्परिवडिए सम्मत्ते देवमणुयजम्मेसु । अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं ॥ १ ॥" सर्वाणि सम्यक्त्वदेशविरत्यादीनि । अन्यत्राप्युक्तं—"मोहोपशम एकस्मिन् भवे द्विः स्यादसंततः। यस्मिन् भवे तूपशमः क्षयो मोहस्य तत्र न ॥ १ ॥" इति ॥ ९८ ॥

तदेवमभिहिता सप्रपंचमुपशमश्रेणिः, संप्रति क्षपकश्रेणिमभिधित्सुराह—

**अणमिच्छमीससम्मं तिआउइगविगलथीणतिगुज्जोयं। तिरिनरयथावरदुगं साहारायवअडनपुत्थीए**

टीका—इह क्षपकश्रेणिप्रतिपत्ता मनुष्यो वर्षाष्टकस्योपरि वर्तमानोऽविरतादीनामन्यतमोऽत्यन्तं विशुद्धपरिणाम उत्तमसंहननस्तत्र पूर्वविदप्रमत्तः शुक्लध्यानोपगतोऽपि प्रतिपद्यते। अपरे तु धर्मध्यानोपगत एवेति। प्रतिपत्तिक्रमश्चायं—अविरतो देशविरतः प्रमत्तसंयतोऽप्रमत्तसंयतो वा प्रथममन्तर्मुहूर्तेन 'अण त्ति' अनन्तानुबन्धिनः क्रोधमानमायालोभान् युगपत् क्षपयति। तदनन्ततमभागं तु मिथ्यात्वे प्रक्षिप्य ततो मिथ्यात्वं सहैव तदंशेन युगपत् क्षपयति। यथा ह्यतिसंभृतो दावानलः खल्वर्धदग्धेन्धन एवेन्धनान्तरमासाद्योभयमपि दहति, एवमसावपि क्षपकस्तीव्रशुभपरिणामत्वात् सावशेषमन्यत्र प्रक्षिप्य क्षपयतीति। एवं पुनः 'मीसं ति' सम्यग्मिथ्यात्वं क्षपयति, ततोऽनेनैव क्रमेण सम्यक्त्वं क्षपयति, सम्यक्त्वस्य च चरमस्थितिखंडे उत्कीर्णे सति असौ क्षपकः कृतकरण इत्युच्यते। अस्यां च कृतकरणाद्धायां वर्त-

१ एवमपरिपतिते सम्यक्त्वे देवमनुष्यजन्मनोः। अन्यतरश्रेणिवर्जमेकभवेन च सर्वाणि (प्रतिपद्यते)।

लेश्यायामपि च पूर्वं शुक्ललेश्यायामासीत्, सम्प्र-
मान' कश्चित्कालमपि कृत्वा चतसृणा गतीनामन्यतमस्या गतावुत्पद्यते, उक्त च–“पट्ठवगो उ मणुस्सो निट्ठ
त्यन्यतमस्या गच्छति । तदेव प्रस्थापको मनुष्यो निष्ठापकश्चतसृष्वपि गतिषु भवति । मरणसम्भवतो व्युपर-
गगो चउसु वि गईसु । ” इह यदि वद्धायु क्षपकश्रेणिमारभतेऽनन्तानुवन्धिना च क्षयादनन्तर क्षीणमिथ्या-
मति, तत कदाचिन्मिथ्यात्वोदयाद्भूयोऽप्यनन्तानुवन्धिन उपचिनोति तद्बीजस्य मिथ्यात्वस्याविनाशात् । प्रतिपतितपरिणामस्तु
दर्शनस्तु नोपचिनोति बीजाभावात् । क्षीणसप्तकस्त्वप्रतिपतितपरिणामोऽवश्यं त्रिदशेषूत्पद्यते । जइ मरिज्जा ।
नानापरिणामसम्भवाद्यथापरिणाममन्यतमस्या गतावुत्पद्यते । उक्त च–“वद्धाऊ पडिवन्नो पढमकसायक्खए उवरयपरिणामो-
तो मिच्छत्तोदयओ चिणिज्ज भूओ न खीणमि ॥ १ ॥ तमि मओ जाइ दिव तप्परिणामो य सत्तए खीणे । नियमादवतिष्ठते,
पुण पच्छा नाणामइगईओ ॥ २ ॥ ” वद्धायुष्कोऽपि यदि तदानीं कालं न करोति तथापि सप्तके क्षीणे आह पर –
न तु चारित्रमोहनीयक्षपकाय यत्नमारभते । उक्त च–“वद्धाऊ पडिवन्नो नियमा खीणंमि सत्तए ठाइ त्ति”। सम्यग्दर्शनपरिक्षये
ननु मिथ्यादर्शनादिक्षये किमसावदर्शनो जायत उत नेति ? उच्यते–सम्यग्दृष्टिरेवासौ । आह–ननु तत्परिक्षये
कुत सम्यग्दृष्टित्व ? उच्यते–निर्मदनीयकृतकोद्रवकल्पा अपनीतमिथ्यात्वभावा मिथ्यात्वपुद्गला एव सम्यग्दर्शन, मिथ्यात्वोदयतश्चिनुया

१ प्रस्थापको मनुष्यो निष्ठापकश्चतसृष्वपि गतिषु । २ वद्धायु प्रतिपन्न प्रथमकपायक्षये यदि म्रियेत । तदा नियमात्क्षीणे
भूयो न क्षीणे ।१। तस्मिन्मृतो याति दिव तत्परिणामश्च सप्तके क्षीणे । उपरतपरिणाम पुन पश्चान्नानागती ।३ वद्धायुष्क प्रतिपन्नो
सप्तके तिष्ठति ।

च तत्त्वश्रद्धानलक्षणपरिणामाप्रतिपातात् प्रत्युत श्लक्ष्णाभ्रपटलापगमे चक्षुर्दर्शनवद्विशुद्धतरापत्तेः । यदाह भाष्यसुधांभोनिधिः—"खीणंमि दंसणतिए किं होइ तओ तिदंसणाईओ । भन्नइ सम्मद्दिट्ठी सम्मत्तखए कओ सम्मं ॥ १ ॥ निव्वलियमयणकुद्दवरूवं मिच्छत्तमेव सम्मत्तं । खीणं न उ जो भावो सद्दहणालक्खणो तस्स ॥ २ ॥ सो तस्स विसुद्धयरो जायइ संमत्तपुग्गलक्खयओ । दिट्ठि व्व सण्हसुद्धब्भपडलविगमे मणूसस्स ॥ ३ ॥ यदि वा—जह सुद्धजलाणुगयं दुद्धं सुद्धं जलक्खए सुतरं । सम्मत्तसुद्धपुग्गलपरिक्खए दंसणं एवं ॥ ४ ॥ तम्मि य तइयचउत्थे भवंमि सिझंति खइयसम्मत्ते । सुरनरयजुगलिसु गई इमं तु जिणकालियनराणं ॥ ५ ॥ " तदेवं सप्तकक्षयोऽविरतसम्यग्दृष्टौ देशविरते प्रमत्तसंयतेऽप्रमत्तसंयते वा प्राप्यते । यदि पुनरबद्धायुः क्षपकश्रेणिमारभते ततः सप्तके क्षीणे नियमादनुपरतपरिणाम एव चारित्रमोहनीयक्षपणाय यत्नमारभते । उक्तं च भाष्यकृता—"ईयरो अणुवरओच्चिय सयलं सेढिं समाणेइ । "तत्र यः सकलश्रेणिं करोति तस्य क्षपकस्य निजनिजभवे सुरनारकतिर्यगायुस्त्रयं व्यवच्छिन्नमेव । उक्तं च—"सुरनरयतिरियआउं निययभवे सव्व-

---

१ क्षीणे दर्शनत्रिके किं भवति. स त्रिदर्शनातीतः । भण्यते, सम्यग्दृष्टिः, सम्यक्त्वक्षये कुतः सम्यक्त्वम् ॥ १ ॥ निर्मदनीकृतमदनकोद्रवरूपं मिथ्यात्वमेव सम्यक्त्वम् । क्षीणं ( तत् ) न पुनस्तस्य यः श्रद्धालक्षणो भावः ॥ २ ॥ स तस्य विशुद्धतरो जायते सम्यक्त्वपुद्गलक्षयात् । दृष्टिरिव श्लक्ष्णशुद्धाभ्रपटलविगमे मनुष्यस्य ॥ ३ ॥ अथवा शुद्धजलानुगतं दुग्धं शुद्धं जलक्षये सुतराम् । सम्यक्त्वशुद्धपुद्गलपरिक्षये दर्शनमेवम् ॥ ४ ॥ तस्मिंश्च ( सति ) तृतीये चतुर्थे वा भवे सिध्यति क्षायिकसम्यक्त्वे । सुरनारकयुग्मिपु गतिरिदं तु जिनकालीननराणां ॥ ५ ॥ २ इतरोऽनुपरत एव सकलां श्रेणिं समापयति । ३ सुरनिरयतिर्यगायूंषि निजकभवे सर्वजीवानां ( क्षपकश्रेणिमतां ) ।

जीवाणमिति" । एतदेवाह–'तिआउ त्ति' देवायुर्नारकायुस्तिर्यगायुर्लक्षणमायुस्त्रय, स च क्षपक स्वरूपसम्यग्दर्शनावशेष
एव 'अरु त्ति' अष्टप्रकृतीरप्रत्याख्यानावरणप्रत्याख्यानावरणकषायरूपा युगपत् क्षपयितुमारभते । एतासु चार्धक्षपिता-
स्वेवान्तराले त्रयोदश नामप्रकृतीस्तिस्रो दर्शनावरणप्रकृतीरुभयी षोडश प्रकृती क्षपयति । तथाहि–'इगविगलेत्यादि'
'इग त्ति' एकेन्द्रियजाति, त्रिकशब्दस्य प्रत्येक सबन्धाद्विकलत्रिक द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिलक्षणं, स्त्यानर्द्धि-
त्रिक निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिरूप, 'उजोय ति' उद्योतनाम, द्विकशब्दस्य प्रत्येक सबन्धात्तिर्यग्द्विक तिर्यग्गतितिर्यगानु-
पूर्वीरूप, नरकद्विक नरकगतिनरकानुपूर्वीरूप, स्थावरद्विक स्थावरसूक्ष्माख्य, 'साहार त्ति' साधारणनाम, आतपनामेति ।
ततो यदष्टाना कषायाणा यावदवशिष्टं तत्क्षपयति, सर्वमिदमन्तर्मुहूर्तमात्रेण क्षपयति, एप सूत्रादेश । अन्ये पुनराहु'—
षोडशकर्माण्येव पूर्व क्षपयितुमारभते, केवलमपान्तरालेऽष्टौ कषायान् क्षपयति, पश्चात् षोडश कर्माणीति, ततो 'नपु
त्ति' नपुसकवेद, तत स्त्रीवेदमिति ॥ ९९ ॥

छगपुंसंजलणादोनिद्दविग्घवरणक्खए नाणी । देविंदसूरिलिहियं सयगमिणं आयसरणट्ठा ॥ १०० ॥

टीका–ततः षट्क हास्यरत्यरतिशोकभयजुगुप्सालक्षणं, तत पुवेद खण्डत्रय करोति, तत खण्डद्वय युगपत्क्षपयति, तृती-
यखण्ड तु सज्वलनक्रोधे प्रक्षिपति । पुरुषे प्रतिपत्तर्यय क्रम· । अथ स्त्री प्रारंभिका तत प्रथम नपुसकवेद क्षपयति, तत
पुरुषवेद, ततो हास्यादिषट्क, तत स्त्रीवेदं । अथ नपुसक प्रारभक ततोऽसावनुदीर्णमपि प्रथम स्त्रीवेद क्षपयति, तत·
पुरुषवेद, ततो हास्यादिषट्क, ततो नपुसकवेद, ततः सज्वलनान् क्रोधमानमायालोभलक्षणान् प्रत्येकमन्तर्मुहूर्तमात्रकाले-

नोक्तेनैव न्यायेन क्षपयति । श्रेणिपरिसमाप्तिकालोऽप्यन्तर्मुहूर्तमेव, अन्तर्मुहूर्तानामसंख्येयभेदत्वात् । लोभचरमखण्डं तु संख्येयानि खण्डानि कृत्वा पृथक् पृथक् कालभेदेन क्षपयति । चरमखण्डं पुनरसंख्येयानि खण्डानि करोति, तान्यपि समये समय एकैकं क्षपयति । स्थापना चेयं । इह च क्षीणदर्शनसप्तको निवृत्तिबादर उच्यते, तत ऊर्ध्वमनिवृत्तिबादरो याव-च्चरमलोभखंडमिति, तत ऊर्ध्वमसंख्येयखण्डानि क्षपयन् सूक्ष्मसंपरायो यावच्चरमलोभाणुक्षयः, तत ऊर्ध्वं यथाख्यातचा-रित्री, स च महाप्रतरणपरिश्रान्तवन्मोहसागरं तीर्त्वा विश्राम्यति, ततश्छद्मस्थवीतरागत्वद्विचरमसमये 'दो निद्द त्ति' द्वे निद्रे निद्राप्रचलालक्षणे क्षपयति, ततश्चरमसमये 'विग्घवरणक्खए त्ति' विघ्नानि दानलाभभोगोपभोगवीर्यान्तरायलक्षणानि, 'वरण त्ति'प्राकृतत्वादाकारलोपे आवरणानि मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यायज्ञानावरणकेवलज्ञानाव-रणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणकेवलदर्शनावरणलक्षणानि नव । ततो विघ्नानि चावरणानि च विघ्ना-वरणानि तेषां क्षये निर्मूलोच्छेदेन ज्ञानी केवलज्ञानी भवति । यदाहुः श्रीमदाराध्यपादाः—"चरमे नाणावरणं पंचविहं दंसणं चउवियप्पं । पंचविहमंतरायं खवइत्ता केवली होइ ॥ १ ॥" इदमुक्तं भवति—अविरतादीनामन्यतरः प्रथमसंह-ननः सुविशुद्धपरिणामः क्षपकश्रेणिमारूढो गुणस्थानक्रमेणानन्तानुबन्धादीनुक्तप्रकारेण क्षपयन् यावत्क्षीणमोहचरमसमये-विघ्नपंचकज्ञानावरणपंचकदर्शनावरणचतुष्कं क्षपयित्वा सर्वसंख्यया तु ज्ञानावरणपंचकदर्शनावरणनवकमोहनीयाष्टाविंश तिआयुस्त्रिकनामप्रकृतित्रयोदशकान्तरायपंचकलक्षणास्त्रिषष्टिप्रकृतीः क्षपयित्वा केवलज्ञानी भवति । स च भगवान्

१ चरमे ज्ञानावरणं पंचविधं दर्शनं चतुर्विकल्पं । पंचविधमंतरायं क्षपयित्वा केवली भवति ।

नवस्थकेवली लोकमलोक सर्वं सर्वात्मनाऽविकलविमलकेवलेन पश्यति । न हि तदस्ति भूत भवद्भविष्यद्वा यज्जगवान्न पश्यति । यदाहु श्रीमदाराध्यपादा –"[1]सभिन्न पासंतो लोगमलोग च सबओ सब । त नत्थि जं न पासइ भूय भव भविस्स च ॥ १ ॥ " इत्थम्भूतश्च स सयोगिकेवली जघन्यतोऽन्तर्मुहूर्तमुत्कर्षतो देशोना पूर्वकोटीं विहृत्यायोगिकेवलि-गुणस्थानकमारुह्य तद्द्विचरमसमये द्वासप्ततिप्रकृतीस्तच्चरमसमये त्रयोदशप्रकृतीश्च क्षपयित्वा शिवमचलमरुजमक्षयमव्या-बाधममन्दानन्दरत्नसारमासादयतीति । उक्ता क्षपकश्रेणिस्तद्भणने च व्याख्याता "नमिय जिण धुवबधोदयसता"इत्या-दिद्वारगाथा । सम्प्रति शतगाथाप्रमाणत्वेन यथार्थनामक शतकशास्त्र समर्थयन्नाह—'देविदसूरिलिहियं सयगमिण आय-सरणट्ठ त्ति' देवेन्द्रसूरिणा करालकलिकालपातालतलावमग्नविशुद्धधर्मधुरोद्धरणधुरीणश्रीमज्जगच्चन्द्रसूरिचरणसरसीरुह-चञ्चरीककल्पेन लिखितमक्षरविन्यासीकृत कर्मप्रकृतिपञ्चसग्रहबृहच्छतकादिशास्त्रेभ्य इति शेष । किमित्याह–शतक शत-गाथाप्रमाणमिदमधुनैव व्याख्यातस्वरूप । किमर्थमित्याह–आत्मस्मरणार्थमात्मस्मृतिनिमित्तमिति ॥ १०० ॥

विष्णोरिव यस्य विभो पदत्रयी व्यानशे जगन्निखिलम् । शतमखशतकप्रणत स श्रीवीरो जिनो जयतु ॥ १ ॥
कुदोज्ज्वलकीर्तिभर सुरनीकृतसकलविष्टपाभोग । लब्धिशतसिन्धुजलधि श्रीगौतमगणधर पातु ॥ २ ॥
तदनु सुधर्मस्वामी जबूप्रभवादयो मुनिवरिष्ठा. । श्रुतजलनिधिपारीणा भूयास श्रेयसे सन्तु ॥ ३ ॥
क्रमात्प्राप्ततपाचार्येत्यभिख्या भिक्षुनायका । समभूवन् कुले चान्द्रे श्रीजगच्चन्द्रसूरय ॥ ४ ॥

१ सपूर्णं पश्यन् लोकमलोक च सर्वत सर्वम् । तन्नास्ति यन्न पश्यति भूत भवद्भविष्यद्वा ।

जगज्जनितबोधानां तेषां शुद्धचरित्रिणाम् । विनेयाः समजायन्त श्रीमद्देवेन्द्रसूरयः ॥ ५ ॥
स्वान्ययोरुपकाराय श्रीमद्देवेन्द्रसूरिणा । स्वोपज्ञशतकटीका सुबोधेयं विनिर्ममे ॥ ६ ॥
विबुधवरधर्मकीर्तिश्रीविद्यानन्दसूरिमुख्यबुधैः । स्वपरसमयैककुशलैस्तदैव संशोधिता चेयम् ॥ ७ ॥
यज्ञदितमल्पमतिना सिद्धान्तविरुद्धमिह किमपि शास्त्रे । विद्वद्भिस्तत्त्वज्ञैः प्रसादमाधाय तच्छोध्यम् ॥ ८ ॥
स्वोपज्ञशतकटीकां कृत्वेमां यन्मयार्जितं सुकृतम् । ध्रुवबन्धादिविमुक्तः समस्तु सर्वोऽपि तेन जनः ॥ ९ ॥

॥ इति श्रीमद्देवेन्द्रसूरिविरचिता स्वोपज्ञशतकटीका ॥

# श्रीकर्मग्रंथः पंचमः सटीकः समाप्तः

# अथ षष्ठः कर्मग्रंथ –सटीकः.

ॐ सर्वविदे नमः ।

अशेषकर्मांशतमःसमूहक्षयाय जास्वानिव दीप्ततेजाः ।
प्रकाशिताशेषजगत्स्वरूपः प्रभु स जीयाज्जिनवर्धमानः ॥ १ ॥
जीयाज्जिनेशसिद्धान्तो मुक्तिकामप्रदीपनः । कुश्रुत्यातपतप्ताना सान्द्रो मलयमारुतः ॥ २ ॥
चूर्णयो नावगम्यन्ते सप्ततेर्मन्दबुद्धिभिः । ततः स्पष्टावबोधार्थं तस्याष्टीकां करोम्यहम् ॥ ३ ॥
अहर्निश चूर्णिविचारयोगान्मन्दोऽपि शक्तो विवृतिं विधातुम् ।
निरन्तरं कुजनिक ( घ ) र्षयोगाद्ग्रावापि कूपे समुपैति घर्षाम् ॥ ४ ॥

इह यच्छास्त्र प्रकरण वा सर्वविन्मूल तत्प्रेक्षावतामुपादेय जवति, नान्यत् । तत सप्ततिकाख्य प्रकरणमारभमाण आचार्य प्रेक्षावता प्रकरणविषये उपादेयबुद्धिपरिग्रहार्थं प्रकरणस्य सर्वविन्मूलता, तथा सर्वविन्मूलत्वे (ऽपि) न प्रेक्षापू-

ननु बन्धोदयसत्प्रकृतिस्थानानां संक्षेपोऽभिधातव्यः किं प्रत्येकमाहोस्वित्संवेधरूपः ? उच्यते, संवेधरूपः, तथा चामुमेव संवेधरूपं संक्षेपं विवक्षुः शिष्यान् प्रश्नं कारयति—

**कइ बंधंतो वेयइ कइ कइ वा पयडिसंतठाणाणि । मूलुत्तरपगईणं भंगविगप्पा उ बोधव्वा ॥ २ ॥**

टीका—कतिशब्दः परिमाणपृच्छायां । कति कर्मप्रकृतीर्वेदयते, कति वा तथाबध्नतो वेदयमानस्य च प्रकृतिसत्कर्मस्थानानि प्रकृतिसत्तास्थानानि ? । एवं शिष्यैः प्रश्ने कृते सत्याचार्योऽस्मिन् विषये भंगजालमनेकप्रकारं वचोमात्रेण यथावत्प्रतिपादयितुमशक्यं जानानः सामान्येन प्रत्युत्तरमाह—मूलेत्यादि । मूलप्रकृतिषु ज्ञानावरणदर्शनावरणादिरूपासु, उत्तरप्रकृतिषु च मतिज्ञानावरणश्रुतज्ञानावरणादिरूपासु, उभयीषु च वक्ष्यमाणस्वरूपासु प्रत्येकं बन्धोदयसत्तासंबन्धमधिकृत्य चिन्त्यमानासु बहवो भंगाः संभवन्ति । ते चास्मिन् प्रकरणे यथावत् वैविक्त्येन प्रतिपाद्यमानाः सम्यग्बोद्धव्याः । तत्र मूलप्रकृतयोऽष्टौ । तद्यथा—ज्ञानावरणं, दर्शनावरणं, वेदनीयं, मोहनीयं, आयुः, नाम, गोत्रं, अन्तरायं च । तत्र ज्ञायते परिच्छिद्यते वस्तु अनेनेति ज्ञानं सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोधः, आव्रियतेऽनेनेत्यावरणं मिथ्यात्वादिसचिवजीवव्यापाराहृतकर्मवर्गणान्तःपाती विशिष्टपुद्गलसमूहः, ज्ञानस्यावरणं ज्ञानावरणं १ । तथा दृश्यतेऽनेनेति दर्शनं, सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधः, तस्यावरणं दर्शनावरणम् २ । तथा वेद्यते आह्लादादिरूपेणानुभूयते यत्तद्वेदनीयं, यद्यपि च सर्वं कर्म वेद्यते तथापि पङ्कजादिशब्दवद्वेदनीयशब्दस्य रूढिविषयत्वात् सातासातरूपमेव कर्म वेदनीयमित्युच्यते न शेषम् ३ । तथा मोहयति सदसद्विवेकविकलं करोत्यात्मानमिति मोहनीयं, कृत

"बहुलमिति"(५-१-२) वचनात्कर्तर्यनीय ४। तथा एति गच्छत्यनेन गत्यन्तरमित्यायु, यद्वा एति आगच्छति प्रतिबन्धकता स्वकृतकर्मावासनरकादिदुर्गतिनि (र्गनि) ष्क्रमितुमनसो जन्तोरित्यायु, उभयत्रापि उणादिको णुस् (इतो णित् ७७०) प्रत्ययः ५। तथा नामयति गत्यादिपर्यायानुभव प्रति प्रवणयति जीवमिति नाम ६। तथा गूयते शब्द्यते उच्चा-वचैः शब्दैरात्मा यस्मात्तत् गोत्रम् ७। तथा जीव दानादिक चान्तरा एति, न जीवस्य दानादिक कर्तुं ददातीत्यन्तरा-यम् ८। एता मूलप्रकृतय। एतासु प्रथमतो बन्धोदयसत्ता अधिकृत्य प्रकृतिस्थानप्ररूपणा क्रियते। प्रकृतिस्थानेषु हि प्रथम प्ररूपितेषु सत्सु तदाश्रित सवेध प्ररूप्यमाण सुखेनैवावगन्तु शक्यते। तत्र मूलप्रकृतीनामुक्तस्वरूपाणा बन्ध प्रतीत्य चत्वारि प्रकृतिस्थानानि तद्यथा—अष्टौ सप्त षट् एका च। तत्र सर्वप्रकृतिसमुदायोऽष्टौ, एतासा च बन्धोऽ-जघन्योत्कर्षेणान्तर्मुहूर्तप्रमाणः, आयुषि हि बध्यमानेऽष्टाना प्रकृतीना बन्ध प्राप्यते, आयुषश्च बन्धोऽन्तर्मुहूर्तमेव काल भवति न ततोऽप्यधिकम्। तथा ता एवाष्टावायुर्वर्जा सप्त, एतासा च बन्धो जघन्येनान्तर्मुहूर्त यावत् उत्कर्षेण त्रय-स्त्रिंशत्सागरोपमाणि षण्मासोनानि अन्तर्मुहूर्तोनपूर्वकोटित्रिभागाभ्यधिकानि। तथा ता एवाष्टावायुर्मोहनीयवर्जा षट्, एतासा च बन्धो जघन्येनैक समय, तथाहि—एतासामुक्तस्वरूपाणा षणा प्रकृतीना बन्ध' सूक्ष्मसपराये, स च उपशम-श्रेण्या कश्चिदेक समय भूत्वा द्वितीये समये भवक्षयेण दिव गत सन्नविरतो भवति, अविरतत्वे चावश्य सप्तप्रकृतीना बन्ध इति षणा बन्धो जघन्येनैकं समय यावत्, उत्कर्षेण त्वन्तर्मुहूर्त सूक्ष्मसपरायगुणस्थानकस्यान्तर्मुहूर्तप्रमाणत्वात्। तथा सप्ताना प्रकृतीना बन्धव्यवच्छेदे एकस्या वेदनीयरूपाया प्रकृतेर्बन्ध, स च जघन्येनैक समय, एकसमयता चोपश-

न्तमोहगुणस्थानकं यावत्, मोहनीये क्षीणे सप्तानां, सा च क्षीणमोहगुणस्थानके वेदनीयायुर्नामगोत्राणां सत्तायां अष्टानां सप्तानां चतसृणां वा सत्ता, तत्राष्टानां सप्तानां च भावना प्रागिव, चतसृणां सत्ता वेदनीयादीनामेव च, सा च सयोगिकेवलिगुणस्थानके अयोगिकेवलिगुणस्थानके च द्रष्टव्या ॥ २ ॥

संप्रति बन्धोदयसत्ताप्रकृतिस्थानानां परस्परं संवेधप्ररूपणार्थमाह—

**अट्ठविहसत्तछब्बंधगेसु अट्ठेव उदयसंताइं। एगविहे तिविगप्पो एगविगप्पो अबंधम्मि ॥ ३ ॥**

टीका–अष्टविधबन्धकसप्तविधबन्धकषड्विधबन्धकेषु प्रत्येकमुदये सत्तायां चाष्टौ कर्माणि प्राप्यन्ते। कथमिति चेदुच्यते, इहाष्टविधबन्धका अप्रमत्तान्ताः, सप्तविधबन्धका अनिवृत्तिबादरसंपरायपर्यवसानाः, षड्विधबन्धकाश्च सूक्ष्मसंपरायान्ताः। एते च सर्वेऽपि सरागाः। सरागत्वं च मोहनीयोदयाद्उपजायते, उदये च सत्यवश्यं सत्ता। ततो मोहनीयोदये सत्तासंभवात्। अष्टविधसप्तविधषड्विधबन्धकेष्ववश्यमुदये सत्तायां चाष्टौ प्राप्यन्ते। एतेन च त्रयो भंगा दर्शिताः। तद्यथा–अष्टविधो बन्धः, अष्टविध उदयः, अष्टविधा सत्ता। एष विकल्प आयुर्बन्धकाले। एष च मिथ्यादृष्ट्यादीनामप्रमत्तान्तानामवसेयो न शेषाणां, आयुर्बन्धासंभवात्। तथा सप्तविधो बन्धोऽष्टविध उदयोऽष्टविधा सत्ता, एष विकल्प आयुर्बन्धाभावे। एष च मिथ्यादृष्ट्यादीनामनिवृत्तिबादरसंपरायान्तानामवसेयः। तथा षड्विधो बन्धोऽष्टविध उदयोऽष्टविधा सत्ता, एष विकल्पः सूक्ष्मसंपरायाणाम्। 'एगविहे तिविगप्पो त्ति' एकविधे एकप्रकारे बन्धे एकस्मिन् केवले वेदनीये बध्यमाने इत्यर्थः। त्रिविकल्पमिति समाहारद्विगुत्वेऽप्यार्षत्वात्पुंस्त्वनिर्देशः त्रयो विकल्पा भवन्तीत्यर्थः।

तद्यथा–एकविधो बन्ध' सप्तविध उदयोऽष्टविधा सत्ता, एष विकल्प उपशान्तमोहगुणस्थानके प्राप्यते, तत्र हि मोह-नीयस्योदयो न विद्यते, सत्ता पुनरस्ति। तथा एकविधो बन्ध सप्तविध उदय' सप्तविधा सत्ता, एष विकल्प क्षीण-मोहगुणस्थानके प्राप्यते, तत्र हि मोहनीयस्य नि शेषतोऽपगमात्। तथा एकविधो बन्धश्चतुर्विध उदयश्चतुर्विधा सत्ता, एष पुनर्विकल्प' सयोगिकेवलिगुणस्थानके, तत्र घातिकर्मणामनवयवशोऽपगमात् चतसृणा चाघातिप्रकृतीनामुदये सत्ताया च प्राप्यमाणत्वात्। 'एगविगप्पो अवधमि त्ति' अबन्धे बन्धाभावे एक एव विकल्पस्तद्यथा–चतुर्विध उदय-श्चतुर्विधा सत्ता, एष चायोगिकेवलिगुणस्थानके प्राप्यते, तत्र हि योगाभावाद्बन्धो न भवति, उदयसत्ते चाघातिक र्मणा भवत ॥ ३ ॥

तदेव मूलप्रकृतीरधिकृत्य बन्धोदयसत्प्रकृतिस्थानाना परस्पर सवेधे सप्त विकल्पा उक्ता, सप्रति एतानेव जीव-स्थानेषु चिन्तयन्नाह—

**सत्तठबधअठुदयसंततेरससु जीवठाणेसु। एगम्मि पचभंगा दो भंगा हुंति केवलिणो ॥ ४ ॥**

टीका–इह जीवस्थानानि चतुर्दश, तद्यथा–अपर्याप्तसूक्ष्म एकेन्द्रिय १। पर्याप्तसूक्ष्म एकेन्द्रिय. २। अपर्याप्तबादरै-केन्द्रिय' ३। पर्याप्तबादरैकेन्द्रिय ४। अपर्याप्तद्वीन्द्रिय ५। पर्याप्तद्वीन्द्रिय ६। अपर्याप्तत्रीन्द्रियः ७। पर्याप्तत्री-न्द्रिय ८। अपर्याप्तचतुरिन्द्रिय ९। पर्याप्तचतुरिन्द्रिय १०। अपर्याप्तासंज्ञिपञ्चेन्द्रिय' ११। पर्याप्तासज्ञिपञ्चेन्द्रिय १२। अपर्याप्तसज्ञिपञ्चेन्द्रिय १३। पर्याप्तसज्ञिपञ्चेन्द्रिय १४। इति। एतानि च सप्रपञ्च षडशीतिवृत्तौ व्याख्याता-

नीति नेह भूयो व्याख्यायन्ते । तत्र त्रयोदशसु आद्येषु जीवस्थानेषु प्रत्येकं द्वौ द्वौ विकल्पौ भवतः, तद्यथा—सप्तविधो बन्धः अष्टविध उदयः अष्टविधा सत्ता, एष विकल्प आयुर्बन्धकालं मुक्त्वा शेषकालं सर्वदैव लभ्यते । अष्टविधो बन्धः अष्टविधः उदयः अष्टविधा सत्ता, एष विकल्प आयुर्बन्धकाले, एष चान्तर्मौहूर्तिकः, आयुर्बन्धकालस्याजघन्येनोत्कर्षेणान्तर्मुहूर्तप्रमाणत्वात् । 'एगम्मि पंच भंग त्ति' एकस्मिन् पर्याप्तसंज्ञिपञ्चेन्द्रियलक्षणे पंच भंगा भवन्ति । तत्रादिमौ द्वौ भंगौ प्रागिव भावनीयौ । त्रयस्तु शेषा इमे—षड्विधबन्धः अष्टविध उदयः अष्टविधा सत्ता, एष विकल्पः सूक्ष्मसंपरायस्य उपशमश्रेण्यां क्षपकश्रेण्यां वा वर्तमानस्य वेदितव्यः । तथा एकविधो बन्धः सप्तविध उदयः अष्टविधा सत्ता, एष विकल्प उपशान्तमोहगुणस्थानके प्राप्यते । तथा एकविधो बन्धः सप्तविध उदयः सप्तविधा सत्ता, एष च क्षीणमोहगुणस्थानके । तथा द्वौ भंगौ भवतः केवलिनः, तद्यथा—एकविधो बन्धश्चतुर्विध उदयश्चतुर्विधा सत्ता, एष विकल्पः सयोगिकेवलिनः । बन्धाभावे चतुर्विध उदयश्चतुर्विधा सत्ता, एष विकल्पोऽयोगिकेवलिनः । इह केवलिग्रहणं संज्ञिव्यवच्छेदार्थं, द्वौ भंगौ भवतः केवलिनो न तु संज्ञिन इत्यर्थः । अत एव च केवलिग्रहणादिदमवसीयते केवली मनोविज्ञानरहितत्वात् संज्ञी न भवतीति ॥ ४ ॥

संप्रति तानेव सप्त विकल्पान् गुणस्थानकेषु चिन्तयन्नाह—

**अट्ठसु एगविगप्पो छसु वि गुणसंनिएसु दुविगप्पो । पत्तेयं पत्तेयं बंधोदयसंतकम्माणं ॥ ५ ॥**

टीका—इह गुणस्थानकानि चतुर्दश, तानि च षडशीतिकवृत्तौ सविस्तरमभिहितानीति नेह भूयोऽभिधीयन्ते । तत्रा-

ष्टसु गुणस्थानकेषु सम्यग्मिथ्यादृष्ट्यपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहसयोगिकेवल्ययोगिकेवलिल-क्षणेषु प्रत्येक बन्धोदयसत्कर्मणामेको विकल्पो भवति, तद्यथा–सम्यग्मिथ्यादृष्ट्यपूर्वकरणानिवृत्तिबादरेषु सप्तविधो बन्ध अष्टविध उदय अष्टविधा सत्ता । अथैतेषु अष्टविधोऽपि बन्ध कस्मान्न भवति ? उच्यते–स्वभावत एवैषामायुर्बन्ध-योग्याध्यवसायस्थानशून्यत्वात् । सूक्ष्मसंपराये षड्विधो बन्ध अष्टविध उदय अष्टविधा सत्ता, सूक्ष्मसंपरायो हि बादर-कषायोदयाभावादायुर्मोहनीय च न बध्नाति, ततस्तस्य षड्विध एव बन्धो भवति । उपशान्तकषायस्य एकविधो बन्धः सप्तविध उदय अष्टविधा सत्ता, यत उपशान्तमोह कषायोदयाभावाज्ज्ञानावरणीयादि न बध्नाति, किं तु वेदनीयमेक केवल ततस्तत्रैकविध एव बन्धो भवति, मोहनीयस्य चोपशान्तत्वेनोदयाभावादुदय सप्तविध । क्षीणमोहस्य एकविधो बन्ध सप्तविध उदय सप्तविधा सत्ता, अत्र मोहनीय क्षीणत्वादुदये सत्तायां च न प्राप्यते, ततः सप्तविध उदय सप्त-विधा सत्ता । सयोगिकेवलिनि एकविधो बन्धश्चतुर्विध उदयश्चतुर्विधा सत्ता, केवली हि चतसृणामपि घातिप्रकृतीनां क्षयेण भवति, ततस्तस्य चतुर्विध एवोदयश्चतुर्विधैव च सत्ता । अयोगिकेवलिनो बन्धो न भवति योगाभावात्, ततश्च-तुर्विध उदयश्चतुर्विधा सत्ता । तथा षट्सु गुणस्थानकेषु मिथ्यादृष्टिसास्वादनाविरतिसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तरूपेषु प्रत्येकं बन्धोदयसत्कर्मणा द्वौ द्वौ विकल्पौ भवत, तद्यथा–अष्टविधो बन्ध अष्टविध उदय अष्टविधा सत्ता, एष विकल्प आयुर्बन्धकाले एतेषा ह्यायुर्बन्धयोग्याध्यवसायस्थानसंभवादायुर्बन्ध उपपद्यते । तथा सप्तविधो बन्ध अष्टविध उदय अष्टविधा सत्ता, एष विकल्प आयुर्बन्धकाल मुक्त्वा शेषकाल सर्वदा लभ्यते ॥५॥ तदेव मूलप्रकृतीरधिकृत्य बन्धोदयसत्प्रकृ-

तिस्थानानां परस्परं संवेध उक्तः स्वामित्वं च, संप्रति उत्तरप्रकृतीरधिकृत्य बन्धोदयसत्प्रकृतिस्थानानां परस्परं संवेधः प्रोच्यते ।

**पंच नव दुन्नि अठ्ठावीसा चउरो तहेव बायाला । पंच य दुन्नि य भणिया पयडीओ आणुपुव्वीए ॥६॥**

टीका–उत्तरप्रकृतयश्चेमाः, तद्यथा–मतिज्ञानावरणं, श्रुतज्ञानावरणं, अवधिज्ञानावरणं, मनःपर्यवज्ञानावरणं, केवलज्ञानावरणं, एताश्च पञ्चापि ज्ञानावरणस्योत्तरप्रकृतयः । तत्र "मन ज्ञाने" मननं मतिः यद्वा मन्यते इन्द्रियमनोद्वारेण नियतं वस्तु परिछिद्यतेऽनयेति मतिः योग्यदेशावस्थितवस्तुविषय इन्द्रियमनोनिमित्तोऽवगमविशेषः, मतिश्च सा ज्ञानं च मतिज्ञानं तस्यावरणं मतिज्ञानावरणम् १ । श्रवणं श्रुतं अभिलापप्लावितार्थग्रहणहेतुरुपलब्धिविशेषः, एवमाकारं वस्तु घटशब्दाभिलाप्यं जलधारणाद्यर्थक्रियासमर्थमित्यादिरूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणामः शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थः, श्रुतं च तज्ज्ञानं च श्रुतज्ञानं तस्यावरणम् २ । तथा अवशब्दोऽधःशब्दार्थः, अव अधोऽधो विस्तृतं वस्तु धीयते परिछिद्यतेऽनेनेति अवधिः, यद्वा अवधिर्मर्यादा रूपिष्वेव द्रव्येषु परिछेदकतया प्रवृत्तिरूपा, तदुपलक्षितं ज्ञानमपि अवधिः, अवधिश्च तज्ज्ञानं च अवधिज्ञानं तस्यावरणं अवधिज्ञानावरणम् ३ । तथा परिः सर्वतोभावे, अवनं अवः, तुदादिभ्योऽनक्तादित्यधिकारे अकितौ ( तुदादिविपगुहिभ्यः कित् ) चेत्यनेनौणादिकोऽकारप्रत्ययः, अवनं गमनं वेदनमिति पर्यायाः, परि अवः पर्यवः, मनसि मनसो वा पर्यवः, सर्वतस्तत्परिछेद इत्यर्थः, मनःपर्यवश्च स ज्ञानं च मनःपर्यवज्ञानं, इदं चार्धतृतीयद्वीपसमुद्रान्तर्वर्तिसंज्ञिमनोगतद्रव्यालंबनमवसेयं । मनःपर्यायज्ञानमित्येवमप्येतदुच्यते, तत्र मनसः पर्याया बाह्यवस्त्वालोचनप्रकारा धर्मा मनःपर्यायाः, तेषु तेषां

वा सन्निध ज्ञान मनःपर्यायज्ञान, तस्यावरण मनःपर्यायज्ञानावरण मनःपर्यवज्ञानावरण वा । ४ । तथा केवल एक मत्यादिज्ञाननिरपेक्षत्वात् "नट्ठम्मि य छाउमत्थिए नाणे" इति वचनात्, शुद्ध वा केवल तदावरणमलकलङ्कापगमात्, सकल वा केवल प्रथमत एवाशेषतदावरणनिगमत संपूर्णोत्पत्ते, असाधारण वा केवल अनन्यसदृशत्वात्, अनन्त वा केवल ज्ञेयानन्तत्वात्, केवल च तज्ज्ञान च केवलज्ञान, तस्यावरण केवलज्ञानावरणम् । ५ । दर्शनावरणस्य नवोत्तरप्रकृतय, तद्यथा–निद्रा, निद्रानिद्रा, प्रचला, प्रचलाप्रचला, स्त्यानर्द्धि, चक्षुर्दर्शनावरण, अचक्षुर्दर्शनावरणं, अवधिदर्शनावरण, केवलदर्शनावरण च । तत्र 'द्रा' कुत्साया गतौ, नितरा द्राति कुत्सितत्व अविस्पष्टत्व गच्छति चैतन्य यस्या सा निद्रा (भिदादय ५-३-१०८) "भिदादित्वादङ्" यस्या नखच्छोटिकामात्रेण स्वप्नु प्रबोध उपजायते सा स्वापावस्था निद्रा, तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रा, कारणे कार्योपचारात् १ । तथा निद्रातोऽतिशायिनी निद्रा निद्रानिद्रा, मयूरव्यसकादित्वात् (मयूरव्यसकेत्यादय ३-१-११६) मध्यमपदलोपी समास, तस्या हि चैतन्यस्यात्यन्तमस्फुटीभूतत्वात् बहुभिर्घोलनाप्रकारै प्रबोध उपजायते, अत सुखप्रबोधहेतुनिद्रातोऽस्या अतिशायिनीत्वं, तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रानिद्रा २ । तथा उपविष्ट ऊर्ध्वस्थितो वा प्रचलति विघूर्णते यस्या स्वापावस्थाया सा प्रचला, तद्विपाकवेद्या कर्मप्रकृतिरपि प्रचला ३ । तथा प्रचलातोऽतिशायिनी प्रचला प्रचलाप्रचला, अत्रापि मध्यमपदलोपी समास, एषा हि चङ्क्रमणमपि कुर्वत उपतिष्ठते, तत स्थानस्थितस्वप्तृभवप्रचलापेक्षया अस्या अतिशायिनीत्वं, तद्विपाकवेद्या कर्मप्रकृतिरपि प्रचलाप्रचला ४ । तथा स्त्याना पिण्डीभूता ऋद्धिरात्मशक्तिरूपा यस्या स्वापावस्थाया सा स्त्यानर्द्धि, तद्भावे हि उत्क-

र्षतः प्रथमसंहननस्य केशवार्धबलसदृशी शक्तिर्भवति, श्रूयते चैतत् कथानकमागमे—क्वचित्प्रदेशे कोऽपि क्षुल्लको विपाकप्राप्तस्त्यानर्द्धिनिद्रासहितो द्विरदेन दिवा खलीकृतः, ततः स तस्मिन् बद्धाभिनिवेशो रजन्यां स्त्यानर्ध्युदये वर्तमानः समुत्थाय तद्दन्तयुगलमुत्पाट्य स्वोपाश्रयद्वारि च प्रक्षिप्य पुनः सुप्तवान् इत्यादि । तद्विपाकवेद्या कर्मप्रकृतिरपि स्त्यानर्द्धिः ५ । तथा चक्षुषा दर्शनं चक्षुर्दर्शनं तस्यावरणं चक्षुर्दर्शनावरणम् ६ । अचक्षुषा चक्षुर्वर्जशेषेन्द्रियमनोभिर्दर्शनमचक्षुर्दर्शनं तस्यावरणमचक्षुर्दर्शनावरणम् ७ । अवधिरेव दर्शनं रूपिद्रव्यसामान्यग्रहणं अवधिदर्शनं तस्यावरणमवधिदर्शनावरणम् ८ । केवलमेव सकलजगद्भाविवस्तुस्तोमसामान्यग्रहणरूपं दर्शनं केवलदर्शनं तस्यावरणं केवलदर्शनावरणम् ९ । अत्र निद्रापञ्चकं प्राप्ताया दर्शनलब्धेरुपघातकृत्, चक्षुर्दर्शनावरणादिचतुष्टयं तु मूलत एव दर्शनलब्धिमुपहन्ति । आह च गन्धहस्ती—"निद्रादयः समधिगताया एव दर्शनलब्धेरुपघाते वर्तन्ते, दर्शनावरणचतुष्टयं तु उद्गमोच्छेदित्वात्समूलघातं हन्ति दर्शनलब्धिमिति" । वेदनीयस्य द्वे उत्तरप्रकृती, तद्यथा—सातवेदनीयमसातवेदनीयं च । तत्र सातं सुखं तद्रूपेण यद्वेद्यते तत्सातवेदनीयं, असातं दुःखं तद्रूपेण यद्वेद्यते तत् असातवेदनीयम् । मोहवेदनीयस्योत्तरप्रकृतयोऽष्टाविंशतिः । मोहनीयं द्विविधं, तद्यथा—दर्शनमोहनीयं चारित्रमोहनीयं च । दर्शनमोहनीयमपि त्रिधा, तद्यथा—मिथ्यात्वं, सम्यग्मिथ्यात्वं, सम्यक्त्वं च । तत्र यदुदयाज्जिनप्रणीततत्त्वाश्रद्धानं तन्मिथ्यात्वं । यदुदयात् पुनर्जिनप्रणीतं तत्त्वं न सम्यक् श्रद्धत्ते नापि निन्दति, मतिदौर्बल्यादिना सम्यगसम्यग्वा एकान्तेन निश्चयाकरणतः सम्यक्श्रद्धानैकान्तविप्रतिपत्त्ययोगात् तत्सम्यग्मिथ्यात्वम् । उक्तं च शतकबृहच्चूर्णौ—" जहा नारिकेरदीववासिस्स अइ-

खुहाइयस्स वि पुरिसस्स एत्थ उंयणाइए अणेगविहे ढोइए, तस्स आहारस्स उवरि न रुई न य निंदा, जेण कारणेण सो उंयणाइओ आहारो न कयाइ दिट्ठो न वा सुओ, एवं सम्मामिच्छद्दिट्ठिस्स वि जीवादिपयत्थाण उवरि न रुई न य निंदा." इत्यादि। यदुदयात् पुनः सम्यक् जिनप्रणीतं तत्त्वं श्रद्धत्ते, तत्सम्यक्त्वं। चारित्रमोहनीयं पुनः द्विधा, तद्यथा–कषाया नोकषायाश्च। तत्र कष्यन्ते हिंस्यन्ते परस्परमस्मिन् प्राणिन इति कषः संसारः, तमयन्ते गच्छन्त्येभिर्जन्तव इति कषायाः क्रोधमानमायालोभाः, ते च प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदाच्चतुर्विधाः। तत्रानन्तं संसारमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनः (उक्तं च "अनन्तमनुबध्नन्ति भवं तदनुवर्त्तिनाम्। अनन्तानुबन्धिसंज्ञा प्रथमेषु निवेशिता")। तथा न विद्यते स्वल्पमपि प्रत्याख्यानं येषामुदयात् तेऽप्रत्याख्यानाः, उक्तं च–"नाल्पमप्युत्सहेद्येषां प्रत्याख्यानमिहोदयात्। अप्रत्याख्यानसंज्ञाऽतो द्वितीयेषु निवेशिता॥ १॥" तथा प्रत्याख्यानं सर्वविरतिरूपं आवृण्वन्तीति प्रत्याख्यानावरणाः, "कृद्बहुलं" (५-१-२) इति वचनात्कर्त्तर्यनट्, सर्वविरतिविघातिनो देशविरतिनिबन्धना इत्यर्थः। उक्तं च–"सर्वसावद्यविरतिः प्रत्याख्यानमिहोच्यते। तदावरणसंज्ञातस्तृतीयेषु निवेशिता॥ १॥" तथा परीषहोपसर्गोपनिपाते सति चारित्रिणमपि सम् ईषत् ज्वलयतीति संज्वलनः। चत्वारश्चतुर्गुणिताः षोडश भवन्तीति कृत्वा षोडश कषायाः। तथा कषायसहचारिणो नोकषायाः। नोशब्दोऽत्र सहचरवाची। कषायसहचारित्वं च कषायैः सह सदा वर्तनात् कषायोद्दीपनाद्वा। उक्तं च–"कषायैः सहवर्तित्वात् कषायप्रेरणादपि। हास्यादिनवकस्योक्ता नोकषायकषायता॥१॥" ते च नोकषाया नव, तद्यथा–वेदत्रिकं हास्यादिषट्कं च। तत्र वेदत्रिकं स्त्रीवेदः पुरुषवेदो नपुंसकवेदश्च। तत्र यदुदयात् स्त्रिया पुंस्यभिलाषः पित्तोदये मधुराभिलाषवत् स

स्त्रीवेदः, यदुदयाच्च पुंसः स्त्रियामभिलाषः श्लेष्मोदयादम्लाभिलाषवत् स पुरुषवेदः, यदुदयात्पुनः स्त्रीपुंसयोरुपर्यभिलाषः पित्तश्लेष्मोदये मज्जिका(मार्जिका) भिलाषवत् स नपुंसकवेदः। हास्यादिषट्कं हास्यरत्यरतिशोकभयजुगुप्सारूपं। तत्र यदुदयात्सनिमित्तमनिमित्तं वा हसति तत् हास्यमोहनीयं, यदुदयाद्बाह्याभ्यन्तरेषु वस्तुषु प्रमोदमाधत्ते तत् रतिमोहनीयं, यदुदयात्पुनर्बाह्याभ्यन्तरेष्वेव वस्तुष्वप्रीतिर्जायते तदरतिमोहनीयं, तथा यदुदयवशात् प्रियविप्रयोगे स्वोरस्ताडमाक्रन्दति परिदेवते दीर्घं च निःश्वसिति भूपीठे च लुठति तत् शोकमोहनीयं, यदुदयात्सनिमित्तमनिमित्तं वा तथारूपस्वसंकल्पतो बिभेति तत् भयमोहनीयं, यदुदयवशात् पुनर्जन्तोः शुभाशुभवस्तुविषयं व्यलीकमुपजायते तज्जुगुप्सामोहनीयं। आयुषश्चतस्र उत्तरप्रकृतयः, तद्यथा—नरकायुस्तिर्यगायुर्मनुष्यायुर्देवायुश्च। नाम्नो द्विचत्वारिंशदुत्तरप्रकृतयः, तद्यथा—गतिनाम, जातिनाम, शरीरनाम, अंगोपांगनाम, बन्धननाम, संघातननाम, संहनननाम, संस्थाननाम, वर्णनाम, गन्धनाम, रसनाम, स्पर्शनाम, आनुपूर्वीनाम, विहायोगतिनाम, त्रसनाम, स्थावरनाम, बादरनाम, सूक्ष्मनाम, पर्याप्तनाम, अपर्याप्तनाम, प्रत्येकनाम, साधारणनाम, स्थिरनाम, अस्थिरनाम, शुभनाम, अशुभनाम, सुस्वरनाम, दुःस्वरनाम, सुभगनाम, दुर्भगनाम, आदेयनाम, अनादेयनाम, यशःकीर्तिनाम, अयशःकीर्तिनाम, अगुरुलघुनाम, उपघातनाम, पराघातनाम, उच्छ्वासनाम, आतपनाम, उद्योतनाम, निर्माणनाम, तीर्थंकरनाम चेति। तत्र गम्यते तथाविधकर्मसचिवैर्जीवैः प्राप्यत इति गतिः नारकत्वादिपर्यायपरिणतिः, सा चतुर्धा, तद्यथा—नरकगतिः, तिर्यग्गतिः, मनुष्यगतिः, देवगतिश्च तद्विपाकवेद्या कर्मप्रकृतिरपि गतिश्चतुर्धा। तथा एकेन्द्रियादीनामेकेन्द्रियत्वादिरूपसमानपरिणतिलक्षणमेकेन्द्रियादिशब्दव्यपदेशभाक्

यत् सामान्य सा जातिः, तद्विपाकवेद्या कर्मप्रकृतिरपि जातिः । इदमत्र तात्पर्य–द्रव्यरूपमिन्द्रियमङ्गोपाङ्गेन्द्रियपर्याप्ति-नामकर्मसामर्थ्यात् सिद्धं, भावरूप तु स्पर्शनादीन्द्रियावरणक्षयोपशमसामर्थ्यात् "क्षायोपशमिकानीन्द्रियाणि" इति वचनात् । यत्पुनरेकेन्द्रियादिशब्दप्रवृत्तिनिबन्धन तथारूपसमानपरिणतिलक्षण सामान्य तदव्यभिचारसाध्यत्वाज्जाति-नामसाध्य । उक्त च–"अव्यभिचारिणा सादृश्येन एकीकृतोऽर्थात्मा जाति तन्निमित्त जातिनाम" । तच्च पञ्चधा, तद्यथा–एकेन्द्रियजातिनाम, द्वीन्द्रियजातिनाम, त्रीन्द्रियजातिनाम, चतुरिन्द्रियजातिनाम, पञ्चेन्द्रियजातिनाम । तथा शीर्यत इति शरीर, तत्पञ्चधा–औदारिक वैक्रिय आहारकं तैजस कार्मण च । तत्र उदार प्रधान, प्राधान्य चास्य तीर्थ-करगणधरशरीरापेक्षया, ततोऽन्यस्यानुत्तरसुरशरीरस्यापि अनन्तगुणहीनत्वात्, यद्वा उदार सातिरेकयोजनसहस्रमा-नत्वात् शेषशरीरापेक्षया बृहत्प्रमाणं, बृहत्ता चास्य वैक्रिय प्रति भवधारणीयसहजशरीरापेक्षया द्रष्टव्या, अन्यथा उत्तर-वैक्रिय योजनलक्षमानमपि लभ्यते, उदारमेव औदारिक, "विनयादिपाठादिकण्" (विनयादिभ्य ७ २-१६७) तन्निबन्धन नाम औदारिकनाम, यदुदयवशादौदारिकशरीरप्रायोग्यान् पुद्गलानादाय औदारिकशरीररूपतया परिणमयति, परिणमय्य च जीवप्रदेशैः सहान्योऽन्यानुगमरूपतया सबन्धयति तदौदारिकशरीरनामेत्यर्थः । एव शेषशरीरनामस्वपि भावना कार्या । तथा विविधा क्रिया विक्रिया तस्या भव वैक्रिय, तथाहि–तदेक भूत्वाऽनेक भवति अनेक भूत्वा एक, अणु भूत्वा महद्भवति महच्च भूत्वाऽणु, तथा खचरं भूत्वा भूमिचर भवति भूमिचर भूत्वा खचरं, तथा अदृश्य भूत्वा दृश्य भवति दृश्यं भूत्वाऽदृश्यमित्यादि । तच्च द्विधा–औपपातिकं लब्धिप्रत्यय च । तत्रौपपातिकं उपपातजन्मनिमित्तं, तच्च देवनारकाणा ।

लब्धिप्रत्ययं तिर्यङ्मनुष्याणां । वैक्रियनिबन्धनं नाम वैक्रियनाम । तथा चतुर्दशपूर्वविदा तीर्थकरस्फातिदर्शनादिकतथाविधप्रयोजनोत्पत्तौ सत्यां विशिष्टलब्धिवशादाह्रियते निर्वर्त्यते इत्याहारकं, "कृद्बहुलं" इति वचनात्कर्मणि वुञ् (णकः) (५-१-४७ णकतृचौ) यथा पादहारक इत्यादौ, तच्च वैक्रियापेक्षयाऽत्यन्तशुभं स्वच्छस्फटिकशिलेव शुभ्रपुद्गलसमूहघटनात्मकं वस्तुप्रतिबिंबाधारभूतं, तन्निबन्धनं नाम आहारकनाम । तथा तैजसा तेजःपुद्गलैर्निर्वृत्तं तैजसं, यद्भुक्ताहारपरिणमनहेतुर्यद्वशाच्च विशिष्टतपोमाहात्म्यसमुत्थलब्धिविशेषस्य पुंसस्तेजोलेश्याविनिर्गमः, तन्निबन्धनं नाम तैजसनाम । तथा कर्मणो विकारः कार्मणं कर्मपरमाणव एवात्मप्रदेशैः सह क्षीरनीरवदन्योऽन्यानुगताः सन्तः कार्मणं शरीरं । तदुक्तं-"कम्मविवागो कम्मणमट्ठविहविचित्तकम्मनिप्फन्नं । सव्वेसिं सरीराणं कारणभूयं मुणेयव्वं ॥ १ ॥" अत्र सव्वेसिमिति सर्वेषामौदारिकादीनां शरीराणां कारणभूतं बीजभूतं कार्मणशरीरं । न खल्वामूलमुच्छिन्ने भवप्रपञ्चप्ररोहबीजभूते कार्मणे वपुषि शेषशरीरप्रादुर्भावसंभवः । इदं च कार्मणशरीरं जन्तोर्गत्यन्तरसंक्रान्तौ साधकतमं करणं, तथा हि-कार्मणेनैव वपुषा परिकरितो जन्तुर्मरणदेशमपहायोत्पत्तिदेशमभिसर्पति । ननु यदि कार्मणवपुःपरिकरितो गत्यन्तरं संक्रामति तर्हि स गच्छन्नागच्छन् वा कस्मान्नोपलक्ष्यते ? उच्यते-कर्मपुद्गलानामतिसूक्ष्मतया चक्षुरादीन्द्रियागोचरत्वात् । आह च प्रज्ञाकरगुप्तोऽपि-"अन्तरा भवदेहोऽपि सूक्ष्मत्वान्नोपलक्ष्यते । निष्क्रामन् प्रविशन् वापि नाभावोऽनीक्षणादपि ॥ १ ॥" तन्निबन्धनं नाम कार्मणनाम । यदुदयात् कर्मप्रायोग्यान् पुद्गलानादाय कर्मरूपतया च परिणमय्य जीवप्रदेशैः सहान्योऽन्यानुगमरूपतया संबन्धयति । तथा अङ्गान्यष्टौ शिरःप्रभृतीनि, तदुक्तं-"सीसमुरोयरपिट्ठी दो बाहू

ऊरुया य अङ्गा ।" अङ्गुखादीन्युपाङ्गानि, शेषाणि तु तत्प्रत्यवयवभूतानि अङ्गुलिपर्वरेखादीनि अङ्गोपाङ्गानि । अङ्गानि च उपाङ्गानि च अङ्गोपाङ्गानि । अङ्गोपाङ्गानि च अङ्गोपाङ्गानि च अङ्गोपाङ्गानि, "स्यादावसङ्ख्येय" (३-१-११९) इत्येकशेष, तन्निबन्धन नाम अङ्गोपाङ्गनाम । तत्त्रिधा, तद्यथा–औदारिकाङ्गोपाङ्गनाम, वैक्रियाङ्गोपाङ्गनाम, आहारकाङ्गोपाङ्गनाम । तत्र यदुदयादौदारिकशरीरत्वेन परिणताना पुद्गलानामङ्गोपाङ्गविभागपरिणतिरुपजायते तदौदारिकाङ्गोपाङ्गनाम, एव वैक्रियाहारकाङ्गोपाङ्गनाम्नी अपि भावनीये । तैजसकार्मणयोस्तु जीवप्रदेशसस्थानानुरोधित्वादङ्गोपाङ्गसत्त्व इति न तन्निबन्धन नाम । तथा बध्यतेऽनेनेति बन्धन, यदुदयादौदारिकपुद्गलाना पूर्वगृहीताना गृह्यमाणाना च परस्परमन्यशरीरपुद्गलैश्च सह सबन्ध, तत्पञ्चधा, तद्यथा–औदारिकबन्धन, वैक्रियबन्धन, आहारकबन्धन, तैजसबन्धन, कार्मणबन्धन । तत्र यदुदयादौदारिकशरीरपुद्गलाना पूर्वगृहीताना गृह्यमाणाना च परस्पर तैजसादिशरीरपुद्गलैश्च सह सबन्ध तदौदारिकबन्धन । एव वैक्रियबन्धन आहारकबन्धन च भावनीयम् । यदुदयात् पुनस्तैजसपुद्गलाना पूर्वगृहीताना गृह्यमाणाना च परस्पर कार्मणशरीरपुद्गलैश्च सह संबन्धस्तत्तैजसबन्धन । यदुदयात्कर्मपुद्गलाना पूर्वगृहीताना गृह्यमाणाना च परस्पर सबन्धस्तत्कार्मणबन्धन । केचित् पुनर्बन्धनस्य पञ्चदश भेदानाचक्षते, ते च पञ्चसग्रहकर्मविपाकादिग्रन्थतो वेदितव्या । तथा सघात्यन्ते पिण्डीक्रियन्ते औदारिकादिपुद्गला येन तत्संघात तच्च तन्नाम च सघातनाम, तच्च पञ्चधा, तद्यथा–औदारिकसंघातनाम, वैक्रियसघातनाम, आहारकसंघातनाम, तैजससघातनाम, कार्मणसघातनाम । तत्र यदुदयादौदारिकपुद्गला ये यत्र योग्यास्तान् तत्र सघातयति, यथा शिरोयोग्यान् शिरसि, पादयो-

ग्यान् पादयोः, शेषांगयोग्यान् शेषांगेषु, तदौदारिकसंघातनाम । एवं वैक्रियसंघातनामादिष्वपि जावनीयं । तथा संहननं अस्थिरचनाविशेषः तच्चौदारिकशरीरे एव नान्येषु शरीरेषु, तेषां अस्थिरहितत्वात् । तच्च षोढा, तद्यथा–वज्रर्षजनाराचं, रुषजनाराचं, नाराचं, अर्धनाराचं, कीलिका, सेवार्तं च । तत्र वज्रं कीलिका, ऋषजः परिवेष्टनपट्टः, नाराचमुजयतो मर्कटबन्धः । उक्तं च–"रिसहो य होइ पट्टो वज्जं पुण कीलिया मुणेयवा । उजउ मक्कडबंधो नारायं तं वियाणाहि ॥ १ ॥" ततश्च घयोरस्थ्नोरुजयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयजेदिकीलिकाख्यं वज्रनामकमस्थि यत्र जवति तद्वज्रर्षजनाराचं तन्निबन्धनं नाम वज्रर्षजनाराचनाम । यत्पुनः कीलिकारहितं संहननं तत् ऋषजनाराचं तन्निबन्धनं नाम ऋषजनाराचनाम। यत्र पुनर्मर्कटबन्ध एव केवलो जवति न पुनः कीलिका ऋषजसंज्ञः पट्टश्च तन्नाराचं तन्निबन्धनं नाम नाराचनाम । यत्र त्वेकपार्श्वेन मर्कटबन्धो द्वितीयपार्श्वेन च कीलिका जवति तदर्धनाराचं तन्निबन्धनं नाम अर्धनाराचनाम । यत्र त्वस्थीनि कीलिकामात्रबद्धान्येव जवन्ति तत् कीलिकासंहननं तन्निबन्धनं नाम कीलिकानाम । यत्र तु परस्परं पर्यन्तसंस्पर्शलक्षणां सेवामागतान्यस्थीनि जवन्ति स्नेहाज्यवहारतैलाज्यंगविश्रामणादिरूपां च परिशीलनां नित्यमपेक्षते यत्र तत्सेवार्तं तन्निबन्धनं नाम सेवार्तनाम । तथा संस्थानमाकारविशेषः, तच्च षोढा, तद्यथा–समचतुरस्रं, न्यग्रोधपरिमंडलं, सादि, वामनं, कुब्जं, हुंडं चेति । तत्र समा यथोक्तप्रमाणाश्चतस्रोऽस्रयश्चतुर्दिग्विजागोपलक्षिताः शरीरावयवा यस्य तत् समचतुरस्रं, समासान्तोऽत्प्रत्ययः, समचतुरस्रसंस्थाननिबन्धनं नाम समचतुरस्रनाम । तथा न्यग्रोधवत् परिमंडलं यस्य तत् न्यग्रोधपरिमंडलं, यथा न्यग्रोध उपरि संपूर्णावयवोऽधस्तु हीन-

त्तथा यत्सस्थान नाभेरुपरि संपूर्णप्रमाण अधस्तु न तथा तन्न्यग्रोधपरिमंडल, तन्निबन्धन नाम न्यग्रोधपरिमण्डलनाम। तथा सह आदिना नाभेरधस्तनभागरूपेण यथोक्तप्रमाणयुक्तेन वर्तत इति सादि, सर्वमपि शरीर सादि तत सादित्वविशेषणान्यथानुपपत्तेरादिरिह विशिष्टो ज्ञातव्य, ततो यत्र नाभेरधो यथोक्तप्रमाणयुक्तमुपरि च हीन तत्सादिसस्थान तन्निबन्धन नाम सादिनाम। तथा यत्र शिरोग्रीव हस्तपादादिक च यथोक्तप्रमाणोपपन्न उरउदरादि च मडल तत्कुब्जसस्थान तन्निबन्धन नाम कुब्जननाम। यत्र पुनरुरउदरादि यथोक्तप्रमाणोपेत हस्तपादादिक च हीन तत्सस्थान वामन तन्निबन्धन नाम वामननाम। यत्र सर्वेऽप्यवयवा यथोक्तप्रमाणहीनास्तत्सस्थानं हुंड तन्निबन्धन नाम हुण्डनाम। तथा वर्ण्यतेऽलक्रियते शरीरमनेनेति वर्ण, तन्निबन्धन नाम वर्णनाम, तत्पञ्चधा, तद्यथा–शुक्लनाम, कृष्णनाम, नीलनाम, हारिद्रनाम, लोहितनाम। तत्र यदुदयाज्जन्तुशरीरेषु शुक्लो वर्णो भवति तच्छुक्लनाम। एव शेषाण्यपि भावनीयानि। तथा 'गन्ध ("वस्ति गन्धि अर्दने इति चुरादौ") अर्दने' गन्ध्यते आघ्रायते इति गन्धस्तन्निबन्धन नाम गन्धनाम, तद्द्विधा–सुरभिगन्धनाम, दुरभिगन्धनाम। तत्र यदुदयात् शरीरेषु गन्ध सुरभिरुपजायते तत्सुरभिगन्धनाम, यदुदयात्पुनर्दुरभिगन्धो भवति तद्दुरभिगन्धनाम। तथा रस्यते आस्वाद्यते इति रसस्तन्निबन्धन नाम रसनाम, तत्पञ्चधा, तद्यथा–तिक्तनाम, कटुनाम, कषायनाम, अम्लनाम, मधुरनाम चेति। तत्र यदुदयाज्जन्तुशरीरेषु तिक्तो रसो भवति तत्तिक्तनाम। एव शेषाण्यपि भावनीयानि। तथा स्पृश्यत इति स्पर्शस्तन्निबन्धन नाम स्पर्शनाम, तदष्टधा, तद्यथा–मृदुनाम, कर्कशनाम, गुरुनाम, लघुनाम, स्निग्धनाम, रूक्षनाम, शीतनाम, उष्णनाम। तत्र यदुदयाज्जन्तुशरीरेषु मृदु स्पर्शो भवति

तत् मृदुस्पर्शनाम। एवं शेषाण्यपि भावनीयानि । तथा कूर्परलांगलगोमूत्रिकाकाररूपेण यथाक्रमं द्वित्रिचतुःसमयप्रमाणेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणि गमनं आनुपूर्वी, तन्निबन्धनं नाम आनुपूर्वीनाम, तच्चतुर्विधं, तद्यथा—नरकानुपूर्वीनाम, तिर्यगानुपूर्वीनाम, मनुष्यानुपूर्वीनाम, देवानुपूर्वीनाम। तथा विहायसा गतिर्गमनं विहायोगतिः। ननु सर्वगतत्वाद्विहायसस्ततोऽन्यत्र गतिरेव न संभवतीति किमर्थं विहायसा विशेषणं ? सत्यमेतत्, किं तु यदि गतिरित्येवोच्यते तर्हि नाम्नः प्रथमप्रकृतिरपि गतिरस्तीति पौनरुक्त्याशंका स्यात्ततस्तद्व्यवच्छेदार्थं विहायसा विशेषणं, विहायसा गतिः, न तु नारकत्वादिपर्यायपरिणतिरूपा गतिः विहायोगतिस्तन्निबन्धनं नाम विहायोगतिनाम, तद्द्विविधं—प्रशस्तविहायोगतिनाम, अप्रशस्तविहायोगतिनाम । तत्र यदुदयाज्जन्तोः प्रशस्ता विहायोगतिर्भवति यथा हंसादीनां तत्प्रशस्तविहायोगतिनाम। यदुदयात् पुनरप्रशस्ता विहायोगतिर्भवति यथा खरोष्ट्रमहिषादीनां तदप्रशस्तविहायोगतिनाम। एताश्च गत्यादयो विहायोगतिपर्यन्ताश्चतुर्दशप्रकृतयः शास्त्रान्तरे पिंडप्रकृतय इति विश्रुताः, अनेकावान्तरभेदपिंडात्मकाः प्रकृतयः पिंडप्रकृतय इति व्युत्पत्तेः । तथा त्रसन्ति उष्णाद्यभितप्ताः सन्तो विवक्षितस्थानादुद्विजन्ते गच्छन्ति च छायाद्यासेवनार्थं स्थानान्तरमिति त्रसा द्वीन्द्रियादयः तत्पर्यायपरिणतिहेतुर्नाम त्रसनाम। तद्विपरीतं स्थावरनाम, यदुदयादुष्णाद्यभितापेऽपि तत्स्थानपरिहारासमर्थाः पृथिव्यप्तेजोवायुवनस्पतयः स्थावरा जायन्ते। तथा बादरनाम यदुदयाज्जीवा बादरा भवन्ति, बादरत्वं च परिणामविशेषः यदुदयात्पृथिव्यादेरेकैकस्य जन्तुशरीरस्य चक्षुर्ग्राह्यत्वाभावेऽपि बहूनां समुदाये चक्षुर्ग्रहणं भवति । तद्विपरीतं सूक्ष्मनाम, यदुदयान्न कदाचिदपि जन्तुशरीरस्य चक्षुर्ग्राह्यता

भवति । पर्याप्तकनाम, यदुदयात् स्वयोग्यपर्याप्तिनिर्वर्तनसमर्थो भवति, पर्याप्तिराहारादिपुद्गलग्रहणपरिणमनहेतुरात्मन
शक्तिविशेष , सा च षोढा, तद्यथा–आहारपर्याप्ति , शरीरपर्याप्ति , इन्द्रियपर्याप्ति , उच्छ्वासपर्याप्ति , भाषापर्याप्ति , मन -
पर्याप्ति । तत्र यया बाह्यमाहारमादाय खलरसरूपतया परिणमयति सा आहारपर्याप्ति । यया रसीभूतमाहार रसा-
सृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्तिः । यया धातुरूपतया परिणमितमाहार-
मिन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्ति । यया पुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादाय उच्छ्वासरूपतया परिणमय्य
आलम्ब्य च मुञ्चति सा उच्छ्वासपर्याप्ति । यया तु भाषाप्रायोग्यवर्गणादलिक गृहीत्वा भाषात्वेन परिणमय्य आलम्ब्य च
मुञ्चति सा भाषापर्याप्ति । यया पुनर्मनोयोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति सा मन पर्याप्ति ।
एताश्च यथाक्रममेकेन्द्रियाणा सज्ञिवर्जाना द्वीन्द्रियादीना सज्ञिना च चतुःपञ्चषट्सख्या भवन्ति । पर्याप्तकनामविपरीतम-
पर्याप्तकनाम, यदुदयात् स्वयोग्यपर्याप्तिपरिसमाप्तिसमर्थो न भवति । प्रत्येकनाम, यदुदयादेकैकस्य जन्तोरेकैकमौदारिक
वैक्रिय वा शरीर भवति । तद्विपरीत साधारणनाम, यदुदयादनन्ताना जीवानामेकमौदारिक शरीरं भवति । तथा यदुदयात्
शिरोऽस्थिग्रीवादीनामवयवाना स्थिरता भवति तत् स्थिरनाम । यदुदयात् भ्रूजिह्वादीनामवयवानामस्थिरता भवति तद-
स्थिरनाम । यदुदयवशान्नाभेरुपर्यवयवा शुभा भवन्ति तत् शुभनाम । यदुदयवशान्नाभेरधः पादादयोऽवयवा अशुभा भवन्ति
तदशुभनाम । शिरसा हि स्पृष्टस्तुष्यति पादेन तु रुष्यति । कामिन्या पादेनापि स्पृष्टस्तुष्यति ततो व्यभिचार इति चेन्न, तत्तो-
षस्य मोहनीयनिबन्धनत्वात्, वस्तुस्थितिश्चेह चिन्त्यते ततोऽदोष । तथा यदुदयवशाज्जीवस्य स्वरः श्रोत्रप्रीतिहे तुरुपजा-

यते तत्सुस्वरनाम । यदुदयात् स्वरः कर्णकटुः प्रादुर्भवति तद्दुःस्वरनाम । यदुदयवशादनुपकार्यपि सर्वस्य मनःप्रियो भवति तत्सुभगनाम । यदुदयवशादुपकारकृदपि जनस्य द्वेष्यो भवति तद्दुर्भगनाम, उक्तं च–"अणुवकए वि बहूणं होइ पिउ तस्स सुभगनामुदउ । उवगारकारगो वि हु न रुच्चई दूभगस्सुदए ॥१॥ सुभगुदए वि हु कोई कंची आसज्ज दुब्भगो जइ वि । जायइ तद्दोसाउ जहा अभवाण तित्थयरो ॥ २ ॥" यदुदयवशाद्यत्किञ्चिदपि ब्रुवाणः सर्वस्योपादेयवचनो भवति दर्शनसमनन्तरमेव च लोकोऽभ्युत्थानादिकं समाचरति तदादेयनाम । यदुदयवशात्तु उपपन्नमपि ब्रुवाणो नोपादेयवचनो भवति, न च लोकोऽभ्युत्थानादि तस्य करोति तदनादेयनाम। यदुदयवशान्मध्यस्थजनस्य प्रशस्यो भवति तद्यशःकीर्तिनाम । यदुदयवशान्मध्यस्थजनस्यापि अप्रशस्यो भवति तदयशःकीर्तिनाम । यशःकीर्त्योश्चायं विशेषः–"दानपुण्यकृता कीर्तिः, पराक्रमकृतं यशः" । अथवा "एकदिग्गामिनी कीर्तिः, सर्वदिग्गामुकं यशः" । तथा यदुदयवशाज्जीवानां शरीराणि न गुरूणि नापि लघूनि नापि गुरुलघूनि किंत्वगुरुलघुपरिणामपरिणतानि भवन्ति तदगुरुलघुनाम। यदुदयवशात् स्वशरीरान्तःप्रवर्धमानैः प्रतिजिह्वागलवृन्दलंचकचोरदन्तादिभिर्जन्तुरुपहन्यते तदुपघातनाम । यदुदयवशादोजस्वी दर्शनमात्रेण वाक्सौष्ठवेन वा महानृपसभामपि गतः सभ्यानपि क्षोभमापादयति प्रतिपक्षप्रतिभाप्रतिघातं च करोति तत् पराघातनाम । यदुदयवशादुच्छ्वासनिश्वासलब्धिरुपजायते तदुच्छ्वासनाम । यदुदयवशाज्जन्तुशरीराणि भानुमंडलगतपृथिवीकायिकरूपाणि स्वरूपेणानुष्णान्यपि उष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनाम । आतपनामोदयश्च वह्निशरीरे न भवति सूत्रे प्रतिषेधात् । तत्रोष्णत्वमुष्णस्पर्शनामोदयात् । उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वमिति ।

तथा यदुदयवशाज्जन्तुशरीराणि अनुष्णप्रकाशरूपमुद्योतमातन्वन्ति यथा यतिदेवोत्तरवैक्रियचन्द्रग्रहनक्षत्रतारारत्नौष-
धय तदुद्योतनाम । यदुदयवशाज्जन्तुशरीरेष्वङ्गप्रत्यङ्गानां प्रतिनियतस्थानवर्तिता भवति तन्निर्माणनाम । यदुदयवशादष्ट-
महाप्रातिहार्यप्रमुखाश्चतुस्त्रिंशदतिशया प्रादुर्भवन्ति तत्तीर्थंकरनाम । इह पिण्डप्रकृतीनामवान्तरभेदगणने पञ्चष-
ष्टिर्भवन्ति, शेषाश्च प्रकृतयोऽष्टाविंशति, तत सर्वसंख्यया नाम्न उत्तरभेदास्त्रिनवति ॥ गोत्रस्योत्तरप्रकृती द्वे,
तद्यथा—उच्चैर्गोत्रं नीचैर्गोत्रं । तत्र यदुदयादुत्तमकुलजातिप्राप्ति सत्काराभ्युत्थानाञ्जलिप्रग्रहादिरूपपूजालाभ-
सम्भवश्च तदुच्चैर्गोत्रं, तद्विपरीत नीचैर्गोत्रम् । अन्तरायस्योत्तरप्रकृतय पञ्च, तद्यथा—दानान्तराय, लाभान्तरायं,
भोगान्तराय, उपभोगान्तरायं, वीर्यान्तराय । तत्र यदुदयवशात्सति विभवे समागते गुणवति पात्रे 'दत्तमस्मै
बहुफलमिति' जानन्नपि दातुं नोत्सहते तद्दानान्तरायं । यदुदयवशात् पुन प्रसिद्धादपि दातुर्गृहे विद्यमानमपि देयमर्थ-
जात याञ्चाकुशलो गुणवानपि याचको न लभते तल्लाभान्तराय । यदुदयात्तु सत्यपि विशिष्टाहारादौ असति च प्रत्या-
ख्यानपरिणामे केवलकार्पण्याशक्त्यादिकारणवशान्नोत्सहते विशिष्टाहारादि भोक्तुं तद्भोगान्तराय । एवमेवोपभोगान्तराय-
मपि । नवरं भोगोपभोगयोरय विशेष—सकृत् भुज्यत इति भोग , पुन पुनर्भुज्यत इत्युपभोग । उक्त च—"सइ भुञ्जइ
त्ति भोगो सो पुण आहारपुप्फमाईओ । उवभोगो उ पुणो पुण उवभुजइ भवणविलयाई ॥ १ ॥" तथा यदुदयवशात्
सत्यपि नीरुजि शरीरे यूनोऽप्यल्पप्राणता भवति तद्वीर्यान्तराय । इह बन्धे उदये च बंधनानि संघातनानि च स्वशरी-
रनामग्रहणेनैव गृहीतानि विवक्ष्यन्ते, तद्यथा—औदारिकशरीरनामग्रहणेन औदारिकबन्धनसंघातनाम्नी, एवमाहारक-

शरीरनामग्रहणेन आहारकबन्धनसंघातननाम्नी इत्यादि। वर्णादीनां चावान्तरभेदा न विवक्ष्यन्ते। तथा बन्धे सम्यक्त्वसम्यग्मिथ्यात्वे न भवतः, यतो मिथ्यात्वपुद्गलानामेव जीवः सम्यक्त्वगुणेन मिथ्यात्वरूपतामपनीय केषांचिदत्यन्तविशुद्धिमापादयति। अपरेषां त्वीषद्विशुद्धिं। केचित् पुनर्मिथ्यात्वरूपा एवावतिष्ठन्ते। तत्र येऽत्यन्तविशुद्धास्ते सम्यक्त्वव्यपदेशभाजः, ईषद्विशुद्धाः सम्यग्मिथ्यात्वव्यपदेशभाजः, शेषा मिथ्यात्वमिति। उक्तं च—"सम्यक्त्वगुणेन ततो विशोधयति कर्म तत्स मिथ्यात्वम्। यद्वत् शकृत्समुखैः शोध्यन्ते कोद्रवा मदनाः॥ १॥ यत्सर्वथापि तत्र विशुद्धं तद्भवति कर्म सम्यक्त्वम्। मिश्रं तु दरविशुद्धं भवत्यशुद्धं च मिथ्यात्वम्॥ २॥" उदये पुनः सम्यक्त्वसम्यग्मिथ्यात्वे अपि भवतः। ततो बन्धे उत्तरप्रकृतीनां विंशं शतं, उदये च द्वाविंशं शतं, सत्तायां च बन्धनानि संघातनानि च पृथग्विवक्ष्यन्ते, वर्णादीनां चावान्तरभेदाः पृथग्गण्यन्ते, ततः सर्वसंख्यया सत्तायामष्टचत्वारिंशं शतमुत्तरप्रकृतीनामिति ॥ ६॥

तदेवं कृता उत्तरप्रकृतीनां प्ररूपणा, संप्रति ज्ञानावरणीयस्य तत्तुल्यत्वादन्तरायस्य चोत्तरप्रकृतीरधिकृत्य बन्धादिस्थानप्ररूपणार्थमाह—

**बंधोदयसंतंसा नाणावरणंतराइए पंच। बंधोवरमे वि तहा उदसंता हुंति पंचेव॥ ७॥**

टीका—ज्ञानावरणे अन्तराये च प्रत्येकं बन्धोदयसत्तारूपा अंशाः पंच पंचप्रकृत्यात्मकाः। इदमुक्तं भवति—ज्ञानावरणे बन्धमुदयं सत्तां चाधिकृत्य सदैव पञ्च प्रकृतयो मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यवज्ञानावरणकेवलज्ञानावरणरूपाः प्राप्यन्ते, न त्वेकद्वित्र्यादिकाः, ध्रुवबन्धादित्वात्। अन्तरायेऽपि बन्धमुदयं सत्तां चाधिकृत्य

प्रत्येक सदैव दानान्तरायलाभान्तरायभोगान्तरायोपभोगान्तरायवीर्यान्तरायरूपाः पञ्च प्रकृतयः प्राप्यन्ते, न त्वेकद्वि-त्र्यादिकाः, ध्रुवबन्धादित्वादेव । तथा च सति ज्ञानावरणेऽन्तराये च बन्धादिषु प्रत्येकमेव पञ्चप्रकृत्यात्मक प्रकृतिस्था-नमिति । सम्प्रति संवेध उच्यते–ज्ञानावरणस्य बन्धकाले पञ्चविधो बन्धः, पञ्चविध उदय , पञ्चविधा सत्ता, एवमन्त-रायस्यापि । एष च विकल्पो द्वयोरपि सूक्ष्मसंपरायगुणस्थानक यावदवगन्तव्य । बन्धाभावे पुनर्ज्ञानावरणे अन्तराये च प्रत्येक पञ्चविध उदय पञ्चविधा सत्ता । तथा चाह–'बंधोवरमे वि तहा' इत्यादि, बंधोपरमेऽपि बन्धाभावेऽपि ज्ञाना-वरणान्तराययो । तथेति समुच्चये उदयसत्ते भवत । पञ्चैव पञ्चप्रकृत्यात्मके एव न त्वेकद्वित्र्यादिके ध्रुवोदयसत्ताक-त्वात्, एष च विकल्पो द्वयोरप्युपशान्तमोहे क्षीणमोहे च प्राप्यते ॥ ७ ॥

सम्प्रति दर्शनावरणस्योत्तरप्रकृतीरधिकृत्य बन्धादिस्थानप्ररूपणार्थमाह—

बंधस्स य संतस्स य पगइट्ठाणाइ तिन्नि तुल्लाइ । उदयट्ठाणाइँ दुवे चउ पणगं दंसणावरणे ॥ ८ ॥

टीका–दर्शनावरणाख्ये द्वितीये कर्मणि बन्धस्य सत्तायाश्च परस्परं तुल्यानि तुल्यस्वरूपाणि त्रीणि प्रकृतिस्थानानि भवन्ति । तद्यथा–नव षट् चतस्र । तत्र सर्वप्रकृतिसमुदायो नव । ता एव नव स्त्यानर्द्धित्रिकहीना. षट् । एताश्च षट् निद्राप्रचलाहीनाश्चतस्र । तत्र नवप्रकृत्यात्मकं बन्धस्थान मिथ्यादृष्टौ सास्वादने वा । तच्चाभव्यानधिकृत्यानाद्यपर्यव-सान, कदाचिदपि व्यवच्छेदाभावात् । भव्यानधिकृत्यानादिसपर्यवसान, कालान्तरे व्यवच्छेदसंभवात् । सम्यक्त्वात्प्रतिपत्य मिथ्यात्व गताना सादिसपर्यवसान, तच्च जघन्यतोऽन्तर्मुहूर्त काल यावत्, उत्कर्षतो देशोनापार्धपुद्गलपरावर्त । षट्-

प्रकृत्यात्मकं बन्धस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानकादारभ्यापूर्वकरणस्य प्रथमं भागं यावत्, तच्च जघन्यतोऽन्तर्मुहूर्तं कालमुत्कर्षतो द्वे षट्षष्टी सागरोपमाणां, सम्यक्त्वस्यापान्तराले सम्यग्मिथ्यात्वान्तरितस्यैतावन्तं कालमवस्थानसंभवात्, तत ऊर्ध्वं तु कश्चित् क्षपकश्रेणिं प्रतिपद्यते, कश्चित्पुनर्मिथ्यात्वं, मिथ्यात्वे च प्रतिपन्ने सति अवश्यं नवविधो बन्धः। चतुष्प्रकृत्यात्मकं तु बन्धस्थानमपूर्वकरणद्वितीयभागादारभ्य सूक्ष्मसंपरायं यावत्, जघन्येनैकं समयं, उत्कर्षतोऽन्तर्मुहूर्तम्। एकं समयं यावत् कथं प्राप्यते इति चेदुच्यते–उपशमश्रेण्यामपूर्वकरणस्य द्वितीयभागप्रथमसमये चतुर्विधबन्धमारभ्यानन्तरसमये कश्चित् कालं करोति, कालं च कृत्वा दिवं गतः सन् अविरतो भवति, अविरतत्वे च षड्विधो बन्ध इत्येकसामयिकी चतुर्विधबन्धस्थानस्य स्थितिः। तथा नवप्रकृत्यात्मकं सत्तास्थानं दर्शनावरणस्य कालमधिकृत्य द्विधा अनाद्यपर्यवसितं अनादिसपर्यवसितं च। तत्रानाद्यपर्यवसितमभव्यानां, कदाचिदपि व्यवच्छेदाभावात्। अनादिसपर्यवसानं भव्यानां, कालान्तरे व्यवच्छेदात्। सादिसपर्यवसानं तु न भवति, नवप्रकृत्यात्मकसत्तास्थानव्यवच्छेदो हि क्षपकश्रेण्यां भवति। न च क्षपकश्रेणीतः प्रतिपातो भवतीति कृत्वा। एतच्च सत्तास्थानं उपशमश्रेणिमधिकृत्योपशान्तमोहगुणस्थानकं यावदवाप्यते, क्षपकश्रेणिमधिकृत्य पुनरनिवृत्तिबादरसंपरायगुणस्थानकस्य प्रथमभागं। तथा षट्प्रकृत्यात्मकं सत्तास्थानं जघन्येनोत्कर्षेण चान्तर्मुहूर्तप्रमाणं। तच्चानिवृत्तिबादरसंपरायगुणस्थानकस्य द्वितीयभागादारभ्य क्षीणमोहगुणस्थानकद्विचरमसमयं यावदवसेयं। चतुष्प्रकृत्यात्मकं त्वेकसामयिकं क्षीणकषायचरमसमयभावित्वादिति। उदयस्थाने पुनर्द्वे भवतः, तद्यथा–चतस्रः पञ्च च। तत्र चतस्रश्चक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणकेवलदर्शना-

वरणरूपा । एतासा च समुदायो ध्रुवोदय इति कृत्वा एक प्रकृतिस्थान । एतासु च चतसृषु मध्ये निद्रादीना पञ्चाना प्रकृतीना मध्यादन्यतमस्या प्रकृतौ प्रक्षिप्ताया पञ्च । न हि निद्रादयो द्वित्रादिका युगपदुदयमायान्ति किं त्वेकस्मिन् काले एकैवान्यतमा काचित् । निद्रादयश्च ध्रुवोदया न भवन्ति, कालादिसापेक्षत्वात् । अत इद पञ्चप्रकृत्यात्मकमुदयस्थान कदाचिन्नलभ्यते ॥ ८ ॥

तदेवमुक्तानि दर्शनावरणस्य बन्धोदयसत्तामधिकृत्य प्रकृतिस्थानानि, संप्रति संवेधमभिधित्सुराह—

**बीयावरणे नवबंधगेसु चउ पंच उदय नव संता । छच्चउबंधे चेवं चउ बंधुदए छलंसा य ॥ ९ ॥**

**उवरयबंधे चउ पण नवंस चउरुदय छच्च चउसंता ।**

टीका—द्वितीयावरण दर्शनावरण तस्मिन् द्वितीयावरणे नवबंधकेषु सकलदर्शनावरणोत्तरप्रकृतिबन्धकेषु मिथ्यादृष्टिसासादनेषु । 'चउ पंच उदय त्ति' उदयश्चतुर्विध पञ्चविधो वा । तत्र चतुर्विधश्चक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणकेवलदर्शनावरणरूप । स एव निद्रापञ्चकसत्कान्यतमप्रकृतिप्रक्षेपात् पञ्चविध । सत्तामधिकृत्य पुन प्रकृतिस्थान नव नवप्रकृत्यात्मक । तदेव नवविधबन्धकेषु द्वौ विकल्पौ दर्शितौ । तद्यथा—नवविधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, एष विकल्पो निद्रोदयाभावे, निद्रोदये तु नवविधो बन्ध पञ्चविध उदयो नवविधा सत्ता । 'छच्चउबंधे चेव ति' षड्बन्धे चतुर्बन्धे च एव पूर्वोक्तप्रकारेण उदयसत्तास्थानानि वेदितव्यानि । इदमुक्त भवति—ये षड्विधबन्धका सम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्ता कियत्कालमपूर्वकरणाश्च, तेषा चतुर्विध पञ्चविधो वा उदय

नवविधा सत्ता। एतेन च द्वौ विकल्पौ दर्शितौ, तद्यथा–षड्विधो बन्धश्चतुर्विध उदयः नवविधा सत्ता। अथवा षड्विधो बन्धः पञ्चविध उदयो नवविधा सत्ता, एतौ च द्वौ विकल्पौ क्षपकं मुक्त्वाऽन्यत्र सर्वत्रापि प्राप्यते। क्षपके त्वेक एव विकल्पः तद्यथा–षड्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता। क्षपकस्य हि अत्यन्तविशुद्धत्वेन निद्राप्रचलयोर्नोदयः संभवति। तदुक्तं सत्कर्मग्रन्थे–"निद्दादुगस्स उदओ खीणगखवगे परिवज्जा(रीवज्जो)"।तथा चतुर्विधबन्धकेषु कियत्कालमपूर्वकरणेषु अनिवृत्तिबादरसूक्ष्मसंपरायेषु चोपशमश्रेणिं प्रतीत्य चतुर्विधः पञ्चविधो वा उदयः नवविधा सत्ता। क्षपकश्रेणिमधिकृत्य पुनरुदयश्चतुर्विध एव, कारणमत्र प्रागेवोक्तम्। केचित् पुनः क्षपकक्षीणमोहेष्वपि निद्राप्रचलयोरुदयमिच्छन्ति, तत्सत्कर्मकर्मप्रकृत्यादिग्रन्थैः सह विरुध्यते इत्युपेक्ष्यते। यावच्च क्षपकश्रेण्यामपि स्त्यानर्द्धित्रिकं न क्षीयते तावत् सत्ता नवविधैव, स्त्यानर्द्धित्रिके तु क्षीणे षड्विधा सत्ता। तथा चाह–'चउबंधुदए छलंसा य त्ति' इह अंश इति सत्कर्माभिधीयते। यदाह चूर्णिकृत्–"अंस इति संतकम्मं भन्नई"। चतुर्विधे बन्धे चतुर्विध उदये अनिवृत्तिबादरसंपरायगुणस्थानकाद्धायाः (सर्व)संख्येयेभ्यो भागेभ्यः परतः स्त्यानर्द्धित्रिके क्षीणे षड्विधा सत्ता। एष च विकल्पस्तावत्प्राप्यते यावत्सूक्ष्मसंपरायगुणस्थानकाद्धायाश्चरमसमयः, परतस्तु न प्राप्यते बन्धाभावात् ( बन्धोदयाभावात् )। तदेवं चतुर्विधबन्धकस्य त्रयो विकल्पाः तद्यथा–चतुर्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता। एष विकल्प उपशमश्रेण्यां क्षपकश्रेण्यां वा यावत् स्त्यानर्द्धित्रिकं न क्षीयते। चतुर्विधो बन्धः पञ्चविध उदयो नवविधा सत्ता, एष उपशमश्रेण्यां। क्षपकश्रेण्यां तु पञ्चविधोदयस्याभावात्। तथा चतुर्विधो बन्धश्चतुर्विध उदयः षड्विधा सत्ता, एष च विकल्पः क्षपकश्रेण्यां स्त्यानर्द्धित्रि-

कश्यानन्तरमवसेय ॥ए॥ 'उवरयवंधेत्यादि' उपरते व्यवच्छिन्ने वन्धे चतुर्विध' पञ्चविधो वा उदय' नवविधा सत्ता, एतौ च द्वौ विकल्पावुपशान्तमोहगुणस्थानके प्राप्येते। उपशमश्रेण्या हि निद्राप्रचलयोरुदय' सञ्जवति, स्त्यानर्द्धित्रिक च न क्षयमुपगच्छति ततश्चतुर्विध पञ्चविधो वा उदयो नवविधा सत्ता प्राप्यते। तथा चतुर्विध उदय' षड्विधा सत्ता, एष विकल्प क्षीणकषायस्य द्विचरमसमयं यावदवाप्यते। तथा चतुर्विध उदयश्चतुर्विधा सत्ता, एष विकल्प' क्षीणकषायस्य चरमसमये, निद्राप्रचलयोर्द्विचरमसमये एव क्षपितत्वात्। तदेव दर्शनावरणे सर्वसंख्यया एकादश विकल्पा॰। यदि पुन क्षपकक्षीणकषायेष्वपि निद्राप्रचलयोरुदय इष्यते तर्हि चतुर्विधो वन्ध पञ्चविध उदय षड्विधा सत्ता। वधाजावे पञ्चविध उदय षड्विधा सत्तेत्येतौ द्वौ विकल्पावधिकौ प्राप्येते इति त्रयोदश ज्ञातव्याः ॥ ए ॥

सम्प्रति वेदनीयायुर्गोत्रेषु सवेधविकल्पोपदर्शनार्थमाह—

वेयणियाउयगोए विजज्ज

टीका—वेदनीये आयुषि गोत्रे च यथागम वन्धादिस्थानानि सवेधमाश्रित्य विजजेत् विकल्पयेत्। तत्र वेदनीयस्य सामान्येनैक वन्धस्थानं, तद्यथा—सातमसातं वा, द्वयो परस्परविरुद्धत्वेन युगपद्बन्धाजावात्। उदयस्थानमपि एकं, तद्यथा—सातमसात वा, द्वयोर्युगपदुदयाजावात् परस्परविरुद्धत्वात्। सत्तास्थाने द्वे, तद्यथा—द्वे एक च। तत्र यावदेकमन्यतरन्न क्षीयते तावद्द्वे अपि सती, अन्यतरस्मिंश्च क्षीणे एकमिति। संप्रति सवेध उच्यते—असातस्य वन्ध', असातस्य उदय, सातासाते सती। अथवा असातस्य वन्ध, सातस्य उदयः, सातासाते सती। एतौ द्वौ विकल्पौ मिथ्या-

दृष्टिगुणस्थानकात्प्रभृति प्रमत्तगुणस्थानकं यावत् प्राप्यते, न परतः, परतोऽसातस्य बन्धाभावात् । तथा सातस्य बन्धः, असातस्योदयः, सातासाते सती । अथवा सातस्य बन्धः, सातस्योदयः, सातासाते सती । एतौ द्वौ विकल्पौ मिथ्यादृष्टिगुणस्थानकादारभ्य सयोगिकेवलिगुणस्थानकं यावत्संभवतः, ततः परतो बन्धाभावात्, ततः परतो बन्धाभावे असातस्योदयः सातासाते सती । अथवा सातस्योदयः सातासाते सती । एतौ द्वौ विकल्पौ अयोगिकेवलिनि द्विचरमसमयं यावत् प्राप्येते । चरमसमये तु असातस्योदयः असातस्य सत्ता यस्य द्विचरमसमये सातं क्षीणं, यस्य त्वसातं द्विचरमसमये क्षीणं तस्यायं विकल्पः सातस्योदयः सातस्य सत्ता, एतौ च द्वौ विकल्पावेकसामयिकौ । सर्वसंख्यया च वेदनीयस्याष्टौ भंगाः । तथा आयुषि सामान्येनैकं बन्धस्थानं चतुर्णामन्यतमत् परस्परविरुद्धत्वेन युगपद्द्वित्र्यायुषां बन्धाभावात् । उदयस्थानमप्येकं तदपि चतुर्णामन्यतमत् युगपद्द्वित्र्यायुषां उदयाभावात् । द्वे सत्तास्थाने, तद्यथा—द्वे एकं च । तत्रैकं चतुर्णामन्यतमत् यावदन्यत् परभवायुर्न बध्यते, परभवायुषि च बद्धे यावदन्यत्र परभवे नोत्पद्यते तावद्द्वे सती । संप्रति संवेध उच्यते, तत्रायुषस्तिस्रोऽवस्थाः, तद्यथा—परभवायुर्बन्धकालात्पूर्वावस्था, परभवायुर्बन्धकालावस्था, परभवायुर्बन्धोत्तरकालावस्था च । तत्र नैरयिकस्य परभवायुर्बन्धकालात्पूर्वं नारकायुष उदयः, नारकायुषः सत्ता, एष विकल्प आद्येषु चतुर्षु गुणस्थानेषु, शेषगुणस्थानकस्य नरकेष्वसंभवात् । परभवायुर्बन्धकाले तिर्यगायुषो बन्धः, नारकायुष उदयः, नारकतिर्यगायुषी सती । एष विकल्पो मिथ्यादृष्टेः सास्वादनस्य वा, द्वयोरेवाद्ययोर्गुणस्थानकयोस्तिर्यगायुषो बन्धसंभवात् । अथवा मनुष्यायुषो बन्धः, नारकायुष उदयः, मनुष्यनारकायुषी सती । एष विकल्पोऽपि मिथ्या-

दृष्टे सास्वादनस्याविरतिसम्यग्दृष्टेर्वा । बन्धोत्तरकाले तु नारकायुष उदय , नारकतिर्यगायुषी सती, एष विकल्प आद्येषु चतुर्ष्वपि गुणस्थानकेषु, तिर्यगायुर्बन्धानन्तर कस्यापि सम्यक्त्वे सम्यग्मिथ्यात्वे वा गमनसम्भवात् । अथवा नारकायुष उदय , मनुष्यनारकायुषी सती । इह नारका देवायुर्नरकायुश्च भवप्रत्ययादेव न बध्नन्ति, तत्रोत्पत्त्यभावात् । तदुक्त— "देवा नारगा देवेसु नारगेसु वि न उववज्जति त्ति" । ततो नारकाणा परभवायुर्बन्धकाले बन्धोत्तरकाले वा देवायुर्नारकायुर्न्या विकल्पाभावात् । सर्वसंख्यया पञ्चैव विकल्पा भवन्ति । एव देवानामपि पञ्च विकल्पा भावनीया , नवरं नारकायु - स्थाने देवायुरिति वक्तव्य, तद्यथा—देवायुष उदय , देवायुष सत्ता इत्यादि । तथा तिर्यगायुष उदयस्तिर्यगायुष सत्ता । एष विकल्प आद्येषु पञ्चसु गुणस्थानकेषु, शेषगुणस्थानकस्य तिर्यक्त्वेऽसम्भवात् , एष विकल्प॰ परभवायुर्बन्धकालात्पूर्व । बन्धकाले तु नारकायुषो बन्ध , तिर्यगायुष उदय , नारकतिर्यगायुषी सती, एष विकल्पो मिथ्यादृष्टे ,अन्यत्र नारकायुषो बन्धाभावात् । अथवा तिर्यगायुषो बन्ध॰, तिर्यगायुष उदय॰, तिर्यक्तिर्यगायुषी सती । एष विकल्पो मिथ्यादृष्टे सास्वादनस्य वा । अथवा मनुष्यायुषो बन्ध , तिर्यगायुष उदय , मनुष्यतिर्यगायुषी सती । एष विकल्पो मिथ्यादृष्टे सास्वादनस्य वा नान्यस्य, तिरश्चोऽविरतसम्यग्दृष्टेर्देशविरतस्य वा देवायुष एव बन्धसम्भवात् । अथवा देवायुषो बन्धः, तिर्यगायुष उदय , देवतिर्यगायुषी सती । एष विकल्पो मिथ्यादृष्टे सास्वादनस्याविरतसम्यग्दृष्टेर्देशविरतस्य वा, न सम्यग्मिथ्यादृष्टे तस्यायुर्बन्धाभावात् । एते चत्वारो विकल्पा परभवायुर्बन्धकाले । बन्धे तु व्यवच्छिन्ने तिर्यगायुष उदयो नारकतिर्यगायुषी सती, एष विकल्प आद्येषु पञ्चसु गुणस्थानकेषु, नरकायुर्बन्धानन्तर सम्यक्त्वादावपि गमनस-

न्नवात्। अथवा तिर्यगायुष उदयस्तिर्यकृतिर्यगायुषी सती, अथवा तिर्यगायुष उदयो मनुष्यतिर्यगायुषी सती, अथवा तिर्यगायुष उदयो देवतिर्यगायुषी सती, एतेऽपि त्रयो विकल्पा आद्येषु पञ्चसु गुणस्थानकेषु। सर्वसंख्यया तिरश्चां नव विकल्पाः, चतसृष्वपि गतिषु तिरश्चामुत्पादसंभवात्। तथा मनुष्यायुष उदयो मनुष्यायुषः सत्ता, एष विकल्पोऽयोगिकेवलिनं यावत्। तथा नरकायुषो बन्धो मनुष्यायुष उदयो नारकमनुष्यायुषी सती, एष विकल्पो मिथ्यादृष्टेः। तथा तिर्यगायुषो बन्धो मनुष्यायुष उदयस्तिर्यङ्मनुष्यायुषी सती, एष विकल्पो मिथ्यादृष्टेः सास्वादनस्य वा। मनुष्यायुषो बन्धो मनुष्यायुष उदयो (मनुष्य) मनुष्यायुषी सती, एषोऽपि विकल्पो मिथ्यादृष्टेः सास्वादनस्य वा। देवायुषो बन्धो मनुष्यायुष उदयो देवमनुष्यायुषी सती, एष विकल्पोऽप्रमत्तगुणस्थानकं यावत्। एते चत्वारो विकल्पाः परभवायुर्बन्धकाले। बन्धे तु व्यवच्छिन्ने मनुष्यायुष उदयो नारकमनुष्यायुषी सती, एष विकल्पोऽप्रमत्तगुणस्थानकं यावत्, नरकायुर्बन्धनानन्तरं संयमप्रतिपत्तेरपि संभवात्। मनुष्यायुष उदयस्तिर्यङ्मनुष्यायुषी सती, एषोऽपि विकल्पोऽप्रमत्तगुणस्थानं यावत्। मनुष्यायुष उदयो मनुष्यमनुष्यायुषी सती, अयमप्यप्रमत्तगुणस्थानकं यावत्। मनुष्यायुष उदयो देवमनुष्यायुषी सती, अयमुपशान्तमोहगुणस्थानकं यावत्। देवायुषि बद्धेऽप्युपशमश्रेण्यां रोहसंभवात्। सर्वसंख्यया मनुष्याणां नव भंगाः। तदेवमायुषि सर्वसंख्यया अष्टाविंशतिर्भंगाः। तथा गोत्रे सामान्येनैकं बन्धस्थानं, तद्यथा—उच्चैर्गोत्रं नीचैर्गोत्रं च, द्वयोः परस्परं विरुद्धत्वेन युगपद्बन्धाभावात्। उदयस्थानमप्येकं, तदपि द्वयोरन्यतरत्, परस्परविरुद्धत्वेन युगपदुदयाभावात्। द्वे सत्तास्थाने तद्यथा—द्वे एकं च, तत्र उच्चैर्गोत्रनीचैर्गोत्रे समुदिते द्वे, तेजस्कायिकवायुकायिकावस्थायां उच्चैर्गोत्रमु(उ)द्-

लिते एक, अथवा नीचैर्गोत्रमु(उ)द्वलिते एक, अथवा नीचैर्गोत्रेऽयोगिकेवलिद्विचरमसमये क्षीणे एक । सम्प्रति सवेध उच्यते—नीचैर्गोत्रस्य बन्ध नीचैर्गोत्रस्योदय नीचैर्गोत्रं सत्, एप विकल्पस्तेजस्कायिकवायुकायिकेषु लभ्यते, तद्भवाद्भृत्तेपु चाशेपजीवेष्वेकद्वित्रिचतुस्तिर्यक्पञ्चेन्द्रियेपु कियत्कालं नीचैर्गोत्रस्य बन्धः नीचैर्गोत्रस्योदय उच्चैर्नीचैर्गोत्रे सती। अथवा नीचैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती, एतौ द्वौ विकल्पौ मिथ्यादृष्टिपु सासादनेषु च, न सम्यग्मिथ्यादृष्ट्यादिपु, तेषां नीचैर्गोत्रबन्धाभावात् । तथा उच्चैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती, एप विकल्पो मिथ्यादृष्टिगुणस्थानकादारभ्यदेशविरतिगुणस्थानक यावत् प्राप्यते, न परत , परतो नीचैर्गोत्रस्योदयाभावात् । तथा उच्चैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती, एप विकल्पो मिथ्यादृष्टेरारभ्य सूक्ष्मसपरायगुणस्थानकं यावत्, न परत , परतो बन्धाभावात् । बन्धाभावे उच्चैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती, एप विकल्प उपशान्तमोहगुणस्थानकादारभ्यायोगिकेवलिद्विचरमसमय यावदवसेयः । उच्चैर्गोत्रस्योदय उच्चैर्गोत्र सत्, एप विकल्पोऽयोगिकेवलिचरमसमये । तदेवमेते उच्चैर्गोत्रनीचैर्गोत्रस्य सर्वसख्यया सप्तभगा ॥

मोहं परं वोछं ॥ १० ॥

टीका—अत पर मोहं वक्ष्ये, मोहनीयस्य बन्धादिस्थानानि वक्ष्य इत्यर्थः ॥ १० ॥

---

१ अत्र च "गोयमि सत्तभगा अट्ठय भगा हवति वेयणीए। पण नव नव पण भगा आउचउक्के वि कमसो उ ॥१॥" इति सवेधभगप्रदर्शक गाथासूत्रं दृश्यते केपुचिदादर्शेपु, न च तद्वृत्तिकृदभिमतमित्युपेक्षितमस्माभि. ।

तत्र प्रथमतो बन्धस्थानप्ररूपणार्थमाह—

**बावीस एकवीसा सत्तरसा तेरसेव नव पंच। चउ तिग दुगं च एक्कं बंधट्ठाणाणि मोहस्स ॥ ११ ॥**

टीका—मोहस्य मोहनीयस्य दश बन्धस्थानानि, तद्यथा—द्वाविंशतिः, एकविंशतिः, सप्तदश, त्रयोदश, नव, पञ्च, चतस्रः, तिस्रः, द्वे, एका च। तत्र सम्यक्त्वसम्यग्मिथ्यात्वे बन्धे न भवतः। न च त्रयाणां वेदानां युगपद्बन्धः किं त्वेककालमेकस्यैव, हास्यरतियुगलारतिशोकयुगले अपि न युगपद्बन्धमायातः किं त्वेकतरमेव युगलं। ततो मोहनीयस्योत्कर्षतः प्रभूतप्रकृतिबन्धो द्वाविंशतिः, सा च मिथ्यादृष्टिगुणस्थानके प्राप्यते। ततः सास्वादनसम्यग्दृष्टिगुणस्थानके मिथ्यात्वस्य बन्धाभावात् एकविंशतिः। यद्यप्यत्र नपुंसकवेदस्यापि बन्धो न भवति तथापि तत्स्थाने स्त्रीवेदः पुरुषवेदो वा प्रक्षिप्यत इत्येकविंशतेरेव बन्धः। ततो मिश्राविरतसम्यग्दृष्टिगुणस्थानकयोरनन्तानुबन्धिनामपि बन्धाभावात् सप्तदश। ततोऽपि देशविरतिगुणस्थानकेऽप्रत्याख्यानकषायाणां बन्धाभावात्त्रयोदश। ततोऽपि प्रमत्तापूर्वकरणेषु प्रत्याख्यानावरणानां बन्धाभावान्नव। यद्यपि अरतिशोकरूपं युगलं प्रमत्तगुणस्थानके एव व्यवच्छिन्नं तथापि तत्स्थाने हास्यरतियुगलं प्रक्षिप्यते इत्यप्रमत्तापूर्वकरणयोर्नवकबन्धो न विरुध्यते। ततो हास्यरतिभयजुगुप्सा अपूर्वकरणचरमसमये बन्धमाश्रित्य व्यवच्छिद्यन्ते इति अनिवृत्तिबादरसंपरायगुणस्थानके प्रथमभागे पंचानां बन्धः। द्वितीयभागे पुरुषवेदस्य बन्धाभावाच्चतसृणां बन्धः। तृतीयभागे संज्वलनक्रोधस्य बन्धाभावात्तिसृणां बन्धः। चतुर्थभागे संज्वलनमानस्य बन्धाभावाद्द्वयोर्बन्धः। पंचमभागे संज्वलनमायाया अपि बन्धाभावादेकस्याः संज्वलनलोभप्रकृतेर्बन्धः। ततः परं बादरसंपरायोदयाभावात्तस्या अपि न बन्धः ११

तदेवमुक्तानि मोहनीयस्य बन्धस्थानानि, सम्प्रत्युदयस्थानान्यभिधित्सुराह–

एक्कं च दो व चउरो एत्तो एक्काहिया दसुक्कोसा। ओहेण मोहणिज्जे उदयठाणा नव हवंति ॥ १२ ॥

टीका–ओघेन सामान्येन मोहनीये उदयस्थानानि नव भवन्ति, तद्यथा–एकं, द्वे, चत्वारि, अतश्चतुष्कादूर्ध्वं त्वेकाधिका उदयविकल्पास्तावदवगन्तव्या यावदुत्कर्षतो दश दशकमुदयस्थानं भवतीत्यर्थः १-२-४-५-६-७-८-९-१० । एतानि चानिवृत्तिबादरसंपरायगुणस्थानकादारभ्य पश्चानुपूर्व्या किंचिद्भाव्यते । तत्र चतुर्णां संज्वलनानामन्यतमस्योदये एकमुदयस्थानं, तदेव वेदत्रयान्यतमवेदोदयप्रक्षेपे द्विकं, तत्रापि हास्यरतिरूपयुगलप्रक्षेपे चतुष्कं, तत्रैव भयप्रक्षेपात्पञ्चकं, जुगुप्साप्रक्षेपात् षट्कं, तत्रैव चतुर्णां प्रत्याख्यानावरणकषायाणामन्यतमस्य प्रक्षेपे सप्तकं, तत्रैव चाप्रत्याख्यानावरणकषायाणामन्यतमस्य प्रक्षेपेऽष्टकं, तत्रैव चतुर्णामनन्तानुबन्धिकषायाणामन्यतमस्य प्रक्षेपे नवकं, तत्रैव मिथ्यात्वप्रक्षेपे दशकं। एतच्च सामान्येनोक्तं विशेषतस्त्वग्रे सूत्रकृदेव सप्रपञ्चं कथयिष्यतीति तत्रैव भावयिष्ये ॥ १२ ॥

तदेवमुक्तान्युदयस्थानानि, सम्प्रति सत्तास्थानानि प्रतिपिपादयिषुराह–

अट्ठग सत्तग छच्चउ तिगदुगएगाहिया भवे वीसा। तेरस बारिक्कारस एत्तो पंचाइएक्कूणा ॥ १३ ॥

संतस्स पगइठाणाइँ ताणि मोहस्स हुंति पन्नरस। बंधोदयसंते पुण भंगविगप्पा बहू जाण ॥ १४ ॥

---

१ उदए ठाणाणि नव हुंति।

टीका–विंशतिरष्टकसप्तकषट्कचतुस्त्रिद्व्येकाधिका, तथा त्रयोदश द्वादश एकादश, अत एकादशात् सत्तास्थानात् एकोनानि एकैकोनानि पंचादीनि, सत्तायाः प्रकृतिस्थानानि मोहनीयस्यावगन्तव्यानि, तानि च सर्वसंख्यया पंचदश भवन्ति। इदमत्र तात्पर्यम्–मोहनीये पञ्चदश सत्ताप्रकृतिस्थानानि । तद्यथा–अष्टाविंशतिः सप्तविंशतिः षड्विंशतिः चतुर्विंशतिः त्रयोविंशतिः द्वाविंशतिः एकविंशतिः त्रयोदश द्वादश एकादश पञ्च चतस्रः तिस्रः द्वे एका च। तत्र सर्वप्रकृतिसमुदायोऽष्टाविंशतिः, ततः सम्यक्त्वे उद्वलिते सप्तविंशतिः, ततोऽपि सम्यग्मिथ्यात्वे उद्वलिते षड्विंशतिः, अनादिमिथ्यादृष्टेर्वा षड्विंशतिः, अष्टाविंशतिसत्कर्मणोऽनन्तानुवन्धिचतुष्टयक्षये चतुर्विंशतिः, ततोऽपि मिथ्यात्वे क्षपिते त्रयोविंशतिः, ततोऽपि सम्यग्मिथ्यात्वे क्षपिते द्वाविंशतिः, ततोऽपि सम्यक्त्वे क्षपिते एकविंशतिः, ततोऽष्टस्वप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्ञिकेषु कषायेषु क्षीणेषु त्रयोदश, ततोऽपि नपुंसकवेदे क्षपिते द्वादश, ततोऽपि स्त्रीवेदे क्षपिते एकादश, ततः षट्सु नोकषायेषु क्षीणेषु पंच, ततोऽपि पुरुषवेदे क्षपिते चतस्रः, ततोऽपि संज्वलनक्रोधे क्षपिते तिस्रः,ततः संज्वलनमाने क्षपिते द्वे, ततोऽपि संज्वलनमायायां क्षपितायामेका प्रकृतिः सतीति । तदेवमुक्तानि सत्तास्थानानि । एतेषु पुनर्बन्धोदयसत्तास्थानेषु प्रत्येकं संवेधेन च वहवो भंगा भवन्ति, तांश्च भंगान् यथावत् प्रतिपाद्यमानान् सम्यक् जानीहि ॥ १४ ॥

तत्र प्रथमतो वन्धस्थानेषु भंगनिरूपणार्थमाह–

**छब्बावीसे चउ इगवीसे सत्तरस तेरसे दो दो । नवबंधगे वि दोन्नि उ एक्केक्कमओ परं भंगा ॥ १५ ॥**

टीका–द्वाविंशतौ द्वाविंशतिबन्धे षट् विकल्पा भवन्ति । तत्र द्वाविंशतिरियं–मिथ्यात्वं षोडश कषायास्त्रयाणां वेदा-

नामन्यतमो वेदः हास्यरतियुगलारतिशोकयुगलयोरन्यतरद्युगलं भयं जुगुप्सा च। अत्र भङ्गाः षट्, तथाहि–हास्यरतियुगले अरतिशोकयुगले च प्रत्येकं द्वाविंशतिः प्राप्यते इति द्वौ भङ्गौ, तौ च द्वौ भंगौ त्रिष्वपि वेदेषु प्रत्येकं विकल्पेन प्राप्येते इति द्वौ त्रिभिर्गुणितौ जाताः षट्। सैव द्वाविंशतिर्मिथ्यात्वेन विना एकविंशतिः, नवरमत्र द्वयोर्वेदयोरन्यतरो वेद इति वक्तव्यं, यत एकविंशतिबन्धकाः सासादनसम्यग्दृष्टयः, ते च स्त्रीवेदं वा बध्नन्ति, पुरुषवेदं वा, न नपुंसकवेदं, नपुंसकवेदबन्धस्य मिथ्यात्वोदयनिबन्धनत्वात्। सासादनानां च मिथ्यात्वोदयाभावात्। अत्र च भङ्गाश्चत्वारः, तथा चाह–'चउ एगवीस त्ति' एकविंशतौ एकविंशतिबन्धे चत्वारो भङ्गाः। तत्र हास्यरतियुगलारतिशोकयुगलाभ्यां प्रागिव द्वौ भङ्गौ, तौ च प्रत्येकं स्त्रीवेदे पुरुषवेदे च प्राप्येते इति द्वौ द्वाभ्यां गुणितौ जाताश्चत्वारः। सैव चैकविंशतिरनन्तानुबन्धिचतुष्टयबन्धाभावे सप्तदश, नवरमत्र वेदेषु मध्ये पुरुषवेद एवैको वक्तव्यो न स्त्रीवेदोऽपि, यतः सप्तदशबन्धकाः सम्यग्मिथ्यादृष्टयोऽविरतसम्यग्दृष्टयो वा, न चैते स्त्रीवेदं बध्नन्ति, तद्बन्धस्यानन्तानुबन्ध्युदयनिमित्तत्वात्। सम्यग्मिथ्यादृष्ट्यादीनां चानन्तानुबन्ध्युदयाभावात्। अत्र च हास्यरतियुगलारतिशोकयुगलाभ्यां प्रागिव द्वौ भङ्गौ, ता एव सप्तदश प्रकृतयोऽप्रत्याख्यानकषायचतुष्टयरहितास्त्रयोदश। अत्रापि प्रागिव द्वौ भङ्गौ, तथा चाह–'सत्तरस तेरसे दो दो' सप्तदशबन्धे त्रयोदशबन्धे च प्रत्येकं द्वौ द्वौ भंगौ। ता एव त्रयोदश प्रत्याख्यानावरणकषायचतुष्टयरहिता नव। अत्रापि तावेव द्वौ भङ्गौ, यत आह–'नवबंधगे उ दोन्नि उ' नवबन्धके द्वौ भङ्गौ, तौ च प्रमत्ते द्वावपि द्रष्टव्यौ, अप्रमत्तापूर्व-

करणयोस्त्वेक एव भंगः, तत्रारतिशोकरूपस्य युगलस्य बन्धाभावात् । तथा ता एव नव हास्यरतियुगलभयजुगुप्सा बन्धव्यवच्छेदे पञ्च, अत्रैको भंगः । एवं चतुस्त्रिद्व्येकबन्धेष्वपि प्रत्येकमेकैक एव भंगो वाच्यः, तथा चाह–'एक्केक्कमओ परं भंगा' अतो नवकबन्धात्परं पञ्चादिषु भंगाः प्रत्येकमेकैकः एकैव संख्या वेदितव्या । मकारस्त्वलाक्षणिकः । अमीषां च द्वाविंशत्यादिबन्धस्थानानां कालप्रमाणमिदं–द्वाविंशतिबन्धस्य कालोऽभव्यानधिकृत्य अनाद्यपर्यवसितः, भव्यानधिकृत्यानादिसपर्यवसितः, सम्यक्त्वपरिभ्रष्टानधिकृत्य जघन्येनान्तर्मुहूर्तप्रमाणः उत्कर्षतो देशोनापार्धपुद्गलपरावर्तः । एकविंशतिबन्धस्य कालो जघन्येन समयमात्रः, उत्कर्षतः षडावलिकाः । सप्तदशबन्धस्य कालो जघन्येनान्तर्मुहूर्तमुत्कर्षतः किंचित्समधिकानि त्रयस्त्रिंशत्सागरोपमाणि । तथाहि–त्रयस्त्रिंशत्सागरोपमाणि अनुत्तरसुरस्य प्राप्यन्ते, अनुत्तरसुरभवाच्च च्युत्वा यावदद्यापि देशविरतिं सर्वविरतिं वा न प्रतिपद्यते तावत्सप्तदशबन्ध एवेति किंचित्समधिकानि त्रयस्त्रिंशत्सागरोपमाणि । त्रयोदशबन्धस्य च कालः प्रत्येकं जघन्येनान्तर्मुहूर्तमुत्कर्षतस्तु देशोना पूर्वकोटी, यतस्त्रयोदशबन्धो देशविरतौ, नवकबन्धकस्तु सर्वविरतौ, देशविरतिः सर्वविरतिश्चोत्कर्षतोऽपि देशोनपूर्वकोटिप्रमाणा, पंचादिषु पुनर्बन्धस्थानेषु कालः प्रत्येकं जघन्येनैकं समयमुत्कर्षतश्चान्तर्मुहूर्तम् । एकसमयता कथमिति चेदुच्यते–उपशमश्रेण्यां पञ्चविधं बन्धमारभ्य द्वितीये समये कश्चित्कालं कृत्वा देवलोकं याति, देवलोके च गतः सन् अविरतो भवति, अविरतत्वे च सप्तदशबन्ध इत्येकसमयता । एवं चतुर्विधबन्धादिष्वपि भावनीयं ॥ १९ ॥

तदेव कृता कालनिरूपणा, सम्प्रत्येतेषामेव बन्धस्थानाना मध्ये कस्मिन् कियन्ति प्रागुक्तान्युदयस्थानानि भवन्तीत्येतन्निरूप्यते–

**दस बावीसे नव एक्कवीस सत्ताइ उदयठाणाइं । छाई नव सत्तरसे तेरसि (रे) पंचाइ अठेव ॥ १६ ॥**

**चत्तारिमाइ नवबंधगेसु उक्कोस सत्तमुदयंसा । पंचविहबंधगे पुण उदओ दोण्हं मुणेयव्वो ॥ १७ ॥**

टीका–द्वाविंशतौ द्वाविंशतिबन्धे सप्तादीनि दशपर्यन्तानि चत्वारि उदयस्थानानि भवन्ति । तद्यथा–सप्त, अष्टौ, नव, दश । तत्र मिथ्यात्व अप्रत्याख्यानावरणप्रत्याख्यानावरणसञ्ज्वलनक्रोधादीनामन्यतमे त्रयः क्रोधादिका', यत एकस्मिन् क्रोधे वेद्यमाने सर्वेऽपि क्रोधा वेद्या., समानजातीयत्वात् । एव मानमायालोभा अपि द्रष्टव्याः । न च युगपत् क्रोधमानमायालोभानामुदय परस्परविरोधात् ऽत्यन्यतमे त्रयोऽत्र गृह्यन्ते । तथा त्रयाणा वेदानामन्यतमो वेद , हास्यरतियुगलारतिशोकयुगलयोरन्यतरत् युगल, एतासा सप्तप्रकृतीना द्वाविंशतिबन्धके मिथ्यादृष्टावुदयो ध्रुव' । अत्र भगाश्चतुर्विंशति , तद्यथा–हास्यरतियुगले अरतिशोकयुगले च प्रत्येकमेकैको भगः प्राप्यत इति द्वौ भगौ, तौ च प्रत्येकं त्रिष्वपि वेदेषु प्राप्येते, इति द्वौ भंगौ त्रिभिर्गुणितौ जाता षट् । ते च प्रत्येक क्रोधादिषु चतुर्षु प्राप्यन्ते इति षट् चतुर्भिर्गुणिता जाताश्चतुर्विंशतिः । तस्मिन्नेव सप्तके भये वा जुगुप्साया वा अनन्तानुबन्धिनि वा प्रक्षिप्ते अष्टानामुदय' । अत्र भयादौ प्रत्येकमेकैका चतुर्विंशति प्राप्यते इति तिस्र. चतुर्विंशतयोऽत्र द्रष्टव्याः । ननु मिथ्यादृष्टेरवश्यमनन्तानुबन्धिनामुदयः सम्भवति तत् कथं मिथ्यादृष्टि' सप्तोदये अष्टोदये वा कस्मिश्चिदनन्तानुबन्ध्युदयरहित. प्रोक्त ? उच्यते–

इह सम्यग्दृष्टिना सता केनचित् प्रथमतोऽनन्तानुबन्धिनो विसंयोजिताः एतावतैव च स विश्रान्तो न मिथ्यात्वादिक्षयाय उद्युक्तवान् तथाविध सामग्र्यभावात्, ततः कालान्तरे मिथ्यात्वं गतः सन् मिथ्यात्वप्रत्ययतो भूयोऽप्यनन्तानुबन्धिनो बध्नाति, ततो बन्धावलिकां यावन्नाद्याप्यतिक्रामति तावत्तेषामुदयो न भवति, बन्धावलिकायां त्वतिक्रान्तायां भवेदिति। ननु कथं बन्धावलिकातिक्रमेऽप्युदयः संभवति ? अबाधाकालक्षये सत्युदयः, अबाधाकालश्चानन्तानुबन्धिनां जघन्येनान्तर्मुहूर्तमुत्कर्षेण तु चत्वारि वर्षसहस्राणीति, नैष दोषः, यतो बन्धसमयादारभ्य तेषां तावत्सत्ता भवति, सत्तायां च सत्यां बन्धे प्रवर्तमाने एतद्ग्रहणता, एतद्ग्रहणतायां च शेषसमानजातीयप्रकृतिदलिकसंक्रान्तिः,संक्रमाच्च दलिकं एतद्ग्रहप्रकृतिरूपतया परिणमते, ततः संक्रमावलिकायामतीतायामुदयः, ततो बन्धावलिकायामतीतायामुदयोऽभिधीयमानो न विरुध्यते।तथा तस्मिन्नेव सप्तके भयजुगुप्सयोः अथवा भयानन्तानुबन्धिनोः यद्वा जुगुप्सानन्तानुबन्धिनोः प्रक्षिप्तयोर्नवानामुदयः।अत्राप्येकैकस्मिन् विकल्पे प्रागुक्तप्रकारेण भंगकानां चतुर्विंशतिः प्राप्यते इति तिस्रश्चतुर्विंशतयो द्रष्टव्याः । तथा तस्मिन्नेव च सप्तके भयजुगुप्सानन्तानुबन्धिषु प्रक्षिप्तेषु दशानामुदयः । अत्रैकैव भंगकानां चतुर्विंशतिः। सर्वसंख्यया द्वाविंशतिबन्धे अष्टौ चतुर्विंशतयः। नव एक्कवीसत्ति एकविंशतौ एकविंशतिबन्धे सप्तादीनि त्रीणि उदयस्थानानि भवन्ति, तद्यथा—सप्त, अष्टौ, नव। तत्र सप्त अनन्तानुबन्ध्यप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनक्रोधादीनामन्यतमे चत्वारः क्रोधादिकाः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलं, एतासां सप्तप्रकृतीनामुदयः एकविंशतिबन्धे ध्रुवः। अत्र प्रागुक्तक्रमेण भंगकानां चतुर्विंशतिः। तथा तस्मिन्नेव सप्तके भये वा

जुगुप्साया वा हिसायामष्टानामुदय । अत्र द्वे चतुर्विंशती जगकाना । जयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोर्नवानामुदय । अत्र चैका जगकाना चतुर्विंशति• । सर्वसंख्यया एकविंशतिबन्धे चतस्रश्चतुर्विंशतय• । अयं चैकविंशतिबन्ध• सास्वादने प्राप्यते । सासादनश्च द्विधा श्रेणिगतोऽश्रेणिगतश्च।तत्राश्रेणिगत सासादनमाश्रित्यामूनि सप्तादीनि उदयस्थानान्यवगन्तव्यानि, यस्तु श्रेणिगतस्तत्रादेशद्वय।केचिदाहु•—अनन्तानुबन्धिसत्कर्मसहितोऽप्युपशमश्रेणिं प्रतिपद्यते, तेषा मतेनानन्तानुबन्धिनामप्युपशमना भवति । एतच्च सूत्रेऽपि सवादि, तदुक्त सूत्रे—"अणदसणपुसित्थीत्यादि" । श्रेणीतश्च प्रतिपतन् कश्चित्सास्वादनभावमप्युपगच्छति, सास्वादनभाव चोपगतानि यथोक्तानि त्रीणि उदयस्थानानि भवन्ति । अपरे पुनराहु —अनन्तानुबन्धिनः क्षपयित्वैवोपशमश्रेणिं प्रतिपद्यते न तत्सत्कर्मा, तेषा मतेन श्रेणीत प्रतिपतन् सासादनो न भवति तस्यानन्तानुबन्ध्युदयासंभवात्। अनन्तानुबन्ध्युदयसहितश्च सासादन इष्यते "अणताणुबधुदयरहियस्स सासणभावो न संभवइ" इति वचनात् अत्रोच्यते—यदा मिथ्यात्व प्रत्यभिमुखो न चाद्यापि मिथ्यात्वं प्रतिपद्यते तदानीमनन्तानुबन्ध्युदयरहितोऽपि सासादनस्तेषा मतेन भविष्यतीति किमत्रायुक्तं ? तदयुक्त, एव सति तस्य षडादीनि नवपर्यन्तानि चत्वार्युदयस्थानानि भवेयु , न च भवन्ति, सूत्रे प्रतिषेधात्, तैरप्यनभ्युपगमाच्च, तस्मादनन्तानुबन्ध्युदयरहित सासादनो न भवतीत्यवश्यं प्रत्येयं इति। 'छाई नव सत्तरसे' सप्तदशके बन्धस्थाने षडादीनि नवपर्यन्तानि चत्वार्युदयस्थानानि भवन्ति, तद्यथा—षट् सप्त अष्टौ नव । सप्तदशबन्धकादि द्वये सम्यग्मिथ्यादृष्टयोऽविरतसम्यग्दृष्टयश्च । तत्र सम्यग्मिथ्यादृष्टीना त्रीणि उदयस्थानानि, तद्यथा—सप्त अष्ट नव । तत्रानन्तानुबन्धिवर्जा• त्रयोऽन्यतमे क्रोधादय•, त्रयाणा वेदानामन्यतमो वेद ,

द्वयोर्युगलयोरन्यतरद्युगलं, सम्यग्मिथ्यात्वं चेति सप्तानां प्रकृतीनामुदयः सम्यग्मिथ्यादृष्टिषु ध्रुवः। अत्र प्रागुक्तक्रमेण भंगकानां चतुर्विंशतिः। अस्मिन्नेव सप्तके भये वा जुगुप्सायां प्रक्षिप्तायां सत्यां अष्टानामुदयः, अत्र द्वे चतुर्विंशती भंगकानां। भयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोर्नवानामुदयः, अत्र चैका चतुर्विंशतिर्भंगकानां। सर्वसंख्यया सम्यग्मिथ्यादृष्टीनां चतस्रश्चतुर्विंशतयः। अविरतसम्यग्दृष्टीनां सप्तदशबन्धकानां चत्वार्युदयस्थानानि, तद्यथा—षट् सप्त अष्टौ नव। तत्रौपशमिकसम्यग्दृष्टीनां क्षायिकसम्यग्दृष्टीनां च अविरतसम्यग्दृष्टीनां अनन्तानुबन्धिवर्जास्त्रयोऽन्यतमे क्रोधादिकाः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमिति षण्णामुदयो ध्रुवः। अत्र प्रागिव भंगकानामेका चतुर्विंशतिः। अस्मिन्नेव षट्के भये वा जुगुप्सायां वा वेदकसम्यक्त्वे वा प्रक्षिप्ते सप्तानामुदयः। अत्र भयादिषु प्रत्येकमेकैका चतुर्विंशतिः प्राप्यत इति तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव षट्के भयजुगुप्सयोर्भयवेदकसम्यक्त्वयोर्जुगुप्सावेदकसम्यक्त्वयोर्वा प्रक्षिप्तयोरष्टानामुदयः। तत्राप्येकैकस्मिन् विकल्पे भंगकानां चतुर्विंशतिः प्राप्यत इति तिस्रश्चतुर्विंशतयः। भयजुगुप्सावेदकसम्यक्त्वेषु च युगपत्प्रक्षिप्तेषु नवानामुदयः, अत्र चैका भंगकानां चतुर्विंशतिः। अविरतसम्यग्दृष्टीनां सर्वाश्चतुर्विंशतयोऽष्टौ, सर्वसंख्यया सप्तदशबन्धे द्वादश चतुर्विंशतयः। 'तेरे पंचाइ अट्ठेव' त्रयोदशके बन्धस्थाने पञ्चादीन्यष्टपर्यन्तानि चत्वार्युदयस्थानानि भवन्ति, तद्यथा—पंच षट् सप्त अष्टौ। तत्र प्रत्याख्यानावरणसंज्वलनक्रोधादीनामन्यतमौ द्वौ क्रोधादिकौ, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमित्येतासां पञ्चानां प्रकृतीनामुदयः त्रयोदशबन्धे ध्रुवः। अत्र प्रागुक्तक्रमेण भंगकानामेका चतुर्विंशतिः। भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिन् प्रक्षिप्ते षण्णा-

मुदय', अत्र भयादित्रिस्त्रयो विकल्पाः, एकैकस्मिन् विकल्पे भंगकाना चतुर्विंशतिरिति तिस्रश्चतुर्विंशतयः । तथा तस्मिन्नेव पचके भयजुगुप्सयोरथवा भयवेदकसम्यक्त्वयोर्यद्वा जुगुप्सावेदकसम्यक्त्वयो' प्रक्षिप्तयो. सप्तानामुदय' । अत्रापि तिस्रश्चतुर्विंशतयो भंगकाना। भयजुगुप्सावेदकसम्यक्त्वेषु पुनर्युगपत्प्रक्षिप्तेष्वष्टानामुदय', अत्र चैका चतुर्विंशति-र्भंगकाना, सर्वसख्यया त्रयोदशबन्धे अष्टौ चतुर्विंशतय"। चत्तारीत्यादि–नवबन्धकेषु प्रमत्तादिषु चतुरादीनि सप्तपर्यन्तानि चत्वारि। 'उदयसत्ति' उदयरूपविभागस्थानानि उदयस्थानानीत्यर्थ । तद्यथा–चतस्रः पञ्च षट् सप्त। तत्र सज्वलनक्रोधादीनामन्यतम एक क्रोधादिक', त्रयाणा वेदानामन्यतमो वेद , द्वयोर्युगलयोरन्यतरद्युगलमिति । अथैतासा चतसृणा प्रकृतीनामुदय क्षायिकसम्यग्दृष्टिषु वा औपशमिकसम्यग्दृष्टिषु वा प्रमत्तादिषु च ध्रुव , अत्र चैका भंगकाना चतुर्विंशति । अस्मिन्नेव चतुष्के भये वा जुगुप्साया वा वेदकसम्यक्त्वे वा प्रक्षिप्ते पचानामुदयः, अत्र भंगकानां तिस्रश्चतुर्विंशतय ।तथा तस्मिन्नेव चतुष्के भयजुगुप्सयोरथवा भयवेदकसम्यक्त्वयोर्यद्वा जुगुप्सावेदकसम्यक्त्वयो प्रक्षिप्तयो षण्णामुदय , अत्रापि तिस्रश्चतुर्विंशतयो भंगकाना। भयजुगुप्सावेदकसम्यक्त्वेषु तु युगपत्प्रक्षिप्तेषु सप्तानामुदय , अत्र भंगकानामेका चतुर्विंशति', सर्वसख्यया नवबन्धके अष्टौ चतुर्विंशतय । 'पचविहेत्यादि'. पचविधबन्धकेषु पुनरुदयो द्वयो' प्रकृत्योर्ज्ञातव्य , प्रकृतिद्वयात्मकमेकमुदयस्थानमिति भाव । तत्र चतुर्णा सज्वलनानामेकतम' क्रोधादिः, त्रयाणां वेदानामन्यतमो वेदः, अत्रापि त्रिभिर्वेदैश्चतुर्भिश्च सज्वलनैर्द्वादश भंगाः ॥ १७ ॥

एत्तो चउ बंधाई एक्केक्कुदया हवंति सव्वे वि। बंधोवरमे वि तहा उदयाभावे वि वा होज्जा ॥ १८ ॥

टीका–इतः पञ्चकबन्धादनन्तरं चतुर्बन्धादयः सर्वेऽपि प्रत्येकमेकैकोदयाः एकैकप्रकृत्युदया भवन्ति ज्ञातव्याः, तथाहि–चतुर्बन्धो भवति पुरुषवेदबन्धव्यवच्छेदे सति, पुरुषवेदस्य च युगपत् बन्धोदयौ व्यवच्छिद्येते । ततश्चतुर्विधबन्धकाले एकोदय एव भवति, स च चतुर्णां संज्वलनानामन्यतमः । अत्र चत्वारो भंगाः । यतः कोऽपि संज्वलनक्रोधेनोदयप्राप्तेन श्रेणिं प्रतिपद्यते, कोऽपि संज्वलनमानेन, कोपि संज्वलनमायया, कोऽपि संज्वलनलोभेनेति चत्वारो भंगाः । इह केचिच्चतुर्विधबन्धसंक्रमणकाले त्रयाणां वेदानामन्यतमस्य वेदस्योदयमिच्छन्ति, ततस्तन्मतेन चतुर्विधबन्धकस्यापि प्रथमकाले द्वादश द्विकोदयभंगा लभ्यन्ते । तदुक्तं पञ्चसंग्रहमूलटीकायाम्–"चतुर्विधबन्धकस्याप्याद्यविभागे त्रयाणां वेदानामन्यतमस्य वेदस्योदयं केचिदिच्छन्ति, अतश्चतुर्विधबन्धकस्यापि द्वादश द्विकोदयान् जानीहीति" । तथा च सति तेषां मतेन सर्वसंख्यया द्विकोदये चतुर्विंशतिर्भंगा अवसेयाः । संज्वलनक्रोधव्यवच्छेदे च सति त्रिविधो बन्धः, तत्राप्येकविध एवोदयः । अत्र त्रयो भंगाः । नवरमत्र संज्वलनक्रोधवर्जानां त्रयाणामन्यतम इति वक्तव्यं, यतः संज्वलनक्रोधोदये सत्यवश्यं संज्वलनक्रोधस्य बन्धेन भवितव्यं "जे वेयइ ते बंधइ" इति वचनात् । तथा च सति चतुर्विध एव बन्धः प्रसक्तः । ततः संज्वलनक्रोधस्य बन्धे व्यवच्छिद्यमाने उदयोऽपि व्यवच्छिद्यत इति त्रिविधेऽपि बन्धे एकविध उदयस्त्रयाणामन्यतम इति वक्तव्यः । संज्वलनमानबन्धव्यवच्छेदे द्विविधो बन्धः, तत्राप्येकविध एवोदयः, केवलं स मायालोभयोरन्यतर इति वक्तव्यः, युक्तिः प्रागिवात्राप्यनुसरणीया, अत्र च द्वौ भंगौ । संज्वलनमायाबन्धव्यवच्छेदे एकस्य संज्वलनलोभस्य बन्धः तस्यैव चोदयः, अत्रैको भंगः । इह यद्यपि चतुरादिषु बन्धस्थानेषु संज्वलनानामुदयमधिकृत्य न कश्चिद्वि-

शेष , तथापि बन्धस्थानापेक्षया भेदोऽस्तीति भंगाः पृथगग्रे गणयिष्यन्ति । तथा बन्धोपरमे बन्धाभावेऽपि मोहनीयस्य सूक्ष्मसंपरायगुणस्थानके एकविध उदयो भवति, स च संज्वलनलोभस्यावसेयः, तद्गतसूक्ष्मकिट्टिवेदनात्, ततः परमुदयाभावेऽपि मोहनीयोदयेऽपगतेऽपि उपशान्तकषायमधिकृत्य मोहनीयं संभवति, एतच्च प्रसंगागतमिति कृत्वोक्तं, अन्यथा बन्धस्थानोदयस्थानेषु परस्परसंवेधेन चिन्त्यमानेषु नेदं सत्कर्मताभिधानमुपयोगीति ॥ १८ ॥

संप्रति दशादिषु एकपर्यवसानेषु उदयस्थानेषु यावतो भंगा संभवन्ति तावन्तो निर्दिदिक्षुराह–

**एक्कग छक्केक्कारस दस सत्त चउक्क एक्कग चेव । एए चउवीसगया चउवीसदुगेक्कमेक्कारा ॥ १९ ॥**

टीका–इह दशादीन्युदयस्थानान्यधिकृत्य यथासंख्यं संख्यापदयोजना कर्तव्या, सा चैव–दशोदये एका चतुर्विंशतिः, नवोदये षट्, तद्यथा–द्वाविंशतिबन्धे तिस्रः, एकविंशतिबन्धे मिश्राविरतिसम्यग्दृष्टिसप्तदशबन्धे च प्रत्येकमेकैका । अष्टोदये एकादश–तत्र द्वाविंशतिबन्धे अविरतिसम्यग्दृष्टिबन्धे च प्रत्येकं तिस्रः तिस्रः । एकविंशतिबन्धे मिश्रसप्तदशबन्धे च प्रत्येकं द्वे द्वे । त्रयोदशबन्धे चैका । तथा सप्तोदये दश–तत्र द्वाविंशतिबंधे एकविंशतिबंधे मिश्रसप्तदशबंधे च प्रत्येकमेकैका । अविरतसम्यग्दृष्टिसप्तदशबन्धे त्रयोदशबन्धे च प्रत्येकं तिस्रः तिस्रः । नवकबन्धे चैका । तथा षडुदये सप्त–तत्राविरतसम्यग्दृष्टिसप्तदशबन्धे चैका । त्रयोदशबन्धे नवबन्धे च प्रत्येकं तिस्रः तिस्रः । तथा पञ्चकोदये चतस्रः–तत्र त्रयोदशबन्धे एका । नवबन्धे तिस्रः । चतुष्कोदये एका चतुर्विंशतिः'–एए चउवीसगय त्ति' एते अनन्तरोक्ता एकादिकाः संख्याविशेषाश्चतुर्विंशतिगताश्चतुर्विंशत्यभिधायकाः, एता अनन्तरोक्ताश्चतुर्विंशतयो ज्ञातव्या इत्यर्थः ।

एताश्च सर्वसंख्यया चत्वारिंशत्। तथा 'चउवीस छुगे त्ति' द्विकोदये चतुर्विंशतिरेका भंगकानां। एतच्च मतान्तरेणोक्तं, अन्यथा स्वमते द्वादशैव भंगा वेदितव्याः। 'एक्कमेक्कार त्ति' एकोदये एकादश भंगाः। ते चैवं—चतुर्विधबन्धे चत्वारः, त्रिविधबन्धे त्रयः, द्विविधबन्धे द्वौ, एकविधबन्धे एकः, बन्धाभावे चैक इति ॥ १ए ॥

संप्रत्येतेषामेव भंगानां विशिष्टतरसंख्यानिरूपणार्थमाह—

**नवपंचाणउइसए उदयविगप्पेहिँ मोहिया जीवा।**

टीका—इह दशादिषु द्विकपर्यवसानेषु उदयस्थानेषु उदयस्थानभंगकानामेकचत्वारिंशत् चतुर्विंशतयो लब्धाः, तत एकचत्वारिंशच्चतुर्विंशत्या गुण्यते, गुणितायां च सत्यां जातानि नव शतानि चतुरशीत्यधिकानि। ततः तत्रैकोदयभंगा एकादश प्रक्षिप्यन्ते, तेषु च प्रक्षिप्तेषु नव शतानि पञ्चनवत्यधिकानि भवन्ति। एतावद्भिरुदयस्थानविकल्पैर्यथायोगं सर्वे संसारिणो जीवा मोहिता मोहमापादिता विज्ञेयाः ॥

संप्रति पदसंख्यानिरूपणार्थमाह—

**अउणत्तरिएगुत्तरिं पयविंदसएहिँ विन्नेया ॥ २० ॥**

टीका—इह पदानि नाम मिथ्यात्वं अप्रत्याख्यानक्रोधः प्रत्याख्यानावरणक्रोध इत्येवमादीनि। ततो वृन्दानां दशाद्युदयस्थानरूपाणां पदानि पदवृन्दानि। आर्षत्वात् राजदन्तादिषु (श्रीम० ना० प्र० ९ पा० ३० सू०) मध्ये पाठाभ्युपगमाद्वा वृन्दशब्दस्य परनिपातः। तेषां शतैरेकसप्तत्यधिकैकोनसप्ततिसंख्यैर्मोहिताः संसारिणो जीवा विज्ञेयाः, एतावत्संख्याभिः

कर्मप्रकृतिभिर्यथायोग मोहिता॰ ससारिणो जीवा ज्ञातव्या इत्यर्थ॰ । अथ कथमेकसप्तत्यधिकैकोनसप्ततिसख्यानि पदाना शतानि भवन्ति ? उच्यते–इह दशोदये दशपदानि, दशप्रकृतय उदयमागता इत्यर्थ । एव नवोदयादिष्वपि नवादीनि पदानि भावनीयानि । ततो दशोदय एकादशभिर्गुण्यते, नवोदयाश्च षड् नवभि ,अष्टोदयश्च एकादश अष्टभि ,सप्तोदया दश सप्तभि॰, षडुदया सप्त षड्भि , पञ्चकोदयाश्चत्वार पञ्चभि॰, चतुरुदय एकश्चतुर्भि॰, द्विकोदय एको द्वाभ्या, गुणयित्वा चैते सर्वेऽपि एकत्र मील्यन्ते, ततो जाते द्वे शते नवत्यधिके । एतेषु च प्रत्येकमेकैकचतुर्विंशतिर्भगकाना प्राप्यत इति भूयश्चतुर्विंशत्या गुण्यन्ते, गुणितेषु च सत्सु एकोदयभगपदान्येकादश प्रक्षिप्यन्ते, ततो यथोक्तसख्यान्येव पदाना शतानि भवन्ति । इय चोदयस्थानसख्या पदसख्या च मतान्तरेण चतुर्विधवन्धसक्रमणकाले द्विकोदये द्वादश भगा उक्तास्तानधिकृत्य वेदितव्या ॥ २० ॥ यदा पुनरेते नाधिक्रियन्ते तदा इयमुदयस्थानपदसख्या ॥

**नवतेसीयसएहि उदयविगप्पेहिँ मोहिया जीवा। अउणत्तरिसीयाला पयविंदसएहिँ विन्नेया ॥२१॥**

टीका–उदयविकल्पैस्त्र्यशीत्यधिकनवशतसख्यै॰ तथा दशोदयादिरूपवृन्दान्तर्गताना पदाना शतै॰ सप्तचत्वारिशदधिकैकोनसप्ततिसख्यैर्यथायोग सर्वेऽपि जीवाः ससारिणो जीवा मोहिता मोहमापादिता विज्ञेया॰ । तथोदयस्थानेषु पूर्वोक्तप्रकारेण परिसख्यायमानेषु ये मतान्तरेणोक्ताश्चतुर्विधवन्धस्थाने द्विकोदये द्वादश भगास्तेऽपसार्यन्ते, ततो नव शतानि अशीत्यधिकान्युदयविकल्पाना भवन्ति । पदेषु च परिसख्यायमानेषु मतान्तरेणोक्तानि द्वादशभंगगतानि चतुर्विंशतिपदानि अपनीयन्ते, ततो यथोक्तपदाना संख्या भवति । इह च दशादय उदयास्तद्भंगाश्च जघन्यत एक-

सामायिका उत्कर्षत आन्तर्मौहूर्तिकाः, तथाहि–चतुरादिषु दशोदयपर्यन्तेष्ववश्यमन्यतमो वेदोऽन्यतरद्युगलयोश्च मध्येऽन्यतरदवश्यं मुहूर्तादारतः परावर्तते। तदुक्तं पञ्चसंग्रहमूलटीकायां–"वेदेन युगलेन वा अवश्यं मुहूर्तादारतः परावर्तितव्यमिति"। तत उत्कर्षतः चतुष्कोदयादयः सर्वेऽप्यान्तर्मौहूर्तिका द्विकोदयैककोदयाश्च आन्तर्मौहूर्तिकाः सुप्रतीता एव। तथा यदा विवक्षिते उदये भंगे वा एकं समयं वर्तित्वा द्वितीये समये गुणस्थानान्तरं गच्छति तदावश्यं बन्धस्थानभेदात् गुणस्थानभेदात् स्वरूपतो वा भिन्नमुदयान्तरं भंगान्तरं वा यातीति सर्वेऽप्युदया भंगाश्च जघन्यत एकसामायिकाः ॥ २१ ॥

तदेवं बन्धस्थानानां सहोदयस्थानैः परस्परसंवेध उक्तः, संप्रति सत्तास्थानैः सह तमभिधित्सुराह–

तिन्नेव उ बावीसे इगवीसे अट्ठवीस सत्तरसे। छच्चेव तेर नव बंधगेसु पंचेव ठाणाइं ॥ २२ ॥

पंचविह चउविहेसु छ छक्क सेसेसु जाण पंचेव। पत्तेयं पत्तेयं चत्तारि उ बंध वोच्छेए ॥ २३ ॥

टीका–द्वाविंशतौ द्वाविंशतिबन्धे त्रीणि सत्तास्थानानि। तद्यथा–अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिश्चेति। तथाहि–द्वाविंशतिबन्धे मिथ्यादृष्टेश्चत्वार्युदयस्थानानि, तद्यथा–सप्त अष्टौ नव दश। तत्र सप्तोदयेऽष्टाविंशतिरेकं सत्तास्थानं, यतः सप्तोदयोऽनन्तानुबन्ध्युदयाभावे भवति। अनन्तानुबन्ध्युदयरहितश्च येन पूर्वं सम्यग्दृष्टिना सता अनन्तानुबन्धिन उद्वलिताः ततः कालान्तरेण परिणामवशतो मिथ्यात्वं गतेन भूयोऽपि मिथ्यात्वप्रत्ययेन तेऽनन्तानुबन्धिनो बद्धुमार-

न्यन्ते । स एव मिथ्यादृष्टिर्न्धावलिकामात्रकालं यावदनन्तानुबन्ध्युदयरहित प्राप्यते, नान्य । स चाष्टाविंशतिसत्कर्मे-त्यष्टाविंशतिरेवैक सप्तोदये सत्तास्थान । अष्टोदये त्रीण्यपि सत्तास्थानानि यतोऽष्टोदयो द्विधा अनन्तानुबन्ध्युदयरहि-तोऽनन्तानुबन्ध्युदयसहितश्च, तत्र योऽनन्तानुबन्ध्युदयरहितोऽष्टोदयस्तत्र प्रागुक्तयुक्तेरष्टाविंशतिरेव सत्तास्थानं । अन-न्तानुबन्ध्युदयसहिते तु त्रीण्यपि सत्तास्थानानि, तत्र यावन्नाद्यापि सम्यक्त्वमुद्वलति तावदष्टाविंशति सम्यक्त्वे उद्व-लिते सप्तविंशति । सम्यग्मिथ्यात्वेऽप्युद्वलिते षड्विंशति, अनादिमिथ्यादृष्टेर्वा षड्विंशति । एव नवोदयेऽप्यनन्ता-नुबन्ध्युदयरहितेऽष्टाविंशतिरेव, अनन्तानुबन्ध्युदयसहिते तु त्रीण्यपि । दशोदयस्त्वनन्तानुबन्ध्युदयसहित एव भवति, ततस्तत्रापि त्रीणि सत्तास्थानानि भावनीयानि । 'एगवीसे अडवीस त्ति' एकविंशतौ एकविंशतिबन्धेऽष्टाविंशतिरेक सत्तास्थान । एकविंशतिबन्धो हि सासादनसम्यग्दृष्टेर्भवति, सासादनत्वं च जीवस्यौपशमिकसम्यक्त्वात्प्रच्यवमानस्यो-पजायते । सम्यक्त्वगुणेन च मिथ्यात्व त्रिधा कृत, तद्यथा–सम्यक्त्व मिश्र मिथ्यात्व चेति । ततो दर्शनत्रिकस्यापि सत्कर्मतया प्राप्यमाणत्वादेकविंशतिबन्धे त्रिष्वप्युदयस्थानेष्वष्टाविंशतिरेक सत्तास्थान भवति । 'सत्तरसे छच्चेव' सप्त-दशबन्धे षट् सत्तास्थानानि, तद्यथा–अष्टाविंशति, सप्तविंशति, चतुर्विंशतिः, त्रयोविंशति, द्वाविंशति, एकविंश-तिश्चेति । सप्तदशबन्धो हि द्वयाना भवति, तद्यथा–सम्यग्मिथ्यादृष्टीनामविरतसम्यग्दृष्टीना च । तत्र सम्यग्मिथ्या-दृष्टीना त्रीण्युदयस्थानानि, तद्यथा–सप्त अष्टौ नव । अविरतसम्यग्दृष्टीना चत्वारि, तद्यथा–षट्, सप्त, अष्टौ, नव । तत्र षडुदयोऽविरतानामौपशमिकसम्यग्दृष्टीना क्षायिकसम्यग्दृष्टीना वा प्राप्यते । तत्रौपशमिकसम्यग्दृष्टीना द्वे सत्तास्थाने,

तद्यथा–अष्टाविंशतिः चतुर्विंशतिश्च । तत्राष्टाविंशतिः प्रथमसम्यक्त्वोत्पादकाले, उपशमश्रेणिप्रतिपाते तु उपशान्ता-
नामनन्तानुबन्धिनामष्टाविंशतिः, उद्वलितानन्तानुबन्धिनां तु चतुर्विंशतिः । क्षायिकसम्यग्दृष्टीनां त्वेकविंशतिरेव ।
क्षायिकं हि सम्यक्त्वं सप्तक्षये भवति, सप्तकक्षये जन्तुरेकविंशतिसत्कर्मेति । सर्वसंख्यया षडुदये त्रीणि सत्तास्थानानि,
तद्यथा–अष्टाविंशतिः, चतुर्विंशतिः, एकविंशतिः । सप्तोदये मिश्रदृष्टीनां त्रीणि सत्तास्थानानि, तद्यथा–अष्टाविंशतिः,
सप्तविंशतिः, चतुर्विंशतिश्चेति, तत्र योऽष्टाविंशतिसत्कर्मा सन् सम्यग्मिथ्यात्वं प्रतिपद्यते, तस्याष्टाविंशतिः । येन
पुनर्मिथ्यादृष्टिना सता प्रथमं सम्यक्त्वमुद्वलितं सम्यग्मिथ्यात्वं च नाद्याप्युद्वलितुमारभ्यते अत्रान्तरे परिणामवशेन
मिथ्यात्वाद्विनिवृत्य सम्यग्मिथ्यात्वं प्रतिपद्यते तस्य सप्तविंशतिः । यः पुनः पूर्वं सम्यग्दृष्टिः सन् अनन्तानुबन्धिनो
विसंयोज्य पश्चात्परिणामवशतः सम्यग्मिथ्यात्वं प्रतिपद्यते तस्य चतुर्विंशतिः, सा च चतसृष्वपि गतिषु प्राप्यते, यत-
श्चतुर्गतिका अपि सम्यग्दृष्टयोऽनन्तानुबन्धिनो विसंयोजयन्ति । तदुक्तं कर्मप्रकृत्यां–"चउगइया पज्जत्ता तिन्नि वि
संजोयणा विजोयंते (जहाजोगं)। करणेहिं तिहि सहियाणंतरकरणं उवसमो वा ॥१॥" इति । अत्र 'तिन्नि वि त्ति' अवि-
रता देशविरताः सर्वविरता वा, यथायोगमिति अनन्तानुबन्धिविसंयोजनानन्तरं च केचित् परिणामवशतः सम्यग्मिथ्या-
त्वमपि प्रतिपद्यन्ते । ततश्चतसृष्वपि गतिषु सम्यग्मिथ्यादृष्टीनां चतुर्विंशतिः संभवति । अविरतसम्यग्दृष्टीनां तु सप्तोदये
पंच सत्तास्थानानि, तद्यथा–अष्टाविंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिश्च । तत्राष्टाविंशतिरौ-
पशमिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा । चतुर्विंशतिरप्युभयेषां नवरमनन्तानुबन्धिविसंयोजनानन्तरं सावगन्तव्या ।

त्रयोविंशतिर्द्वाविंशतिश्च वेदकसम्यग्दृष्टीनामेव । तथाहि–कश्चिन्मनुष्यो वर्षाष्टकस्योपरि वर्तमानो वेदकसम्यग्दृष्टिः क्षपणायाभ्युद्यतस्तस्यानन्तानुबन्धिषु मिथ्यात्वे च क्षपिते सति त्रयोविंशतिः, तस्यैव च सम्यग्मिथ्यात्वे क्षपिते द्वाविंशतिः । स च द्वाविंशतिसत्कर्मा सम्यक्त्वं क्षपयन् तच्चरमग्रासे वर्तमानः कश्चित्पूर्वबद्धायुष्कः कालमपि करोति, कालं च कृत्वा चतसृणां गतीनामन्यतमस्यां गतावुत्पद्यते । तदुक्तं–"पट्ठवगो उ मणुसो निट्ठवगो चउसु वि गईसु" । ततो द्वाविंशतिश्चतसृष्वपि गतिषु प्राप्यते । एकविंशतिस्तु क्षायिकसम्यग्दृष्टीनामेव, यतः सप्तकक्षये क्षायिकसम्यग्दृष्टयः । सप्तके च क्षीणे सत्तायामेकविंशतिरिति । एवमष्टोदयेऽपि मिश्रदृष्टीनामविरतसम्यग्दृष्टीनां चोक्तरूपाण्यन्यूनानतिरिक्तानि सत्तास्थानानि ज्ञातव्यानि । एवं नवोदयेऽपि, नवरं नवोदयोऽविरतानां वेदकसम्यग्दृष्टीनामेव संभवतीति कृत्वा, तत्र चत्वारि सत्तास्थानानि वाच्यानि, तद्यथा–अष्टाविंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिश्च । एतानि च प्रागिवावगन्तव्यानि । 'तेरनवबंधगेसु पंचेव ठाणाइं' त्रयोदशबन्धकेषु नवबन्धकेषु च प्रत्येकं पञ्च पञ्च सत्तास्थानानि, तद्यथा–अष्टाविंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिश्च । तत्र त्रयोदशबन्धका देशविरतास्ते च द्विधा तिर्यञ्चो मनुष्याश्च । तत्र ये तिर्यञ्चस्तेषां चतुर्ष्वप्युदयस्थानेषु द्वे एव सत्तास्थाने, तद्यथा–अष्टाविंशतिश्चतुर्विंशतिश्चेति । तत्राष्टाविंशतिरौपशमिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा । तत्रौपशमिकसम्यग्दृष्टीनां प्रथमसम्यक्त्वोत्पादकाले, तथाहि–तदानीमन्तरकरणाद्धायां वर्तमानः औपशमिकसम्यग्दृष्टिः कश्चिद्देशविरतिमपि प्रतिपद्यते, कश्चिन्मनुष्यः पुनः सर्वविरतिमपि । तदुक्तं शतकबृहच्चूर्णौ–"उवसमसम्मद्दिट्ठी अंतरकरणे वि कोइ देसविरइं कोई पमत्तभावं पि गच्छई,

सासायणो पुण न किमवि लहइ त्ति"। वेदकसम्यग्दृष्टीनां त्वष्टाविंशतिः सुप्रतीता। चतुर्विंशतिः पुनरनन्तानुबन्धिषु विसंयोजितेषु वेदकसम्यग्दृष्टीनां वेदितव्या। शेषाणि तु सर्वाण्यपि त्रयोविंशत्यादीनि सत्तास्थानानि तिरश्चां न संभवन्ति। तानि हि क्षायिकसम्यक्त्वमुत्पादयतः प्राप्यन्ते। न च तिर्यञ्चः क्षायिकसम्यक्त्वमुत्पादयन्ति, किं तु मनुष्या एव। अथ मनुष्याः क्षायिकसम्यक्त्वमुत्पाद्य यदा तिर्यक्षूत्पद्यन्ते तदा तिरश्चोऽप्येकविंशतिः प्राप्यते एव, तत्कथमुच्यते शेषाणि त्रयोविंशत्यादीनि सर्वाण्यपि न संभवन्तीति? तदयुक्तं, यतः क्षायिकसम्यग्दृष्टिस्तिर्यक्षु न संख्येयवर्षायुष्केषु मध्ये समुत्पद्यते, किं त्वसंख्येयवर्षायुष्केषु। न च तत्र देशविरतिस्तदभावाच्च न त्रयोदशबन्धकत्वं। अथ च त्रयोदशबन्धके सत्तास्थानानि चिन्त्यमानानि वर्तन्ते तत एकविंशतिरपि त्रयोदशबन्धे तिर्यक्षु न प्राप्यते। तदुक्तं चूर्णौ–"एगवीसा तिरिक्खेसु संजयासंजएसु न संभवइ। कहं? भण्णइ संखेज्जवासाउएसु तिरिक्खेसु खाइगसम्मदिट्ठी न उववज्जइ, असंखेज्जवासाउएसु उववज्जिज्जा तस्स देसविरई नत्थि त्ति"। ये च मनुष्या देशविरतास्तेषां पंचकोदये त्रीणि सत्तास्थानानि। तद्यथा–अष्टाविंशतिः, चतुर्विंशतिः, एकविंशतिश्च। षट्कोदये सप्तोदये च प्रत्येकं पञ्चापि सत्तास्थानानि। अष्टकोदये त्वेकविंशतिवर्जानि शेषाणि चत्वारि, तानि चाविरतसम्यग्दृष्ट्युक्तभावनानुसारेण भावनीयानि। एवं नवबन्धकानामपि प्रमत्ताप्रमत्तानां प्रत्येकं चतुष्कोदये त्रीणि त्रीणि सत्तास्थानानि, तद्यथा–अष्टाविंशतिः, चतुर्विंशतिः एकविंशतिश्च। पञ्चकोदये षट्कोदये च प्रत्येकं पञ्च पञ्च सत्तास्थानानि। सप्तोदये त्वेकविंशतिवर्जानि शेषाणि चत्वारि सत्तास्थानानि वाच्यानि। 'पंचविहचउविहेसु छच्छक्कत्ति' पञ्चविधे चतुर्विधे च बन्धे प्रत्येकं षट् षट् सत्तास्थानानि। तत्र पञ्चविधे बन्धे

अमूनि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिस्त्रयोदश द्वादशैकादश। तत्राष्टाविंशतिश्चतुर्विंशतिश्चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्या। एकविंशतिरुपशमश्रेण्या क्षायिकसम्यग्दृष्टे। क्षपकश्रेण्यां पुनरष्टौ कषाया यावन्न क्षीयन्ते तावदेकविंशतिः। अष्टसु कषायेषु क्षीणेषु पुनस्त्रयोदश। ततो नपुंसकवेदे क्षीणे द्वादश। तत स्त्रीवेदे क्षीणे एकादश। पञ्चादीनि तु सत्तास्थानानि पञ्चविधबन्धे न प्राप्यन्ते, यत पञ्चविधबन्ध पुरुषवेदे बध्यमाने भवति, यावच्च पुरुषवेदस्य बन्धस्तावत् षट् नोकषाया सन्ति एवेति। चतुर्विधबन्धेषु पुनरमूनि षट् सत्तास्थानानि, तद्यथा—अष्टाविंशति, चतुर्विंशति, एकविंशति, एकादश, पञ्च, चतस्र। तत्राष्टाविंशतिचतुर्विंशत्येकविंशतय उपशमश्रेण्या। एकादश पुनरेव प्राप्यन्ते। इह कश्चिन्नपुंसकवेदेन क्षपकश्रेणिं प्रतिपन्न, स च स्त्रीवेदनपुंसकवेदौ युगपत् क्षपयति, स्त्रीवेदनपुंसकवेदक्षयसमकालमेव च पुरुषवेदस्य बन्धो व्यवच्छिद्यते, तदनन्तर पुरुषवेदहास्यादिषट्के युगपत्क्षपयति, यदि पुन स्त्रीवेदेन क्षपकश्रेणीं प्रतिपद्यते, तत प्रथमतो नपुंसकवेदं क्षपयति, ततोऽन्तर्मुहूर्तेन स्त्रीवेद, स्त्रीवेदक्षयसमकालमेव च पुरुषवेदस्य बन्धव्यवच्छेद, ततस्तदनन्तर पुरुषवेदं हास्यादिषट्कं च युगपत्क्षपयति। यावच्च न क्षीयते तावदुभयत्रापि चतुर्विधबन्धे वेदोदयरहितस्य एकोदये वर्तमानस्य एकादशक सत्तास्थानं प्राप्यते। पुरुषवेदहास्यादिषट्कयोस्तु युगपत्क्षीणयोश्चतस्र प्रकृतय सत्य। एव च स्त्रीवेदेन नपुंसकवेदेन वा क्षपकश्रेणीं प्रतिपन्नस्य पचप्रकृत्यात्मकं सत्तास्थानं प्राप्यते। यस्तु पुरुषवेदेन क्षपकश्रेणिं प्रतिपद्यते, तस्य षण्णोकषायक्षयसमकाल पुरुषवेदस्य बन्धव्यवच्छेदो भवति। ततस्तस्य चतुर्विधबन्धकाले एकादशरूप सत्तास्थान न प्राप्यते, किं तु पञ्चप्रकृत्यात्मक। ताश्च पञ्च समयद्वयोनावलिकाद्विक याव-

त्सत्यो वेदितव्याः । ततः पुरुषवेदे क्षीणे चतस्रः ता अप्यन्तर्मुहूर्तं कालं यावत् सत्यः प्रतिपत्तव्याः । 'सेसेसु जाण पंचेव पत्तेयं पत्तेयं' शेषेषु त्रिविधद्विविधैकविधेषु बन्धेषु प्रत्येकं पञ्च पञ्च सत्तास्थानानि । तत्र त्रिविधे अमूनि–अष्टाविंशतिः, चतुर्विंशतिः एकविंशतिः, चतस्रः, तिस्रः । तत्रादिमानि त्रीणि उपशमश्रेणीमधिकृत्य वेदितव्यानि । शेषे तु द्वे क्षपकश्रेण्यां, ते चैवं–संज्वलनक्रोधस्य प्रथमस्थितावावलिकाशेषायां बन्धोदयोदीरणा युगपद्व्यवच्छेदमायान्ति, व्यवच्छिन्नासु च तासु बन्धस्त्रिविधो जातः । संज्वलनक्रोधस्य च तदानीं प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं चाव(चद)लिकं मुक्त्वान्यत्सर्वं क्षीणं, तदपि च समयद्वयोनावलिकाद्विकमात्रेण कालेन क्षयमुपयास्यति । यावच्च न याति तावच्चतस्रः प्रकृतयः त्रिविधबन्धे सत्यः । क्षीणे तु तस्मिंस्तिस्रः, ताश्चान्तर्मुहूर्तं कालं यावदवगन्तव्याः । द्विविधबन्धे पुनरमूनि पञ्च सत्तास्थानानि, तद्यथा–अष्टाविंशतिः, चतुर्विंशतिः, एकविंशतिः, तिस्रः, द्वे च । तत्राद्यानि त्रीणि प्रागिव । शेषे तु द्वे क्षपकश्रेण्यां ते चैवं–संज्वलनमानस्य प्रथमस्थितौ आवलिकामात्रशेषायां संज्वलनमानस्य बन्धोदयोदीरणा युगपद्व्यवच्छिद्यन्ते, तासु च व्यवच्छिन्नासु बन्धो द्विविधो भवति, संज्वलनमानस्य तदानीं प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं च दलिकं सत्, अन्यत्सर्वं क्षीणं, तदपि च सत् समयद्वयोनावलिकाद्विकमात्रेण कालेन क्षयमापत्स्यते । यावच्च नापक्षीय(पद्य)ते तावत्तिस्रः सत्यः, क्षीणे तु तस्मिन् द्वे अप्यन्तर्मुहूर्तं कालं यावत्सत्यौ । एकविधबन्धे पुनः पञ्च सत्तास्थानान्यमूनि, तद्यथा–अष्टाविंशतिः, चतुर्विंशतिः, एकविंशतिः, द्वे, एका च । तत्राद्यानि त्रीणि प्रागिवोपशमश्रेण्यां । शेषे तु द्वे क्षपकश्रेण्यां, ते चैवं–संज्वलनमायायाः प्रथमस्थितावावलिकाशेषायां बन्धोदयोदीरणा

युगपद्बन्धोऽन्तेदमुपयान्ति, व्यवच्छिन्नासु तासु च बन्ध एकविधो भवति। सञ्ज्वलनमायायास्तु तदानीं प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं च सदस्ति, अन्यत् समस्तं क्षीणं, तदपि च सत् समयद्वयोनावलिकाद्विकमात्रेण कालेन क्षयमुपगमिष्यति। यावच्च न क्षयमुपयाति तावद्दे सती, क्षीणे तु तस्मिन्नेका प्रकृतिः सञ्ज्वलनलोभरूपा सती। 'चत्तारि उ बंधवोच्छेए' इति बन्धव्यवच्छेदे बन्धाभावे सूक्ष्मसंपरायगुणस्थाने चत्वारि सत्तास्थानानि, तद्यथा—अष्टाविंशति, चतुर्विंशति, एकविंशति, एका च। तत्राद्यानि त्रीणि प्रागिवोपशमश्रेण्या। एका तु संज्वलनलोभरूपा प्रकृतिः क्षपकश्रेण्याम् ॥ २३ ॥

तदेव कृता संवेधचिन्ता, सम्प्रत्युपसंहारमाह—

**दसनवपन्नरसाइं बंधोदयसन्तपयडिठाणाइं। भणियाइँ मोहणिज्जे एत्तो नामं परं वोच्छं ॥ २४ ॥**

टीका—बन्धोदयसत्प्रकृतिस्थानानि यथासंख्यं दशनवपञ्चदशसंख्यानि प्रत्येकं संवेधद्वारेण च भणितानि। इत परं अत ऊर्ध्वं नाम वक्ष्ये नाम्नो बन्धादिस्थानानि वक्ष्ये ॥ २४ ॥

तत्र प्रथमतो बन्धस्थाननिरूपणार्थमाह—

**तेवीसपणवीसा छव्वीसा अट्ठवीस गुणतीसा। तीसेगतीसमेक्कं बंधट्ठाणाणि नामस्स ॥ २५ ॥**

टीका—नाम्नोऽष्टौ बन्धस्थानानि, तद्यथा—त्रयोविंशति पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशति, एकोनत्रिंशत्,

त्रिंशत्, एकत्रिंशत्, एका च । अमूनि च तिर्यग्मनुष्यादिगतिप्रायोग्यतया अनेकप्रकाराणि ततस्तथैवोपदर्श्यन्ते । तत्र तिर्यग्गतिप्रायोग्यं बध्नतः सामान्येन पञ्च बन्धस्थानानि, तद्यथा—त्रयोविंशतिः, पंचविंशतिः, षड्विंशतिः, एकोनत्रिंशत्, त्रिंशत् । तत्राप्येकेन्द्रियप्रायोग्यं बध्नतस्त्रीणि बन्धस्थानानि, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः षड्विंशतिः । तत्र त्रयोविंशतिरियं—तिर्यग्गतिः, तिर्यगानुपूर्वी, एकेन्द्रियजातिः, औदारिकतैजसकार्मणानि, हुंडसंस्थानं, वर्णरसगन्धस्पर्शाः, अगुरुलघु, उपघातनाम, स्थावरनाम, सूक्ष्मबादरयोरेकतरं, अपर्याप्तकनाम, प्रत्येकसाधारणयोरेकतरं, अस्थिरनाम, अशुभनाम, दुर्भगनाम, अनादेयनाम, अयशःकीर्तिनाम, निर्माणनाम । एतासां त्रयोविंशतिप्रकृतीनां समुदाय एकं बन्धस्थानं । एतच्चापर्याप्तकप्रायोग्यं बध्नतो मिथ्यादृष्टेरवसेयं । अत्र भंगाश्चत्वारः, तथाहि—बादरनाम्नि बध्यमाने एका त्रयोविंशतिः प्रत्येकनाम्ना सह प्राप्यते, द्वितीया साधारणनाम्ना, एवं सूक्ष्मनाम्न्यपि बध्यमाने त्रयोविंशतिः, सर्वसंख्यया चतस्रः । एषैव त्रयोविंशतिः पराघातोच्छ्वाससहिता पंचविंशतिः, नवरमेवमभिलपनीया—तिर्यग्गतिः, तिर्यगानुपूर्वी, एकेन्द्रियजातिः, औदारिकतैजसकार्मणानि, हुंडसंस्थानं, वर्णादिचतुष्कं, अगुरुलघु, उपघातनाम, पराघातनाम, उच्छ्वासनाम, स्थावरनाम, बादरसूक्ष्मयोरेकतरं, पर्याप्तकं, प्रत्येकसाधारणयोरेकतरं, स्थिरास्थिरयोरेकतरं, शुभाशुभयोरेकतरं, यशःकीर्त्ययशःकीर्त्योरेकतरं, दुर्भगं, अनादेयं, निर्माणमिति । एतासां पञ्चविंशतिप्रकृतीनां समुदायः एकं बन्धस्थानं । तच्च पर्याप्तकैकेन्द्रियप्रायोग्यं बध्नतो मिथ्यादृष्टेरवगन्तव्यं । अत्र भंगा विंशतिः, तत्र बादरपर्याप्तप्रत्येकेषु बध्यमानेषु स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिभिरष्टौ भंगाः, तथाहि—बादरपर्याप्तप्रत्येकस्थिरशुभेषु बध्यमानेषु यशःकीर्त्या सह ए-

कः,द्वितीयोऽयश कीर्त्या । एतौ च द्वौ भंगौ शुभपदेन लब्धौ । एवमशुभपदेनापि द्वौ भगौ लभ्येते । ततो जाताश्चत्वार । एते चत्वार स्थिरपदेन लब्धा । एवमस्थिरपदेनापि चत्वारो लभ्यन्ते,जाता अष्टौ । अत्र पर्याप्तबादरसाधारणेषु वध्यमानेषु स्थिरास्थिरशुभाशुभायश कीर्तिपदैश्चत्वार , यत साधारणेन सह यश कीर्तिबन्धो न भवति "नो सुहुमतिगेण जस" इति वचनात्, ततस्तदाश्रिता विकल्पा न प्राप्यन्ते । सूक्ष्मपर्याप्तनाम्नोर्बध्यमानयो प्रत्येकसाधारणस्थिरास्थिरशुभाशुभायश कीर्तिपदैरष्टौ । सूक्ष्मेणापि सह यश कीर्तिबन्धाभावादत्रापि तदाश्रिता विकल्पा न प्राप्यन्ते । तदेवं सर्वसख्यया पञ्चविंशतिबन्धे विंशतिर्भंगा । एवंव पञ्चविंशतिरातपोद्योतान्यतरसहिता षड्विंशति , नवरमेवमभिलपनीया–तिर्यग्गति· तिर्यगानुपूर्वी, एकेन्द्रियजाति , औदारिकतैजसकार्मणानि, हुंडसस्थान, वर्णादिचतुष्टय, अगुरुलघु, उपघात, पराघात, उच्छ्वासनाम, स्थावरनाम, आतपोद्योतयोरेकतर, बादरनाम, पर्याप्तकनाम, प्रत्येकनाम, स्थिरास्थिरयोरेकतर, शुभाशुभयोरेकतर, दुर्भगनाम, अादेय, यश कीर्त्ययश कीर्त्योरेकतरं, निर्माणमिति । एतेषा च षड्विंशतिप्रकृतीना समुदाय एक बन्धस्थान । एतच्च पर्याप्तकैकेन्द्रियप्रायोग्यमातपोद्योतान्यतरसहित बध्नतो मिथ्यादृष्टेरवगन्तव्यं । अत्र भगा· षोडश । ते चातपोद्योतस्थिरास्थिरशुभाशुभयश कीर्त्ययश कीर्तिपदैरवसेया· आतपोद्योताभ्या च सह सूक्ष्मसाधारणबन्धो न भवति, ततस्तदाश्रिता विकल्पा अत्र न प्राप्यन्ते । एकेन्द्रियाणा सर्वसंख्यया भगाश्चत्वारिंशत् । तदुक्त–"चत्तारि वीस सोलस भगा एगिंदियाण चत्ताला" । द्वीन्द्रियप्रायोग्यं बध्नतो बन्धस्थानानि त्रीणि, तद्यथा–पंचविंशति·, एकोनत्रिंशत्, त्रिंशत् । तत्र तिर्यग्गति , तिर्यगानुपूर्वी, द्वीन्द्रियजाति·, औदारिकतैजसकार्मणानि, हुडसंस्थान, सेवार्तसंहनन, औदा-

रिकांगोपांगं, वर्णादिचतुष्टयं, अगुरुलघु, उपघातनाम, त्रसनाम, बादरनाम, अपर्याप्तकनाम, प्रत्येकनाम, अस्थिरं, अशुभं, दुर्भगं, अनादेयं, अयशःकीर्त्ति, निर्माणमिति । एतासां पंचविंशतिप्रकृतीनां समुदाय एकं बन्धस्थानं, तच्चापर्याप्तद्वीन्द्रियप्रायोग्यं बध्नतो मिथ्यादृष्टेरवसेयं । अपर्याप्तकेन सह परावर्तमानप्रकृतयोऽशुभा एव बन्धमायान्तीति कृत्वा । अत्रैक एव भंगः । एषैव पञ्चविंशतिः पराघातोच्छ्वासाप्रशस्तविहायोगतिपर्याप्तकदुःस्वरसहिता अपर्याप्तकरहिता एकोनत्रिंशद्भवति, नवरमेवमेषा वक्तव्या--तिर्यग्गतिः, तिर्यगानुपूर्वी, द्वीन्द्रियजातिः, औदारिकं, औदारिकांगोपांगं, तैजसकार्मणे, हुंडसंस्थानं, सेवार्तसंहननं, वर्णादिचतुष्टयं, अगुरुलघु, पराघातं, उपघातं उच्छ्वासनाम, अप्रशस्तविहायोगतिः, त्रसनाम, बादरनाम, पर्याप्तकं, प्रत्येकं, स्थिरास्थिरयोरेकतरं, शुभाशुभयोरेकतरं, दुःस्वरं, दुर्भगं, अनादेयं, यशःकीर्त्ययशःकीर्त्योरेकतरं, निर्माणमिति । एतासामेकोनत्रिंशत्प्रकृतीनां समुदाय एकं बन्धस्थानं, तच्च पर्याप्तकद्वीन्द्रियप्रायोग्यं बध्नतो मिथ्यादृष्टेः प्रत्येतव्यं । अत्र स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैरष्टौ भंगाः । सैव एकोनत्रिंशत् उद्योतसहिता त्रिंशत् । अत्रापि त एवाष्टौ भंगाः, सर्वसंख्यया सप्तदश । एवं त्रीन्द्रियप्रायोग्यं चतुरिन्द्रियप्रायोग्यं च बध्नतो मिथ्यादृष्टेस्त्रीणि त्रीणि बन्धस्थानानि वाच्यानि, नवरं त्रीन्द्रियाणां त्रीन्द्रियजातिरभिलपनीया चतुरिन्द्रियाणां चतुरिन्द्रियजातिः, भंगाश्च प्रत्येकं सप्तदश, सर्वसंख्यया एकपञ्चाशत् । उक्तं च--"एगट्ठ अट्ठ विगलिंदियाण एगवन्न तिण्हंपि" । तिर्यग्गतिपञ्चेन्द्रियप्रायोग्यं बध्नतस्त्रीणि बन्धस्थानानि । तद्यथा--पञ्चविंशतिः, एकोनत्रिंशत्, त्रिंशत् । तत्र पञ्चविंशतिः द्वीन्द्रियप्रायोग्यं बध्नत एव वेदितव्या, नवरं द्वीन्द्रियजातिस्थाने पञ्चेन्द्रियजातिर्वक्तव्या, तत्र चैको भंगः ।

एकोनत्रिंशत् पुनरियं–तिर्यग्गतितिर्यगानुपूर्व्यौ, पञ्चेन्द्रियजाति, औदारिक, औदारिकाङ्गोपाङ्ग, तैजसकार्मणे, षण्णां संस्थानानामेकतमत् संस्थानं, षण्णां संहननानामेकतमत्संहननं, वर्णादिचतुष्टय, अगुरुलघु, उपघात, पराघात, उच्छ्वासनाम, प्रशस्ताप्रशस्तविहायोगत्योरेकतरा, त्रसनाम, बादरनाम, पर्याप्तनाम, प्रत्येक, स्थिरास्थिरयोरेकतर, शुभाशुभयोरेकतर, सुभगदुर्भगयोरेकतर, सुस्वरदुःस्वरयोरेकतर, आदेयानादेययोरेकतरं, यशःकीर्त्ययशःकीर्त्योरेकतर, निर्माणमिति। एतासामेकोनत्रिंशत्प्रकृतीनां समुदाय एकं बन्धस्थानं। एतच्च मिथ्यादृष्टेः पर्याप्ततिर्यक्पञ्चेन्द्रियप्रायोग्यं बध्नतो वेदितव्यं। यदि पुनः सासादनो बन्धको भवति तर्हि तस्य पञ्चानामाद्यानां संस्थानानां अन्यतमत् संस्थानं, पञ्चानां संहननानामन्यतमत् संहननमिति वक्तव्यं "हुंडं असंपत्तं वा सासणओ न बंधइत्ति" वचनात्। अस्यां चैकोनत्रिंशति सामान्येन षड्भिः संस्थानैः षड्भिः संहननैः प्रशस्ताप्रशस्तविहायोगतिभ्यां स्थिरास्थिराभ्यां शुभाशुभाभ्यां सुभगदुर्भगाभ्यां सुस्वरदुःस्वराभ्यां आदेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां भंगा अष्टाधिकषट्चत्वारिंशच्छतसंख्या वेदितव्या। एषैवैकोनत्रिंशदुद्योतसहिता त्रिंशद्भवति, अत्रापि मिथ्यादृष्टिसासादनमधिकृत्य तथैव विशेषोऽवगन्तव्यं, सामान्येन च भंगा अष्टाधिकषट्चत्वारिंशच्छतसंख्या। उक्तं च–"गुणतीसे तीसे वि य भंगा अट्ठाहिया छयालसया। पंचिंदियतिरिजोगे पणवीसे बंधि भंगिक्को॥ १॥" सर्वसंख्यया द्वानवतिशतानि सप्तदशाधिकानि। सर्वस्यां तिर्यग्गतौ सर्वसंख्यया भंगा त्रिनवतिशतान्यष्टाधिकानि। तथा मनुष्यगतिप्रायोग्यं बध्नतस्त्रीणि बन्धस्थानानि, तद्यथा–पञ्चविंशतिः, एकोनत्रिंशत्, त्रिंशत्। तत्र पञ्चविंशतिर्यथा प्राक् अपर्याप्तकद्वीन्द्रियप्रायोग्यं बध्नतोऽभिहिता तथैवावगन्तव्या। नवरमत्र मनुष्यगति-

प्रागुक्तानि नवाप्युदयस्थानानि सम्प्रतेदानि सम्भवन्ति । केवलमेकविंशतिपञ्चविंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपेषु षट्सूदयस्थानेषु देवनैरयिकानधिकृत्य ये भङ्गा प्राप्यन्ते, ते न सम्भवन्ति । त्रयोविंशतिर्हि अपर्याप्तैकेन्द्रियप्रायोग्या । न च देवा अपर्याप्तैकेन्द्रियप्रायोग्यं बध्नन्ति, तेषा तत्रोत्पादाभावात् । नापि नैरयिकास्तेषा सामान्यतोऽप्येकेन्द्रियप्रायोग्यबन्धासम्भवात् । ततोऽत्र देवनैरयिकसत्कोदयस्थानभङ्गा न प्राप्यन्ते । सत्तास्थानानि पञ्च, तद्यथा–द्विनवति अष्टाशीति षडशीति अशीति अष्टसप्ततिश्च । तत्रैकविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशत्युदयेषु पञ्चापि सत्तास्थानानि । नवर पञ्चविंशत्युदये तेजोवायुकायिकानधिकृत्याष्टसप्तति प्राप्यते, षड्विंशत्युदये तेजोवायुकायिकान् तेजोवायुभवाादुद्धृत्य विकलेन्द्रियतिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पन्नान्वाऽधिकृत्य प्राप्यते । सप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपेषु पञ्चसु अष्टसप्ततिवर्जानि शेषाणि प्रत्येक चत्वारि चत्वारि सत्तास्थानानि । सर्वसङ्ख्यया सर्वाण्युदयस्थानान्यधिकृत्य त्रयोविंशतिबन्धकस्य चत्वारिंशत्सत्तास्थानानि । एव पञ्चविंशतिषड्विंशतिबन्धकानामपि वक्तव्यं । केवलमिह देवोऽप्यात्मीयेषु सर्वेष्वप्युदयस्थानेषु वर्तमान पर्याप्तकैकेन्द्रियप्रायोग्या पञ्चविंशति षड्विंशति च बध्नातीत्यवसेय । नवर पञ्चविंशतिबन्धे बादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभदुर्भगानादेययश.कीर्त्ययश कीर्तिपदैरष्टौ भङ्गा अवसेया न शेषा, सूक्ष्मसाधारणपर्याप्तकेषु मध्ये देवस्योत्पादाभावात् । सत्तास्थानभावना पञ्चविंशतिबन्धे षड्विंशतिबन्धे च प्रागिव कर्तव्या । सर्वसङ्ख्यया चत्वारिंशत् । अष्टाविंशतिबन्धकस्य मिथ्यादृष्टेर्द्वे उदयस्थाने, तद्यथा–त्रिंशत् एकत्रिंशत् । तत्र त्रिंशत्तिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य । एकत्रिंशत्तिर्यक्पञ्चेन्द्रियानेव । अष्टाविंशतिबन्धकस्य चत्वारि

सत्तास्थानानि, तद्यथा—द्विनवतिः एकोननवतिः अष्टाशीतिः षडशीतिः। तत्र त्रिंशदुदये चत्वार्यपि। तत्राप्येकोननवतिर्यो नाम वेदकसम्यग्दृष्टिर्बद्धतीर्थकरनामा परिणामपरावर्तनेन मिथ्यात्वं गतो नारकाभिमुखो नरकगतिप्रायोग्यामष्टाविंशतिं बध्नाति, तमधिकृत्य वेदितव्या। शेषाणि पुनस्त्रीणि सत्तास्थानान्यविशेषेण तिर्यङ्मनुष्याणां। एकत्रिंशदुदये एकोननवतिवर्जानि त्रीणि सत्तास्थानानि। एकोननवतिर्हि तीर्थकरनामसहिता। न च तीर्थकरनाम तिर्यक्षु संभवति। सर्वसंख्यया अष्टाविंशतिबन्धे सप्त सत्तास्थानानि। देवगतिप्रायोग्यवर्जां शेषामेकोनात्रिंशतं विकलेन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यां मनुष्यगतिप्रायोग्यां च बध्नतो मिथ्यादृष्टेः सामान्येन नवापि प्राक्तनानि उदयस्थानानि षट् च सत्तास्थानानि, तद्यथा—द्विनवतिः एकोननवतिः अष्टाशीतिः षडशीतिः अशीतिः अष्टसप्ततिः। तत्रैकविंशत्युदये सर्वाण्यपीमानि प्राप्यन्ते। तत्राप्येकोननवतिर्बद्धतीर्थकरनामानं मिथ्यात्वं गतं नैरयिकमधिकृत्यावसेया। द्विनवतिरष्टाशीतिश्च देवनैरयिकमनुजविकलेन्द्रियतिर्यक्पञ्चेन्द्रियैकेन्द्रियानधिकृत्य। षडशीतिरशीतिश्च विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजैकेन्द्रियानधिकृत्य वेदितव्या। अष्टसप्ततिरेकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य। चतुर्विंशत्युदये एकोननवतिवर्जानि शेषाणि पञ्च सत्तास्थानानि, तानि चैकेन्द्रियानेवाधिकृत्य वेदितव्यानि, अन्यत्र चतुर्विंशत्युदयस्याभावात्। पञ्चविंशत्युदये षडपि सत्तास्थानानि, तानि यथैकविंशत्युदये भावितानि तथैव भावनीयानि। षड्विंशत्युदये एकोननवतिवर्जानि शेषाणि पञ्च सत्तास्थानानि, तानि प्रागिव भावनीयानि। एकोननवतिस्तु न लभ्यते, यतो मिथ्यादृष्टेः सत एकोननवतिर्नरकेषूत्पद्यमानस्य नैरयिकस्य प्राप्यते, न शेषस्य। न च नैरयिकस्य षड्विंशत्युदयः संभवति। सप्तविंशत्युदये-

ऽष्टसप्ततिवर्जानि शेषाणि पञ्च सत्तास्थानानि। तत्रैकोननवतिः प्रागुक्तस्वरूपं नैरयिकमधिकृत्य। द्विनवतिरष्टाशीतिश्च देव-नैरयिकमनुजविकलेन्द्रियतिर्यक्पञ्चेन्द्रियैकेन्द्रियानधिकृत्य। षडशीतिरशीतिश्च एकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य। अष्टसप्ततिस्तु न सम्भवति, यतः सप्तविंशत्युदयस्तेजोवायुवर्जानामेकेन्द्रियाणामातपोद्योतान्यतरसहितानां भवति, नारकादीनां वा, न च तेषामष्टसप्ततिः, तेषामवश्यं मनुष्यद्विकबन्धसंभवात्। एतान्येव पञ्च सत्तास्थानान्यष्टाविंशत्युदयेऽपि, तत्रैकोननवतिर्द्विनवतिरष्टाशीतिश्च प्रागिव भावनीया, षडशीतिरशीतिश्च विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य वेदितव्या। एवमेकोनत्रिंशदुदयेऽप्येतान्येव पञ्च सत्तास्थानानि भावनीयानि। त्रिंशदुदये चत्वारि, तद्यथा—द्विनवतिः अष्टाशीतिः षडशीतिः अशीतिः। एतानि विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य वेदितव्यानि। एकोननवतिस्तु न प्राप्यते, यतः सा वेदकसम्यग्दृष्टेः सतो बद्धतीर्थकरनाम्नो मिथ्यात्वं गतस्य नैरयिकस्य प्राप्यते। न च नैरयिकस्य त्रिंशदुदयोऽस्ति। एकत्रिंशदुदयेऽप्येतान्येव चत्वारि, तानि च विकलेन्द्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य द्रष्टव्यानि। सर्वसङ्ख्यया मिथ्यादृष्टेरेकोनत्रिंशतं बध्नतः पञ्चचत्वारिंशत्सत्तास्थानानि। या तु देवगतिप्रायोग्या एकोनत्रिंशत् सा मिथ्यादृष्टेर्न बन्धमायाति, कारणं प्रागेवोक्तं। मनुष्यगतिदेवगतिप्रायोग्यवर्जां शेषां त्रिंशतं विकलेन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यां बध्नतः सामान्येन प्रागुक्तानि नवोदयस्थानानि एकोननवतिवर्जानि च पञ्च सत्तास्थानानि। एकोननवतिस्तु न सम्भवति, एकोननवतिसत्कर्मणस्तिर्यग्गतिप्रायोग्यबन्धारम्भासम्भवात्। तानि च पञ्च सत्तास्थानानि एकविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशत्युदयेषु प्रागिव

भावनीयानि। सप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपेषु च पञ्चसु उदयस्थानेषु अष्टसप्ततिवर्जानि शेषाणि प्रत्येकं चत्वारि चत्वारि भावनीयानि, अष्टसप्ततिप्रतिषेधे कारणं प्रागुक्तमनुसरणीयं। सर्वसंख्यया मिथ्यादृष्टेस्त्रिंशतं बध्नतश्चत्वारिंशत् सत्तास्थानानि। मनुजगतिदेवगतिप्रायोग्या तु त्रिंशत् मिथ्यादृष्टेर्न बन्धमायाति। मनुजगतिप्रायोग्या हि त्रिंशत्तीर्थकरनामसहिता, देवगतिप्रायोग्या त्वाहारकतीर्थकरनामसहिता, ततः सा कथं मिथ्यादृष्टेर्बन्धमायातीति। तदेवमुक्तो मिथ्यादृष्टेर्बन्धोदयसत्तास्थानसंवेधः, संप्रति सासादनस्य बन्धोदयसत्तास्थानान्युच्यन्ते—'तिगसत्तदुगं ति' त्रीणि बन्धस्थानानि, तद्यथा—अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत्। तत्राष्टाविंशतिर्द्विधा देवगतिप्रायोग्या नरकगतिप्रायोग्या च। तत्र नरकगतिप्रायोग्या सासादनस्य न बन्धमायाति, देवगतिप्रायोग्यायाश्च बन्धकास्तिर्यक्पञ्चेन्द्रिया मनुष्याश्च। तस्यां चाष्टाविंशतौ बध्यमानायामष्टौ भंगाः। तथा सासादना एकेन्द्रिया विकलेन्द्रियास्तिर्यक्पञ्चेन्द्रिया मनुष्या देवा नैरयिकाश्च तिर्यक्पञ्चेन्द्रियप्रायोग्यां मनुष्यगतिप्रायोग्यां वा एकोनत्रिंशतं बध्नन्ति, न शेषां। अत्र च भंगाश्चतुःषष्टिशतानि, तथाहि—सासादना यदि तिर्यक्पञ्चेन्द्रियप्रायोग्यां अथवा मनुष्यगतिप्रायोग्यां एकोनत्रिंशतं बध्नन्ति तथापि न ते हुंडसंस्थानं सेवार्तं च संहननं बध्नन्ति, तथास्वाभाव्यात्। ततश्च तिर्यक्पञ्चेन्द्रियप्रायोग्यामेकोनत्रिंशतं बध्नतः पञ्चभिः संस्थानैः पञ्चभिः संहननैः प्रशस्ताप्रशस्तविहायोगतिभ्यां स्थिरास्थिराभ्यां शुभाशुभाभ्यां सुभगदुर्भगाभ्यां सुस्वरदुःस्वराभ्यां आदेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां च भंगा द्वात्रिंशच्छतानि। एवं मनुष्यगतिप्रायोग्यामपि बध्नतो द्वात्रिंशच्छतानि। ततः सर्वसंख्यया चतुःषष्टिशतानि भवन्ति। तथा सासादना एकेन्द्रिया विकलेन्द्रियास्तिर्यक्पञ्चेन्द्रिया मनुष्या देवा नैरयिका

वा यदि त्रिंशत बध्नन्ति तर्हि तिर्यक्पञ्चेन्द्रियप्रायोग्यामेवोद्योतसहिता, न शेषा । ता च बध्नता प्रागिव जगाना द्वात्रिंशच्छतानि । सर्ववन्धस्थानजगसंख्या अष्टाधिकानि षणवतिशतानि । उक्तरूपजगसंख्यानिरूपणार्थमियमन्तर्भाष्यगाथा—"अठसया चोसठि वत्तीससया य सासणे जणिया । अठावीसाईसुं सवाणठहिय ठणउई ॥ १ ॥" सुगमा । सासादनस्योदयस्थानानि सप्त, तद्यथा—एकविंशति चतुर्विंशति पञ्चविंशति षड्विंशति एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् । तत्रैकविंशत्युदये एकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवानधिकृत्य वेदितव्या । नरकेषु सासादनो नोत्पद्यते इति कृत्वा तद्विषय एकविंशत्युदयो न गृह्यते । तत्रैकेन्द्रियाणामेकविंशत्युदये बादरपर्याप्तकेन सह यश कीर्त्ययश कीर्तिभ्या यौ द्वौ जंगौ तावेव सन्नवत , न शेषा , सूक्ष्मेषु अपर्याप्तकेषु च मध्ये सासादनस्योत्पादाभावात् । अत एव विकलेन्द्रियाणा तिर्यक्पञ्चेन्द्रियाणा मनुष्याणा च प्रत्येकमपर्याप्तकेन सह एकैको जगः स इह न सन्नवति, किं तु शेषा एव । ते च विकलेन्द्रियाणा द्वौ द्वौ इति षट् । तिर्यक्पञ्चेन्द्रियाणामष्टौ । मनुष्याणामप्यष्टौ । देवानामप्यष्टौ । सर्वसंख्यया एकविंशत्युदये द्वात्रिंशत् । चतुर्विंशत्युदय एकेन्द्रियेषु मध्ये उत्पन्नमात्रस्य । अत्रापि बादरपर्याप्तकेन सह यश कीर्त्ययश कीर्तिभ्या यौ द्वौ जगौ तावेव संजवत , न शेषा , सूक्ष्मेषु साधारणेषु तेजोवायुषु च मध्ये सासादनस्योत्पादासंजवात् । पञ्चविंशत्युदयो देवेषु मध्ये उत्पन्नमात्रस्य प्राप्यते न शेषस्य, तत्र चाष्टौ जंगा । ते च स्थिरास्थिरशुजाशुजयश कीर्त्ययश कीर्तिपदैरवसेया । षड्विंशत्युदयो विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्येषु मध्ये उत्पन्नमात्रस्यावसेय , अत्राप्यपर्याप्तकेन सह य एकैको जग स न सन्नवति, अपर्याप्तकमध्ये सासादनस्योत्पादाभावात्, शेषास्तु

संभवन्ति, ते च विकलेन्द्रियाणां प्रत्येकं द्वौ द्वाविति षट्। तिर्यक्पञ्चेन्द्रियाणां द्वे शते अष्टाशीत्यधिके। मनुष्याणामपि द्वे शते अष्टाशीत्यधिके। सर्वसंख्यया षड्विंशत्युदये पञ्च शतानि द्व्यशीत्यधिकानि। सप्तविंशत्यष्टाविंशत्युदयौ न संभवतः, तौ हि उत्पत्त्यनन्तरमन्तर्मुहूर्ते गते सति भवतः। सासादनभावश्चोत्पत्त्यनन्तरमुत्कर्षतः किञ्चिदूनषडावलिकामात्रं भवति, तत एतौ सासादनस्य न संभवतः। एकोनत्रिंशदुदयो देवनैरयिकाणां स्वस्थानगतानां पर्याप्तानां प्रथमसम्यक्त्वात्प्रच्यवमानानां प्राप्यते। तत्र देवस्यैकोनत्रिंशदुदये भंगा अष्टौ, नैरयिकस्यैक इति। सर्वसंख्यया नव। त्रिंशदुदयस्तिर्यग्मनुष्याणां पर्याप्तानां प्रथमसम्यक्त्वात्प्रच्यवमानानां देवानां वा उत्तरवैक्रिये वर्तमानानां सासादनानां। तत्र तिरश्चां मनुष्याणां च त्रिंशदुदये प्रत्येकं द्विपञ्चाशदधिकान्येकादश शतानि। देवस्याष्टौ। सर्वसंख्यया त्रयोविंशतिशतानि द्वादशाधिकानि। एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियाणां पर्याप्तानां प्रथमसम्यक्त्वात्प्रच्यवमानानां। अत्र भंगा एकादशशतानि द्विपञ्चाशदधिकानि। उक्तरूपाया एव भंगसंख्याया निरूपणार्थमियमन्तर्भाष्यगाथा—"बत्तीस दोन्नि अठ्य बासीयसया य पञ्च नव उदया। बारहिगा तेवीसा बावन्नेक्कारससया य ॥ १ ॥" सुगमा। सर्वभंगसंख्या सप्तनवत्यधिकानि चत्वारिंशच्छतानि ४०९७। सासादनस्य द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। तत्र द्विनवतिर्य आहारकचतुष्टयं बद्ध्वा उपशमश्रेणीतः प्रतिपतन् सासादनस्य भावमुपगच्छति तस्य लभ्यते, न शेषस्य। अष्टाशीतिश्चतुर्गतिकानामपि सासादनानां। संप्रति संवेध उच्यते—तत्राष्टाविंशतिं बध्नतः सासादनस्य द्वे उदयस्थाने, तद्यथा—त्रिंशदेकत्रिंशत्। अष्टाविंशतिर्हि सासादनस्य बन्धयोग्या भवति देवगतिविषया। न च करणापर्याप्तः सासादनो देवगति-

प्रायोग्य बध्नाति, तत' शेषा उदया न संभवन्ति। अत्र मनुष्यानधिकृत्य त्रिंशदुदये द्वे अपि सत्तास्थाने। तिर्यक्पञ्चेन्द्रियसासादनानधिकृत्याष्टाशीतिरेव। यतो द्विनवतिरुपशमश्रेणीतः प्रतिपततो लभ्यते। न च तिरश्चामुपशमश्रेणीसंभव। एकत्रिंशदुदयेऽप्यष्टाशीतिरेव। यत एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियाणा। न च तिरश्चा द्विनवति. संभवति, प्रागुक्तयुक्ते.। एकोनत्रिंशत तिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्या बध्नत सासादनस्य सप्ताप्युदयस्थानानि। तत्र एकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवनैरयिकाणा सासादनाना स्वीयस्वीयोदयस्थानेषु वर्तमानानामेकमेव सत्तास्थानं–अष्टाशीति। नवर मनुष्यस्य त्रिंशदुदये वर्तमानस्योपशमश्रेणीत' प्रतिपतत सासादनस्य द्विनवति। एव त्रिंशद्बन्धकस्यापि वक्तव्य। सर्वाण्यप्युदयस्थानान्यधिकृत्य सामान्येन सर्वसंख्यया सासादनस्याष्टौ सत्तास्थानानि। सम्प्रति सम्यग्मिथ्यादृष्टेर्बंधोदयसत्तास्थानान्यभिधीयन्ते–'दुगतिगदुगं ति' द्वे बन्धस्थाने, तद्यथा–अष्टाविंशति. एकोनत्रिंशत्। तत्र तिर्यङ्मनुष्याणा सम्यग्मिथ्यादृष्टीना देवगतिप्रायोग्यमेव बन्धमायाति, ततस्तेषामष्टाविंशति, तत्र भगा अष्टौ। एकोनत्रिंशत् मनुष्यगतिप्रायोग्य बध्नता देवनैरयिकाणा, अत्राप्यष्टौ भगा.। ते चोभयत्रापि स्थिरास्थिरशुभाशुभयश.कीर्त्ययश कीर्तिपदैरवसेया'। शेषास्तु परावर्तमानप्रकृतय शुभा एव सम्यग्मिथ्यादृष्टीना बन्धमायान्ति, तत शेषभंगा न प्राप्यन्ते। त्रीण्युदयस्थानानि, तद्यथा–एकोनत्रिंशत् त्रिंशत् एकत्रिंशत्। तत्रैकोनत्रिंशति देवानधिकृत्याष्टौ भगा', नैरयिकानधिकृत्यैक। सर्वसंख्यया नव। त्रिंशति तिर्यक्पञ्चेन्द्रियानधिकृत्याष्टाविंशत्यधिकानि सप्तदश शतानि, मनुष्यानधिकृत्य एकादश शतानि द्विपञ्चाशदधिकानि। सर्वसंख्ययाऽष्टाविंशतिशतान्यशीत्यधिकानि। एकत्रिंशदुदयस्तिर्यक्पञ्चे-

न्द्रियानधिकृत्य। तत्र भंगा द्विपञ्चाशदधिकान्येकादश शतानि । सर्वोदयस्थानभंगसंख्या चत्वारिंशच्छतान्येकचत्वारिंशदधिकानि। द्वे सत्तास्थाने, तद्यथा–द्विनवतिः अष्टाशीतिश्च। संप्रति संवेध उच्यते–सम्यग्मिथ्यादृष्टेरष्टाविंशतिबन्धकस्य द्वे उदयस्थाने, तद्यथा–त्रिंशदेकत्रिंशत् । एकैकस्मिन्नुदयस्थाने द्वे द्वे सत्तास्थाने, तद्यथा–द्विनवतिरष्टाशीतिश्च। एकोनत्रिंशद्बन्धकस्य एकमुदयस्थानं एकोनत्रिंशत्। अत्रापि ते एव द्वे सत्तास्थाने । तदेवमेकैकस्मिन्नुदयस्थाने द्वे द्वे सत्तास्थाने इति सर्वसंख्यया षट् । संप्रत्यविरतसम्यग्दृष्टेर्बन्धोदयसत्तास्थानान्यभिधीयन्ते–'तिगछचउ त्ति' त्रीणि बन्धस्थानानि, तद्यथा–अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत्। तत्र तिर्यङ्मनुष्याणामविरतसम्यग्दृष्टीनां देवगतिप्रायोग्यं बध्नतामष्टाविंशतिः, अत्राष्टौ भंगाः। अविरतसम्यग्दृष्टयो हि तिर्यङ्मनुष्याः न शेषगतिप्रायोग्यं बध्नन्ति, तेन नरकगति प्रायोग्या अष्टाविंशतिर्न लभ्यते । मनुष्याणां देवगतिप्रायोग्यं तीर्थकरसहितं बध्नतामेकोनत्रिंशत्। अत्राप्यष्टौ भंगाः। देवनैरयिकाणां मनुष्यगतिप्रायोग्यं बध्नतामेकोनत्रिंशत्। अत्रापि त एवाष्टा भंगाः। तेषामेव मनुष्यगतिप्रायोग्यं तीर्थकरसहितं बध्नतां त्रिंशत्। अत्रापि त एवाष्टौ भङ्गाः । अष्टावुदयस्थानानि, तद्यथा–एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशति अष्टाविंशतिः एकोन त्रिंशत् त्रिंशत् एकत्रिंशत्। तत्रैकविंशत्युदयो नैरयिकतिर्यक्पञ्चेन्द्रियमनुष्यदेवानधिकृत्य वेदितव्यः। क्षायिकसम्यग्दृष्टेः पूर्वबद्धायुष्कस्य, एतेषु सर्वेष्वपि तस्य संभवात्। अविरतसम्यग्दृष्टिश्चापर्याप्तकेषु मध्ये नोत्पद्यते । ततोऽपर्याप्तकोदयवर्जाः शेषा भंगाः सर्वेऽपि वेदितव्याः, ते च पञ्चविंशतिः। तत्र तिर्यक्पञ्चेन्द्रियानधिकृत्याष्टौ, मनुष्यानधिकृ-

त्वाष्टौ, देवानप्यधिकृत्याष्टौ, नैरयिकानधिकृत्यैक । पञ्चविंशतिसप्तविंशत्युदयौ देवनैरयिकान् वैक्रियतिर्यङ्मनुष्यांश्चाधिकृत्यावसेयौ । तत्र नैरयिक क्षायिकसम्यग्दृष्टिर्वेदकसम्यग्दृष्टिर्वा देवस्त्रिविधसम्यग्दृष्टिरपि । उक्त च चूर्णौ–"पणवीस सत्तावीसोदया देवनेरइए विउव्विय तिरियमणुए य पडुच, नेरइगो खइगवेयगसम्मदिट्ठी, देवो तिविहसम्मदिट्ठी वि त्ति" । भगा अत्र सर्वेऽप्यात्मीयात्मीया द्रष्टव्या. । षड्विंशत्युदय तिर्यङ्मनुष्याणा क्षायिकवेदकसम्यग्दृष्टीना । औपशमिकसम्यग्दृष्टिश्च तिर्यङ्मनुष्येषु मध्ये नोत्पद्यते इति त्रिविधसम्यग्दृष्टीनामिति नोक्त । वेदकसम्यग्दृष्टिता च तिरश्चो द्वाविंशतिसत्कर्मणो वेदितव्या । अष्टाविंशत्येकोनत्रिंशदुदयौ नैरयिकतिर्यङ्मनुष्यदेवाना । त्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियमनुष्यदेवाना । एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियाणा । भगा. आत्मीया आत्मीया सर्वेऽपि द्रष्टव्या । चत्वारि सत्तास्थानानि, तद्यथा–त्रिनवति द्विनवति एकोननवति अष्टाशीतिश्च । तत्र योऽप्रमत्तसयतोऽपूर्वकरणो वा तीर्थकराहारकसहितामेकत्रिंशत बद्ध्वा पश्चाद्देवोऽविरतसम्यग्दृष्टिर्जातस्तमधिकृत्य त्रिनवति. । यस्त्वाहारक बद्ध्वा परिणामपरावर्तनेन मिथ्यात्वमनुगम्य चतसृणा गतीनामन्यतमस्या गत्यामुत्पन्नस्तस्य तत्र तत्र गतौ भूयोऽपि सम्यक्त्व प्रतिपन्नस्य द्विनवति. । देवमनुष्येषु मध्ये मिथ्यात्वमप्रतिपन्नस्यापि द्विनवतिः प्राप्यते । एकोननवतिर्देवनैरयिकमनुष्याणामविरतसम्यग्दृष्टीना । ते हि त्रयोऽपि तीर्थकरनाम समर्जयन्ति, तिर्यक्षु तीर्थकरनामसत्कर्मा नोत्पद्यते इति तिर्यङ् न गृहीतः । अष्टाशीतिश्चतुर्गतिकानामविरतसम्यग्दृष्टीना । सम्प्रति सवेध उच्यते–तत्राविरतसम्यग्दृष्टेरष्टाविंशतिबन्धकस्य अष्टावप्युदयस्थानानि, तानि तिर्यङ्मनुष्यानधिकृत्य । तत्रापि पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियतिर्यङ्मनुष्यानधिकृत्य । एकैकस्मिन्नुद-

यस्थाने द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। एकोनत्रिंशद्द्विधा—देवगतिप्रायोग्या मनुष्यगतिप्रायोग्या च। तत्र देवगतिप्रायोग्या तीर्थकरनामसहिता, तां च मनुष्या एव बध्नन्ति। तेषां चोदयस्थानानि सप्त, तद्यथा—एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत्। मनुष्याणामेकत्रिंशन्न संभवति। एकैकस्मिन्नुदयस्थाने द्वे द्वे सत्तास्थाने, त्रिनवतिः एकोननवतिश्च। मनुष्यगतिप्रायोग्यां चैकोनत्रिंशतं बध्नन्ति देवनैरयिकाः। तत्र नैरयिकाणामुदयस्थानानि पञ्च, तद्यथा—एकविंशतिः पञ्चविंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत्। देवानां पञ्च तावदेतान्येव, षष्ठं तु त्रिंशत्। सा चोद्योतवेदकानां देवानामवगन्तव्या। एकैकस्मिन्नुदयस्थाने द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। मनुष्यगतिप्रायोग्यां त्रिंशतमविरतसम्यग्दृष्टयो देवा नैरयिकाश्च बध्नन्ति। तत्र देवानामुदयस्थानानि षट् तान्येव। तेषु उदयस्थानेषु प्रत्येकं द्वे द्वे सत्तास्थाने—त्रिनवतिरेकोननवतिश्च। नैरयिकाणामुदयस्थानानि पञ्च, तेषु प्रत्येकं सत्तास्थानमेकोननवतिरेव, तीर्थकराहारकसत्कर्मणो नरकेपूत्पादाभावात्। तदेवं सामान्येनैकविंशत्यादिषु त्रिंशत्पर्यन्तेषूदयस्थानेषु सत्तास्थानानि प्रत्येकं चत्वारि चत्वारि, तद्यथा—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च। एकत्रिंशदुदये द्विनवतिरष्टाशीतिश्च। सर्वसंख्यया त्रिंशत्। संप्रति देशविरतस्य बन्धादिस्थानान्युच्यन्ते—'दुगछक्क चउक्कं ति' देशविरतस्य द्वे बन्धस्थाने, तद्यथा—अष्टाविंशतिरेकोनत्रिंशत्। तत्राष्टाविंशतिर्मनुष्यस्य तिर्यक्पञ्चेन्द्रियस्य वा देशविरतस्य देवगतिप्रायोग्या तत्राष्टौ भंगाः। सैव तीर्थकरसहिता एकोनत्रिंशत्, सा च मनुष्यस्यैव। तिरश्च-

स्तीर्थकरसत्कर्मबन्धाभावात्। अत्राप्यष्टौ भंगाः। पट् उदयस्थानानि, तद्यथा—पञ्चविंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् एकत्रिंशत्। तत्राद्यानि चत्वारि वैक्रियतिर्यङ्मनुष्याणाम्। अत्र मनुष्याणामेकैक एव भंगः, तिरश्चां चाद्ययोरेकैकोऽन्तिमयोस्तु द्वौ द्वौ, सर्वपदानां प्रशस्तत्वात्। त्रिंशत् स्वभावस्थानामपि तिर्यङ्मनुष्याणाम्, अत्र भंगानां चतुश्चत्वारिंशं शतं। तच्च षड्भिः संस्थानैः षड्भिः संहननैः सुस्वरदुःस्वराभ्यां प्रशस्ताप्रशस्तविहायोगतिभ्यां च जायते। दुर्भगानादेयायशःकीर्तीनामुदयो गुणप्रत्ययादेव न भवतीति तदाश्रिता विकल्पा न प्राप्यन्ते। वैक्रियतिरश्चां एको भंगः एकत्रिंशत्, तिरश्चां अत्रापि त एव भंगाः। चत्वारि सत्तास्थानानि, तद्यथा—त्रिनवतिः द्विनवतिः एकोननवतिः अष्टाशीतिश्च। तत्र योऽप्रमत्तोऽपूर्वकरणो वा तीर्थकराहारकं बद्ध्वा परिणामह्रासेन देशविरतो जातः तस्य त्रिनवतिः। शेषाणां भावनाऽविरतसम्यग्दृष्टेरिव कर्तव्या। संप्रति संवेध उच्यते—तत्र मनुष्यस्य देशविरतस्याष्टाविंशतिबन्धकस्य पञ्च उदयस्थानानि, तद्यथा—पञ्चविंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत्। एतेषु च प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च। एवं तिरश्चोऽपि। नवरं तस्यैकत्रिंशदुदयोऽपि वक्तव्यः। तत्रापि चैते एव द्वे सत्तास्थाने। एकोनत्रिंशद्बन्धो मनुष्यस्यैव देशविरतस्य, तस्योदयस्थानान्यनन्तरोक्तान्येव पञ्च, तेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा—त्रिनवतिरेकोननवतिश्च। तदेवं देशविरतस्य पञ्चविंशत्यादिषु त्रिंशत्पर्यन्तेषु चत्वारि

---

१ सत्कर्म च बन्धश्च सत्कर्मबन्धौ, तीर्थकरस्य सत्कर्मबन्धौ तीर्थकरसत्कर्मबन्धौ, तयोरभावस्तीर्थकरसत्कर्मबन्धाभावस्तस्मात्।

२ न केवलं वैक्रियतिर्यङ्मनुष्याणां, स्वभावस्थानामपीत्यपिशब्दार्थः॥

चत्वारि सत्तास्थानानि । एकत्रिंशदुदये द्वे सत्तास्थाने । सर्वसंख्यया द्वाविंशतिः । संप्रति प्रमत्तसंयतस्य बन्धादिस्थाना-
न्युच्यन्ते–'दुग पण चउ त्ति,' प्रमत्तसंयतस्य द्वे बन्धस्थाने, तद्यथा–अष्टाविंशतिरेकोनत्रिंशत् । एते च देशविरतस्येव
भावनीये । पञ्चोदयस्थानानि, तद्यथा–पञ्चविंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् । एतानि सर्वाण्य-
प्याहारकसंयतस्य वैक्रियसंयतस्य वा वेदितव्यानि । त्रिंशत् स्वभावस्थसंयतस्यापि । तत्र वैक्रियसंयतानामाहारकसं-
यतानां च पृथक् पञ्चविंशतिसप्तविंशत्युदययोः प्रत्येकमेकैको भंगः, अष्टाविंशतावेकोनत्रिंशति च द्वौ द्वौ, त्रिंशति
चैकः । सर्वसंख्यया चतुर्दश । त्रिंशदुदयः स्वभावस्थस्यापि प्राप्यते । तत्र चतुश्चत्वारिंशं शतं भंगानां, तच्च देशविर-
तस्येव भावनीयं । सर्वसंख्ययाऽष्टपञ्चाशदधिकं शतं । चत्वारि सत्तास्थानानि, तद्यथा–त्रिनवतिः द्विनवतिः एकोनन-
वतिः अष्टाशीतिश्च । संप्रति संवेध उच्यते–अष्टाविंशतिबन्धकस्य पञ्चस्वप्युदयस्थानेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्य-
था–द्विनवतिरष्टाशीतिश्च । तत्राहारकसंयतस्य द्विनवतिरेव । आहारकसत्कर्मा ह्याहारकशरीरमुत्पादयति ततस्तस्य
द्विनवतिरेव । वैक्रियसंयतस्य पुनर्द्वे अपि । तीर्थकरनामसत्कर्मा चाष्टाविंशतिं न बध्नातीति त्रिनवतिर्न प्राप्यते । एको-
नत्रिंशद्बन्धकस्य पञ्चस्वप्युदयस्थानेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा–त्रिनवतिरेकोननवतिश्च । तत्राहारकसंयतस्य
त्रिनवतिरेव । तस्यैकोनत्रिंशद्बन्धकस्य नियमतस्तीर्थकराहारकसद्भावात् । वैक्रियसंयतस्य पुनर्द्वे अपि । तदेवं प्रमत्तसं-
यतस्य सर्वेष्वप्युदयस्थानेषु प्रत्येकं चत्वारि चत्वारि सत्तास्थानानि प्राप्यन्ते इति । सर्वसंख्यया विंशतिः । इदानीमप्र-
मत्तसंयतस्य बन्धादीन्युच्यन्ते–'चउ दुग चउ त्ति,' अप्रमत्तसंयतस्य चत्वारि बन्धस्थानानि, तद्यथा–अष्टाविंशतिः

एकोनत्रिंशत् त्रिंशत् एकत्रिंशत्। तत्राद्ये द्वे प्रमत्तसंयतस्येव ज्ञातव्ये। सैवाष्टाविंशतिराहारकद्विकसहिता त्रिंशत्। आहारकद्विकतीर्थकरसहिता त्वेकत्रिंशत्। एतेषु चतुर्ष्वपि बन्धस्थानेषु भङ्ग एकैक एव वेदितव्य। अस्थिराशुभायशःकीर्तिनामप्रमत्तसंयते बन्धाभावात्। द्वे उदयस्थाने, तद्यथा—एकोनत्रिंशत् त्रिंशत्। तत्रैकोनत्रिंशत् यो नाम पूर्वं प्रमत्तसंयतः सन् आहारकं वैक्रियं वा निर्वर्त्य पश्चादप्रमत्तभावं गच्छति, तस्य प्राप्यते, अत्र द्वौ भङ्गौ, एको वैक्रियस्य अपर आहारकस्य। एवं त्रिंशदुदयेऽपि द्वौ भङ्गौ। स्वभावस्थस्याप्यप्रमत्तसंयतस्य त्रिंशदुदयो भवति, तत्र भङ्गाश्चत्वारिंशं शतं। सर्वसंख्ययाऽष्टचत्वारिंशं शतं। सत्तास्थानानि चत्वारि, तद्यथा—त्रिनवतिः द्विनवतिः एकोननवतिः अष्टाशीतिश्च। सम्प्रति संवेध उच्यते—अष्टाविंशतिबन्धकस्य द्वयोरप्युदयस्थानयोरेकैकं सत्कर्म (सत्तास्थानं) अष्टाशीतिः। एकोनत्रिंशद्बन्धकस्यापि द्वयोरप्युदयस्थानयोरेकैकं सत्तास्थानं एकोननवतिः। त्रिंशद्बन्धकस्यापि द्वयोरप्युदयस्थानयोरेकैकं सत्तास्थानं द्विनवतिः। एकत्रिंशद्बन्धकस्यापि द्वयोरप्युदयस्थानयोरेकैकं सत्तास्थानं त्रिनवतिः। यस्य हि तीर्थकरमाहारकं वा सत्, स नियमात्तद्बध्नाति, तेनैकैकस्मिन् बन्धे एकैकमेव सत्तास्थानं। सर्वसंख्ययाऽष्टौ। सम्प्रत्यपूर्वकरणस्य बन्धादीन्युच्यन्ते—'पणगेग चउ त्ति,' अपूर्वकरणस्य पञ्च बन्धस्थानानि, तद्यथा—अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् एका च। तत्राद्यानि चत्वारि अप्रमत्तसंयतस्येव द्रष्टव्यानि। एका तु यशःकीर्तिः, सा च देवगतिप्रायोग्यबन्धव्यवच्छेदे सति वेदितव्या। एकमुदयस्थानं त्रिंशत्, अत्र वज्रर्षभनाराचसंहननषट्संस्थानसुस्वरदुःस्वरप्रशस्ताप्रशस्तविहायोगतिभिर्भङ्गाश्चतुर्विंशतिः। अन्ये त्वाचार्या ब्रुवते—आद्यसंहननत्रयान्यतमसंहननयुक्ता अप्युपशमश्रेणीं

प्रतिपद्यन्ते । तन्मतेन भंगा द्विसप्ततिः । एवमनिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहेष्वपि द्रष्टव्यं । चत्वारि सत्तास्थानानि, तद्यथा—त्रिनवतिः द्विनवतिः एकोननवतिः अष्टाशीतिश्च । संप्रति संवेध उच्यते—अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्बन्धकानां त्रिंशदुदये सत्तास्थानानि यथाक्रममष्टाशीतिरेकोननवतिर्द्विनवतिस्त्रिनवतिः । एकविधबन्धकस्य त्रिंशदुदये चत्वार्यपि सत्तास्थानानि, कथमिति चेदुच्यते—इहाष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्बन्धकाः प्रत्येकं देवगतिप्रायोग्यबन्धव्यवच्छेदे सत्येकविधबन्धका भवन्ति । अष्टाविंशत्यादिबन्धकानां च यथाक्रममष्टाशीत्यादीनि सत्तास्थानानि । तत एकविधबन्धे चत्वार्यपि प्राप्यन्ते । संप्रत्यनिवृत्तिबादरस्य बन्धादिस्थानान्युच्यन्ते—'एगेगमट्ठ त्ति' अनिवृत्तिबादरस्यैकं बन्धस्थानं—यशःकीर्तिः । एकमुदयस्थानं—त्रिंशत् । अष्टौ सत्तास्थानानि, तद्यथा—त्रिनवतिः द्विनवतिः एकोननवतिः अष्टाशीतिः अशीतिः एकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च । तत्राद्यानि चत्वार्युपशमश्रेण्यां क्षपकश्रेण्यां वा यावन्नामत्रयोदशकं न क्षीयते । त्रयोदशसु च नामसु यथाक्रमं त्रिनवत्यादेः क्षीणेषूपरितनानि चत्वारि सत्तास्थानानि भवन्ति । बन्धोदयस्थानभेदाभावादत्र संवेधो न संभवतीति नाभिधीयते । सूक्ष्मसंपरायस्य बन्धादीन्युच्यन्ते—'एगेगमट्ठ त्ति' सूक्ष्मसंपरायस्यैकं बन्धस्थानं—यशःकीर्तिः । एकमुदयस्थानं—त्रिंशत् । अष्टौ सत्तास्थानानि, तानि चानिवृत्तिबादरस्येव वेदितव्यानि । तत्राद्यानि चत्वार्युपशमश्रेण्यामेव, उपरितनानि तु क्षपकश्रेण्यामेव । 'छउमत्थकेवलिजिणाणं' इत्यादि, छद्मस्थजिना उपशान्तमोहाः क्षीणमोहाश्च, केवलिजिनाः सयोगिकेवलिनोऽयोगिकेवलिनश्च, तेषां यथाक्रममु-

दयसत्तास्थानानि । 'एक चऊ' इत्यादीनि, तत्रोपशान्तमोहस्यैकमुदयस्थान–त्रिंशत्। चत्वारि सत्तास्थानानि तद्यथा–त्रिनवति द्विनवति एकोननवति अष्टाशीतिश्च । क्षीणकषायस्यैकमुदयस्थान–त्रिशत् । अत्र भगाश्चतुर्विंशतिरेव, वज्रर्षभनाराचसंहननयुक्तस्यैव क्षपकश्रेण्यारम्भसम्भवात् । तत्रापि तीर्थंकरसत्कर्मण क्षीणमोहस्य सर्व सस्थानादि प्रशस्तमित्येक एव भग । चत्वारि सत्तास्थानानि, तद्यथा–अशीति एकोनाशीति षट्सप्तति पञ्चसप्ततिश्च । एकोनाशीतिपञ्चसप्तती अतीर्थकरसत्कर्मणो वेदितव्ये, अशीतिषट्सप्तती तु तीर्थंकरसत्कर्मण । सयोगिकेवलिनोऽष्टावुदयस्थानानि, तद्यथा–विंशति एकविंशति षड्विंशति सप्तविंशति अष्टाविंशति एकोनत्रिंशत् त्रिशत् एकत्रिंशत् । एतानि सामान्यतो नाम्न उदयस्थानचिन्ताया सप्रपञ्च विवृतानीति न भूयो विव्रियन्ते । चत्वारि सत्तास्थानानि, तद्यथा–अशीतिः एकोनाशीति षट्सप्तति पञ्चसप्तति । सप्रति सवेध उच्यते–स च जीवस्थानेषु पर्याप्तसज्ञिद्वारे यथा कृतस्तथाऽत्रापि भावयितव्य । अयोगिकेवलिनो द्वे उदयस्थाने, तद्यथा–नवाष्टौ च । तत्राष्टोदयोऽतीर्थकरायोगिकेवलिन , नवोदयस्तीर्थंकरायोगिकेवलिन । षट् सत्तास्थानानि, तद्यथा–अशीति एकोनाशीति षट्सप्तति पञ्चसप्तति नव अष्टौ च । तत्राष्टोदये त्रीणि सत्तास्थानानि तद्यथा–एकोनाशीति पञ्चसप्तति अष्टौ च । तत्राद्ये द्वे यावत् द्विचरमसमयस्तावत् प्राप्यते । चरमसमयेऽष्टौ । नवोदये त्रीणि सत्तास्थानानि, तद्यथा–अशीति षट्सप्तति नव च । तत्राद्ये द्वे यावद्द्विचरमसमय , चरमसमये नव ॥ ५२ ॥

तदेवं गुणस्थानकेषु बन्धोदयसत्तास्थानान्युक्तानि, साम्प्रतं गत्यादिषु मार्गणास्थानेषु तानि विचिन्तयिषुः प्रथमतो गतिषु तावच्चिन्तयन्नाह—

**दो छक्कट्ठ चउक्कं पण नव एक्कार छक्कगं उदया। नेरइआईसु सत्ता ति पंच एक्कारस चउक्कं ॥ ५२ ॥**

टीका—नैरयिकतिर्यङ्मनुष्यदेवानां यथाक्रमं द्वे षट् अष्टौ चत्वारि बन्धस्थानानि। तत्र नैरयिकाणामिमे द्वे, तद्यथा—एकोनत्रिंशत् त्रिंशत्। तत्रैकोनत्रिंशत् मनुष्यगतिप्रायोग्या तिर्यग्गतिप्रायोग्या च वेदितव्या। त्रिंशत् तिर्यक्पञ्चेन्द्रियप्रायोग्या उद्योतसहिता। मनुष्यगतिप्रायोग्या तु तीर्थकरसहिता। भंगाश्च सर्वत्रापि प्रागुक्ताः सर्वेऽपि द्रष्टव्याः। तिरश्चां षट् बन्धस्थानानि, तद्यथा—त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत्। एतानि प्रागिव सप्रभेदानि वक्तव्यानि। केवलमेकोनत्रिंशत्त्रिंशच्च या तीर्थकराहारकसहिता सा न वक्तव्या, तिरश्चां तीर्थकराहारकबन्धासंभवात्। मनुष्याणामष्टौ बन्धस्थानानि, तद्यथा—त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् एका च। एतान्यपि प्रागिव सप्रभेदानि वक्तव्यानि, मनुष्याणां चतुर्गतिकप्रायोग्यबन्धसंभवात्। देवस्य चत्वारि बन्धस्थानानि, तद्यथा—पञ्चविंशतिः षड्विंशतिः एकोनत्रिंशत् त्रिंशत्। अत्र पञ्चविंशतिः षड्विंशतिश्च पर्याप्तबादरप्रत्येकसहितमेकेन्द्रियप्रायोग्यं बध्नतो वेदितव्या। अत्र स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिभिरष्टौ भंगाः। षड्विंशतिः आतपोद्योतान्यतरसहिता भवति, ततोऽत्र भंगाः षोडश। एकोनत्रिंशत् मनुष्यगतिप्रायोग्या तिर्यक्पञ्चेन्द्रियप्रायोग्या च सप्रभेदाऽवसेया। त्रिंशत्पुनस्तिर्यक्पञ्चेन्द्रियप्रायोग्या उद्योतसहिता अष्टाधिकषट्चत्वारिंशच्छत-

सम्यग्भेदोपेता प्रागिव सप्रभेदा वक्तव्या । या तु मनुष्यगतिप्रायोग्या तीर्थंकरनामसहिता, तत्र स्थिरास्थिरशुभाशुभ-यशःकीर्त्ययशःकीर्तिभिरष्टौ भङ्गाः । सम्प्रत्युदयस्थानान्यभिधीयन्ते–'पण नव एक्कार ठक्कं उदया' नैरयिकाणां पञ्च उदया उदयस्थानानि, तद्यथा–एकविंशति पञ्चविंशति· सप्तविंशति· अष्टाविंशतिः एकोनत्रिंशत् । एतानि सप्रभेदानि प्रागिव वक्तव्यानि । तिरश्चां नव उदयस्थानानि, तद्यथा–एकविंशति चतुर्विंशति· पञ्चविंशति षड्विंशति· सप्तविंशति अष्टाविंशति एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् । एतानि एकेन्द्रियविकलेन्द्रियसवैक्रियावैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य सप्रभेदानि प्रागिव वक्तव्यानि । मनुष्याणामेकादशोदयस्थानानि, तद्यथा–विंशति एकविंशति पञ्चविंशतिः षड्विंशति· सप्तविंशति अष्टाविंशति· एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् नव अष्टौ च । एतानि च स्वभावस्थमनुष्यवैक्रियमनुष्या-हारकसंयततीर्थकरातीर्थकरसयोग्ययोगिकेवलिनोऽधिकृत्य प्राग्वद्भावनीयानि । देवानां षडुदयस्थानानि, तद्यथा–एकविंशति पञ्चविंशति· सप्तविंशति अष्टाविंशति एकोनत्रिंशत् त्रिंशत् । एतान्यपि प्रागि(गे)व सप्रपञ्चमुक्तानि, न भूय उच्यन्ते । सम्प्रति सत्तास्थानान्यभिधीयन्ते–'संता ( सत्ता ) ति पण एक्कारस चउक्क' नैरयिकाणां सत्तास्थानानि त्रीणि, तद्यथा–द्विनवति· एकोननवति· अष्टाशीतिश्च । एकोननवतिर्बद्धतीर्थकरनाम्नो मिथ्यात्वं गतस्य नरकेषूत्पद्यमानस्या-वसेया । त्रिनवतिस्तु न संभवति, तीर्थकराहारकसत्कर्मणो नरकेषूत्पादाभावात् । तिरश्चां पञ्च सत्तास्थानानि–द्विनवति अष्टाशीति षडशीति अशीति अष्टसप्ततिश्च । तीर्थकरसंबन्धीनि क्षपकसंबन्धीनि च सत्तास्थानानि न संभवन्ति, तीर्थकरनाम्न क्षपकश्रेण्याश्च तिर्यक्ष्वभावात् । मनुष्याणामेकादश सत्तास्थानानि, तद्यथा–त्रिनवति द्विनवति एकोन

नवतिः अष्टाशीतिः षडशीतिः अशीतिः एकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिः नव अष्टौ। अष्टसप्ततिस्तु न संभवति, मनुष्याणामवश्यं मनुष्यद्विकसंभवात्। देवानां चत्वारि सत्तास्थानानि, तद्यथा–त्रिनवतिः द्विनवतिः एकोननवतिः अष्टाशीतिः। शेषाणि तु न संभवन्ति। शेषाणि हि कानिचित् एकेन्द्रियसंबन्धीनि कानिचित् क्षपकसंबन्धीनि, ततः कथं तानि देवानां भवितुमर्हन्ति ?। संप्रति संवेध उच्यते–नैरयिकस्य तिर्यग्गतिप्रायोग्यामेकोनत्रिंशतं बध्नतः पञ्च उदयस्थानानि, तानि चानन्तरमेवोक्तानि, तेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा–द्विनवतिः अष्टाशीतिः। तीर्थकरसत्कर्मणस्तिर्यग्गतिप्रायोग्यबन्धासंभवादेकोननवतिर्न लभ्यते। मनुष्यगतिप्रायोग्यां त्वेकोनत्रिंशतं बध्नतः पञ्चस्वप्युदयस्थानेषु प्रत्येकं त्रीणि त्रीणि सत्तास्थानानि, तद्यथा–द्विनवतिः एकोननवतिः अष्टाशीतिश्च। तीर्थकरसत्कर्मा हि नरकेषूत्पन्नो यावन्मिथ्यादृष्टिस्तावदेकोनत्रिंशतं बध्नाति। सम्यक्त्वं तु प्रतिपन्नस्त्रिंशतं बध्नाति, तीर्थकरनामकर्मणोऽपि बन्धात्। तिर्यग्गतिप्रायोग्यामुद्योतसहितां त्रिंशतं बध्नतः पञ्चस्वप्युदयस्थानेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा–द्विनवतिरष्टाशीतिश्च। एकोननवत्यभावभावना प्रागिव भावनीया। मनुष्यगतिप्रायोग्यां तीर्थकरनामसहितां त्रिंशतं बध्नतः पञ्चस्वप्युदयस्थानेषु प्रत्येकमेकैकं सत्तास्थानं–एकोननवतिः। सर्वबन्धस्थानोदयस्थानापेक्षया सत्तास्थानानि त्रिंशत्। संप्रति तिरश्चां संवेध उच्यते–त्रयोविंशतिबन्धकस्य तिरश्च एकविंशत्यादीनि नव उदयस्थानानि। तानि चानन्तरमेवोक्तानि। तत्राद्येषु चतुर्षु एकविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशतिरूपेषु प्रत्येकं पञ्च पञ्च सत्तास्थानानि, तद्यथा–द्विनवतिः अष्टाशीतिः षडशीतिः अशीतिः अष्टसप्ततिः। इहाष्टसप्ततिस्तेजोवायून् तद्भवादुद्वृत्तान् वाऽधिकृत्य वेदितव्या। शेषेषु तु

सप्तविंशत्यादिषु पञ्चसूदयस्थानेषु अष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि । सप्तविंशत्याद्युदयेषु हि नियमतो मनुष्यगतिद्विकसत्त्वादष्टसप्ततिर्न लभ्यते । एव पञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्बन्धकानामपि वक्तव्य । नवरमेकोनत्रिंशत मनुष्यगतिप्रायोग्यां बध्नत सर्वेष्वप्युदयस्थानेष्वष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि । अष्टाविंशतिबन्धकस्य अष्टावुदयस्थानानि, तद्यथा–एकविंशति पञ्चविंशति षड्विंशति सप्तविंशति अष्टाविंशति[1] एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् । तत्रैकविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपा पञ्च उदयाः क्षायिकसम्यग्दृष्टीना वेदकसम्यग्दृष्टीना वा द्वाविंशतिसत्कर्मणा पूर्ववत्त्वायुषामवगन्तव्या । एकैकस्मिश्च द्वे द्वे सत्तास्थाने, तद्यथा–द्विनवति अष्टाशीतिश्च । पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियतिरश्चा वेदितव्यौ । तत्रापि ते एव द्वे द्वे सत्तास्थाने । त्रिंशदेकत्रिंशदुदयौ सर्वपर्याप्तिपर्याप्ताना सम्यग्दृष्टीना मिथ्यादृष्टीना वाऽवसेयौ । एकैकस्मिश्च त्रीणि त्रीणि सत्तास्थानानि, तद्यथा–द्विनवतिरष्टाशीति षडशीतिश्च । षडशीतिर्मिथ्यादृष्टीनामवगन्तव्या । सम्यग्दृष्टीना तु न सम्भवति, तेषामवश्य देवद्विकादिबन्धसम्भवात् । तदेव सर्वबन्धस्थानसर्वोदयस्थानापेक्षया सत्तास्थानाना द्वे शते अष्टादशाधिके । तथा हि–त्रयोविंशतिपञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्बन्धेषु प्रत्येकं चत्वारिंशच्चत्वारिंशत् । अष्टाविंशतिबन्धे चाष्टादश । सम्प्रति मनुष्याणा सवेध उच्यते–तत्र मनुष्यस्य त्रयोविंशतिबन्धकस्योदया सप्त, तद्यथा–एकविंशति पञ्चविंशति षड्विंशति सप्तविंशति अष्टाविंशति एकोनत्रिंशत् त्रिंशत् । शेषाः संयतोदया इति न सम्भवन्ति । त्रयोविंशतिबन्धकस्य पञ्चवि-

---

१ केवल्युदया इति द्वि ।

शतिसप्तविंशत्युदयौ च वैक्रियकारिणो वेदितव्यौ । एकैकस्मिंश्च चत्वारि चत्वारि सत्तास्थानानि, तद्यथा—द्विनवतिः अष्टाशीतिः षडशीतिः अशीतिश्च । नवरं पञ्चविंशत्युदये सप्तविंशत्युदये च द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च । शेषाणि तु सत्तास्थानानि तीर्थंकरक्षपकश्रेणिकेवलिसंबन्धीनि शेषगतिप्रायोग्यानि चेति कृत्वा न संभवन्ति । सर्वसंख्यया चतुर्विंशतिः । एवं पञ्चविंशतिषड्विंशतिबन्धकानामपि वक्तव्यं । मनुजगतिप्रायोग्यां तिर्यग्गतिप्रायोग्यां चैकोनत्रिंशतं त्रिंशतं च बध्नतामप्येवमेव । अष्टाविंशतिबन्धकानां सप्त उदयाः, तद्यथा—एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् । तत्रैकविंशतिषड्विंशत्युदयौ अविरतसम्यग्दृष्टेः । करणापर्याप्तस्य पञ्चविंशतिसप्तविंशत्युदयौ । वैक्रियस्याहारकसंयतस्य वा अष्टाविंशत्येकोनत्रिंशतौ । अविरतसम्यग्दृष्टिवैक्रियाहारकसंयतानां त्रिंशत् । सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा एकैकस्मिन् द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च । आहारकसंयतस्य द्विनवतिरेव । त्रिंशदुदये चत्वारि सत्तास्थानानि, तद्यथा—द्विनवतिः एकोननवतिः अष्टाशीतिः षडशीतिश्च । तत्रैकोननवतिर्नरकगतिप्रायोग्यामष्टाविंशतिं बध्नतो मिथ्यादृष्टेरवसेया । सर्वसंख्ययाऽष्टाविंशतिबन्धे षोडश सत्तास्थानानि । देवगतिप्रायोग्यामेकोनत्रिंशतं तीर्थंकरसहितां बध्नतः सप्त उदयस्थानानि, तानि चाष्टाविंशतिबन्धकानामिव द्रष्टव्यानि । नवरमिह त्रिंशदुदयः सम्यग्दृष्टीनामेव वक्तव्यः, यत एकोनत्रिंशद्बन्धस्तीर्थंकरनामसहितस्तीर्थंकरनाम च बन्धमायाति सम्यग्दृष्टीनामिति । सर्वेष्वपि चोदयस्थानेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा—त्रिनवतिरेकोननवतिश्च । आहारकसंयतस्य त्रिनवतिरेव । सर्वसंख्यया चतुर्दश । आहारकसहितां त्रिंशतं बध्नतो द्वे उदयस्थाने,

तद्यथा—एकोनत्रिंशत्त्रिंशत् । तत्र यो नामाहारकसंयतोऽन्तिमकालेऽप्रमत्तस्य प्रतीत्यैकोनत्रिंशद्वेदितव्या । अन्यत्रैकोनत्रिंशति श्चाहारकबन्धहेतोर्विशिष्टसंयमस्यासंभवात् । द्वयोरप्युदयस्थानयो प्रत्येकमेकैकं सत्तास्थानं द्विनवति । एकत्रिंशद्बन्धकस्य एकमुदयस्थानं त्रिंशत्, एकं सत्तास्थानं त्रिनवति । एकविधबन्धकस्यैकमुदयस्थानं त्रिंशत् अष्टौ सत्तास्थानानि, तद्यथा—त्रिनवति द्विनवति एकोननवति अष्टाशीति अशीति एकोनाशीति षट्सप्तति पञ्चसप्ततिश्च । सर्वबन्धस्थानोदयस्थानापेक्षया सत्तास्थानानि शतमेकोनपष्ट्यधिकं, तद्यथा—त्रयोविंशतिपञ्चविंशतिषड्विंशतिबन्धेषु प्रत्येकं चतुर्विंशति । अष्टाविंशतिबन्धे षोडश । मनुजतिर्यग्गतिप्रायोग्यैकोनत्रिंशत्त्रिंशद्बन्धे प्रत्येकं चतुर्विंशति श्चतुर्विंशति । देवगतिप्रायोग्यतीर्थकरनामसहितैकोनत्रिंशद्बन्धे चतुर्दश । एकत्रिंशद्बन्धे एक । एकप्रकृतिबन्धेऽष्टाविति । बन्धाभावे उदयस्थानसत्तास्थानयो परस्परसंवेध सामान्यत संवेधचिन्तायामिव वेदितव्य । सम्प्रति देवानां संवेध उच्यते—देवानां पञ्चविंशतिबन्धकानां षट्स्वप्युदयस्थानेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा—द्विनवतिरष्टाशीतिश्च । एवं षड्विंशत्येकोनत्रिंशद्बन्धकानामपि वेदितव्यं । उद्योतसहिता तिर्यक्पञ्चेन्द्रियप्रायोग्या त्रिंशतमपि बध्नतामेवमेव । तीर्थकरसहिता पुनस्त्रिंशतमर्थान्मनुष्यगतिप्रायोग्या बध्नत षट्स्वपि उदयस्थानेषु द्वे द्वे सत्तास्थाने, तद्यथा—त्रिनवतिरेकोननवतिश्च । सर्वसंख्यया सत्तास्थानानि षष्टि ॥ ५३ ॥

---

१ आहारकमोक्षकाले । २ अप्रमत्तं विहाय ।

तदेवं गतिमाश्रित्योक्तं, संप्रति इन्द्रियमाश्रित्याभिधीयते—

**इगविगलिंदिय सगले पणपंच य अट्ठ बंधठाणाणि । पणछक्केक्कारुदया पण पण बारसय संताणि ॥ ५४ ॥**

टीका–एकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियाणां यथाक्रमं बन्धस्थानानि पञ्च पञ्च अष्टौ । तत्रैकेन्द्रियाणाममूनि पञ्च बन्धस्थानानि, तद्यथा–त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिः एकोनत्रिंशत् त्रिंशत् । तत्र देवगतिप्रायोग्यामेकोनत्रिंशतं त्रिंशतं च वर्जयित्वा शेषाणि सर्वाण्यपि सर्वगतिप्रायोग्यानि सप्रभेदानि बन्धस्थानानि वक्तव्यानि । विकलेन्द्रियाणां त्रयाणामपीमान्येव पञ्च पञ्च बन्धस्थानानि । पञ्चेन्द्रियाणां सर्वाण्यपि बन्धस्थानानि सर्वगतिप्रायोग्यानि सप्रभेदानि द्रष्टव्यानि । संप्रत्युदयस्थानान्युच्यन्ते–'पणछक्केक्कारुदय त्ति' एकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियाणां यथाक्रमं पञ्च षट् एकादश उदयस्थानानि । तत्रैकेन्द्रियाणाममूनि पञ्चोदयस्थानानि, तद्यथा–एकविंशतिः चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिश्च । एतानि सप्रभेदानि प्रागिव वेदितव्यानि । विकलेन्द्रियाणां षडुदयस्थानानि, तद्यथा–एकविंशतिः षड्विंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् । एतान्यपि यथाधस्तादुक्तानि तथैव वक्तव्यानि । पञ्चेन्द्रियाणाममून्येकादशोदयस्थानानि,तद्यथा–विंशतिः एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् नव अष्टौ । एकेन्द्रियविकलेन्द्रियसत्कान्युदयस्थानानि वर्जयित्वा शेषाणि सर्वाण्यपि पञ्चेन्द्रियाणां सप्रभेदानि वक्तव्यानि । संप्रति सत्तास्थानान्युच्यन्ते–'पण पण बारसय संताणि त्ति' एकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियाणां यथाक्रमं पञ्च पञ्च द्वादश सत्तास्थानानि । तत्रैकेन्द्रियविकलेन्द्रियाणां पञ्चेमानि, तद्यथा–द्विनवतिः

अष्टाशीति षडशीति अशीतिः अष्टसप्ततिश्च। पञ्चेन्द्रियाणां सर्वाण्यपि सत्तास्थानानि । तदेव सामान्यतो बन्धोदयसत्तास्थानान्युक्तानि, सम्प्रति संवेध उच्यते–एकेन्द्रियाणां त्रयोविंशतिबन्धकानामाद्येषु चतुर्षूदयस्थानेषु पूर्वोक्तानि पञ्च पञ्च सत्तास्थानानि। सप्तविंशत्युदये त्वष्टसप्ततिवर्जानि शेषाणि चत्वारि । एवं पञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्बन्धकानामपि वक्तव्यं। सर्वसंख्यया सत्तास्थानानि विंशं शतं। विकलेन्द्रियाणां त्रयोविंशतिबन्धकानामेकविंशत्युदये षड्विंशत्युदये च पञ्च पञ्च सत्तास्थानानि। शेषेषु तु चतुर्षूदयस्थानेषु अष्टसप्ततिवर्जानि शेषाणि चत्वारि चत्वारि सत्तास्थानानि । एवं पञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्बन्धकानामपि वक्तव्यं । सर्वसंख्यया सत्तास्थानानि त्रिंशं शतं। पञ्चेन्द्रियाणां त्रयोविंशतिबन्धकानां षट् उदयस्थानानि, तद्यथा–एकविंशतिः षड्विंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् एकत्रिंशत्। एतानि तिर्यक्पञ्चेन्द्रियान् मनुष्यांश्चाधिकृत्य भावनीयानि। अत्रैकविंशत्युदये षड्विंशत्युदये च प्रत्येकं पञ्च पञ्च अनन्तरोक्तानि सत्तास्थानानि । शेषेषूदयेष्वष्टसप्ततिवर्जानि शेषाणि चत्वारि चत्वारि सत्तास्थानानि । सर्वसंख्यया षड्विंशतिः सत्तास्थानानि । पञ्चविंशतिबन्धकस्याष्टौ उदयस्थानानि, तद्यथा–एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् । इहैकविंशत्युदये षड्विंशत्युदये च पञ्च पञ्चानन्तरोक्तानि सत्तास्थानानि । पञ्चविंशत्युदये सप्तविंशत्युदये च द्वे द्वे सत्तास्थाने, तद्यथा–द्विनवतिरष्टाशीतिश्च । शेषेष्वष्टाविंशत्यादिषु चतुर्षूदयस्थानेषु प्रत्येकमष्टसप्ततिवर्जानि शेषाणि चत्वारि चत्वारि सत्तास्थानानि । सर्वसंख्यया त्रिंशत् सत्तास्थानानि । एवं षड्विंशतिबन्धकानामपि । अष्टाविंशतिबन्धकानामष्टावुदयस्थानानि, तद्यथा–एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिः अष्टाविंशतिः एकोनत्रिंशत् त्रिंशत्

एकत्रिंशत् । एतानि तिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य वेदितव्यानि । एकविंशत्यादिष्वेकोनत्रिंशत्पर्यन्तेषु प्रत्येकं द्वे द्वे सत्तास्थाने, तद्यथा–द्विनवतिरष्टाशीतिश्च । त्रिंशदुदये चत्वारि–द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिश्च । एकोननवतिस्तीर्थकरनामसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यं बध्नतोऽवसेया । शेषाणि पुनः सामान्यतस्तिरश्चो मनुष्यान् वाऽधिकृत्य वेदितव्यानि । एकत्रिंशदुदये त्रीणि, तद्यथा–द्विनवतिरष्टाशीतिः षडशीतिश्च । एतानि तिर्यक्पञ्चेन्द्रियाणामवसेयानि, अन्यत्र पञ्चेन्द्रियस्य सत एकत्रिंशदुदयाभावात् । षडशीतिश्च मिथ्यादृष्टीनां तिर्यक्पञ्चेन्द्रियाणामवसेया, न सम्यग्दृष्टीनां, सम्यग्दृष्टीनामवश्यं देवद्विकबन्धसंभवेनाष्टाशीतिसंभवात् । अत्र सर्वसंख्यया सत्तास्थानान्येकोनविंशतिः । एकोनत्रिंशद्बन्धकस्य तान्येवाष्टावुदयस्थानानि । तत्रैकविंशत्युदये षड्विंशत्युदये च सप्त सप्त सत्तास्थानानि । तद्यथा–द्विनवतिः अष्टाशीतिः षडशीतिः अशीतिः अष्टसप्ततिः त्रिनवतिः एकोननवतिः । तत्र तिर्यग्गतिप्रायोग्यामेकोनत्रिंशतं बध्नत आद्यानि पञ्च, मनुष्यगतिप्रायोग्यं बध्नत आद्यानि चत्वारि, देवगतिप्रायोग्यं बध्नतोऽन्तिमे द्वे । अष्टाविंशत्येकोनत्रिंशत्त्रिंशदुदयेषु तान्येवाष्टसप्ततिवर्जानि षट् षट् सत्तास्थानानि । एकत्रिंशदुदये आद्यानि चत्वारि । पञ्चविंशतिसप्तविंशत्युदययोः पुनरिमानि चत्वारि चत्वारि, तद्यथा–द्विनवतिः अष्टाशीतिः त्रिनवतिः एकोननवतिश्च । सर्वांकस्थापना । ३१/४ २१/७ २५/४ २६/७ २७/४ २८/६ २९/६ ३०/६ सर्वसंख्ययैकोनत्रिंशद्बन्धे चतुश्चत्वारिंशत् सत्तास्थानानि । त्रिंशद्बन्धकस्यापि तान्येवाष्टावुदयस्थानानि, तान्येव च प्रत्येकं सत्तास्थानानि । केवलमिहैकविंशत्युदये आद्यानि द्विनवत्यष्टाशीतिषडशीत्यशीत्यष्टसप्ततिरूपाणि पञ्च सत्तास्थानानि तिर्यग्गतिप्रायोग्यामेव त्रिंशतं बध्नतो वेदितव्यानि, न मनुष्यग-

तिप्रायोग्या, तस्यास्तीर्थकरनामसहितत्वात् । देवगतिप्रायोग्या तु त्रिशदाहारकद्विकसहिता सा एकविंशत्युदये न सत्र- यति । त्रिनवत्येकोननवती मनुष्यगतिप्रायोग्या त्रिशत बध्नतो देवस्य वेदितव्ये । पड्विंशत्युदये च तान्येव पञ्च सत्ता- स्थानानि, न त्रिनवत्येकोननवती । पड्विंशत्युदयो हि तिरश्चा मनुष्याणा वाऽपर्याप्तावस्थाया । न च तदानी देवगति- प्रायोग्याया मनुष्यगतिप्रायोग्यायास्त्रिशतो बन्धोऽस्तीति त्रिनवत्येकोननवती न प्राप्येते, शेष तथैव । सर्वाकस्थापना । सर्वसख्यया त्रिशति बन्धे द्विचत्वारिंशत् सत्तास्थानानि । एकत्रिशद्बन्धकस्य एकविधबन्धकस्य च उदयसत्तास्थानस- वेधो यथा प्राक् मनुष्यस्योक्तस्तथैव वक्तव्य । तदेवमिन्द्रियाण्यधिकृत्य सवेध उक्त ॥ ५४ ॥

इय कम्मपगइठाणाइ सुट्ठु बधुदयसंतकम्माणं । गइआइएहिं अट्ठसु चउप्पगारेण नेयाणि ॥ ५५ ॥

टीका–इत्युक्तेन प्रकारेण बन्धोदयसत्कर्मणा बन्धोदयसत्ताना सबन्धीनि कर्मप्रकृतिस्थानानि सुट्ठु अत्यन्तमुपयोग कृत्वा गत्यादिभि "गइ इदिए य काए जोए वेए कसाय नाणे य । सजमदसणलेसा भव सम्मे सन्नि आहारे ॥ १ ॥" इत्येवरूपैश्चतुर्दशभिर्मार्गणास्थानैरष्टसु अनुयोगद्वारेषु "सतपयपरूवणया दव्वपमाण च खित्तफुसणा य । कालो य अतर भाग भावे अप्पाबहु चेव ॥ १ ॥" इत्येवरूपेषु ज्ञातव्यानि । तत्र सत्पदप्ररूपणया सवेधो गुणस्थानकेषु सामा- न्येनोक्त॰ । विशेषतस्तु गतीरिन्द्रियाणि चाश्रित्य एतदनुसारेण काययोगादिष्वपि मार्गणास्थानेषु वक्तव्य॰ । शेषाणि तु द्रव्यप्रमाणादीनि सप्तानुयोगद्वाराणि कर्मप्रकृतिप्राभृतादीन् ग्रन्थान् सम्यक् परिज्ञाय वक्तव्यानि । ते च कर्मप्रकृ- तिप्राभृतादयो ग्रन्था न सप्रति वर्तन्ते इति लेशतोऽपि दर्शयितुं न शक्यते । यस्त्वैदयुगीनेऽपि श्रुते सम्यगत्यन्तम-

न्नियोगमास्थाय पूर्वापरौ परिन्नाव्य दर्शयितुं शक्नोति, तेनावश्यं दर्शयितव्यानि। प्रज्ञोन्मेषो हि सतामद्यापि तीव्रती-व्रतरक्षयोपशमन्नावेनासीमो विजयमानो लक्ष्यते। अपि चान्यदपि यत्किञ्चिदिह क्षुण्णमापतितं तत्तेनापनीय तस्मिन् स्थानेऽन्यत्समीचीनमुपदेष्टव्यं। सन्तो हि परोपकारकरणैकरसिका न्नवन्तीति। कथं पुनरष्टस्वप्यनुयोगद्वारेषु बन्धोदयसत्तास्थानानि ज्ञातव्यानीत्यत आह—चतुःप्रकारेण प्रकृतिस्थित्यनुन्नागप्रदेशरूपेण। तत्र प्रकृतिगतानि बन्धोदयसत्तास्थानानि प्राय उक्तानि, एतदनुसारेण स्थित्यनुन्नागप्रदेशगतान्यपि न्नावनीयानि। इह बन्धोदयसत्तास्थानसंवेधे चिन्त्यमाने उदयग्रहणेनोदीरणापि गृहीता द्रष्टव्या, उदये सत्यवश्यं उदीरणाया अपि न्नावात्॥ ५५॥

तथा चाह—

**उदयस्सुदीरणाए सामित्ताउ न विज्जइ विसेसो। मोत्तूण य इगयालं सेसाणं सव्वपगईणं॥ ५६॥**

टीका—इह कालप्राप्तानां कर्मपरमाणूनामनुन्नवनमुदयः। अकालप्राप्तानामुदयावलिकाबहिःस्थितानां कषायसहितेनासहितेन वा योगसंज्ञकेन वीर्यविशेषेण समाकृष्योदयप्राप्तैः कर्मपरमाणुन्निः सहानुन्नवनमुदीरणा। अनयोरुदयोदीरणयोः स्वामित्वात् स्वामित्वमधिकृत्य विशेषो न विद्यते। एतदुक्तं न्नवति—य एव ज्ञानावरणादीनां कर्मणामुदयस्वामी स एव तेषां कर्मणामुदीरणाया अपि स्वामी "जत्थ उदउ तत्थ उदीरणा, जत्थ उदीरणा तत्थ उदउ" इतिवचनप्रामाण्यात्। तत्रातिप्रसक्तं लक्षणमित्यपवादमाह—'मोत्तूण य' इत्यादि, मुक्त्वा एकचत्वारिंशतं एकचत्वारिंशत्प्रकृतीर्मुक्त्वा शेषाणां सर्वासां प्रकृतीनामुदयोदीरणयोः स्वामिनं प्रति न विशेषः॥ ५६॥

तेन वेदेन श्रेणिं प्रतिपन्नस्यान्तरकरणे कृते तस्य तस्य वेदस्य प्रथमस्थितावावलिकाशेषायामुदय एव नोदीरणा । चतुर्णामप्यायुषां स्वस्वभवपर्यन्तावलिकायामुदय एव नोदीरणा । अन्यच्च मनुष्यायुषः प्रमत्तगुणस्थानकादूर्ध्वमुदीरणा न भवति किं तूदय एव केवलः ॥ ५७ ॥

**मणुयगइ जाइ तस बायरं च पज्जत्त सुभगमाइज्जं । जसकित्ती तित्थयरं नामस्स हवंति नव एया (उच्चं)**

टीका—तथा मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकररूपाणां नवनामप्रकृतीनां उच्चैर्गोत्रस्य च सयोगिकेवलिगुणस्थानकं यावत् युगपदुदयोदीरणे । अयोग्यवस्थायां तूदय एव नोदीरणा ॥ ५८ ॥

संप्रति कस्मिन् गुणस्थानके काः प्रकृतीर्बध्नातीति बन्धविशेषनिरूपणार्थमाह—

**तित्थगराहारगविरहियाउ अज्जेइ सव्वपगईउ । मिछत्तवेयगो सासणो वि इगुवीससेसाउ ॥ ५९ ॥**

टीका—इह बन्धे प्रकृतीनां विंशं शतमधिक्रियते, एतच्च प्रागेव प्रकृतिवर्णनायामुक्तं । तत्र मिथ्यात्ववेदको मिथ्यादृष्टिस्तीर्थकराहारकशरीराहारकांगोपांगवर्जाः शेषाः सर्वा अपि प्रकृतीः सप्तदशोत्तरशतसंख्या अर्जयति बध्नाति । तीर्थकराहारकद्विके तु न तस्य बन्धमायातः, तयोर्यथासंख्यं सम्यक्त्वसंयमप्रत्ययत्वात् । तथा सासादनोऽपि सासादनसम्यग्दृष्टिरपि एकोनविंशतिशेषा एकोनविंशतिवर्जाः शेषा एकोत्तरशतसंख्याः प्रकृतीर्बध्नाति । तत्र तिस्रः प्रकृतयः प्राक्तन्य एव, तासां बन्धाभावे कारणमिहापि तदेवानुसरणीयं । शेषास्तु षोडश प्रकृतय इमाः—मिथ्यात्वं नपुंसकवेदः नरकगतिः नरकानुपूर्वी नरकायुः एकद्वित्रिचतुरिन्द्रियजातयः हुंडसंस्थानं सेवार्तसंहननं आतपनाम स्थावरनाम

तेन ...शद्बन्धायोग्याः प्राक्तन्य एव शेषास्तु चतस्रः प्रकृतयः प्रत्याख्यानावरणक्रोधमानमायालोभरूपाः । एता हि एव बन्धं प्रतीत्य व्यवच्छिन्नाः ॥ ६० ॥

संप्रति प्रतिषेद्धव्याः प्रकृतयो बह्व्यो बन्धयोग्यास्तु स्तोका इति बन्धयोग्या एव निर्दिशति—

**इगुसठिमप्पमत्तो बंधइ देवाउयस्स इयरो वि । अठ्ठावण्णमपुव्वे छप्पण्णं वा वि छव्वीसा ॥ ६१ ॥**

टीका—अप्रमत्तोऽप्रमत्तसंयत एकोनषष्टिप्रकृतीर्बध्नाति । ताश्च प्रमत्तसंयतस्य बन्धयोग्यास्त्रिषष्टिप्रकृतयोऽसातवेदनीयारतिशोकास्थिराशुभायशःकीर्तिवर्जा आहारकद्विकसहिता वेदितव्याः । असातवेदनीयादयो हि षड् प्रकृतयः प्रमत्तसंयतगुणस्थानक एव बन्धं प्रतीत्य व्यवच्छिन्नाः । आहारकद्विकं चाप्रमत्तो विशिष्टसंयमभावात् बध्नाति । तत एकोनषष्टिप्रकृतयोऽप्रमत्तस्य बन्धयोग्याः । 'देवाउयस्स इयरो वित्ति' इतरोऽपि अप्रमत्तोऽपि देवायुषो बन्धकः । तेनैतत् सूच्यते—प्रमत्तसंयत एवायुर्बन्धं प्रथमत आरभते, आरभ्य च कश्चिदप्रमत्तभावमपि गच्छति, तत एव प्रमसंयतोऽपि देवायुषो बद्धा भवति, न पुनरप्रमत्तसंयत एव सन् प्रथमत आयुर्बन्धमारभते । तथाऽपूर्वोऽपूर्वकरणोऽष्टपञ्चाशत्प्रकृतीर्बध्नाति, तस्य देवायुर्बन्धाभावात् । ताश्चाष्टपञ्चाशत्प्रकृतीस्तावद्बध्नाति यावदपूर्वकरणाद्धायाः संख्येयतमो भागो गतो भवति । ततो निद्राप्रचलयोरपि बन्धव्यवच्छेदात् षट्पञ्चाशत्प्रकृतीर्बध्नाति, ता अपि तावद्यावदपूर्वकरणाद्धाया एकः संख्येयतमो भागोऽवशिष्यते । ततो देवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियांगोपांगाहारकशरीराहारकांगोपांगतैजसकार्मणसमचतुरस्रसंस्थानवर्णरसगन्धस्पर्शागुरुलघूपघातपराघातोच्छ्वासप्रशस्तविहायोगतित्र-

सबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेयनिर्माणतीर्थकररूपाणां त्रिंशत्प्रकृतीनां बन्धव्यवच्छेदात् शेषाः षड्विंशतिप्रकृतीर्बध्नाति, ता अपि तावद्बध्नाति यावदपूर्वकरणाद्धायाश्चरमसमयः, तस्मिंश्च समये हास्यरतिभयजुगुप्साबन्धं प्रतीत्य व्यवच्छिद्यन्ते ॥ ६१ ॥

वावीसा एगुणं बंधइ अट्ठारसंतमनियट्टी । सत्तरसुहुमसरागो सायममोहो सजोगो त्ति ॥ ६२ ॥

टीका–अनिवृत्ति अनिवृत्तिबादरो द्वाविंशतिप्रकृतीर्बध्नाति । ताश्च तावद्यावदनिवृत्तिबादरसंपरायाद्धाया संख्येया भागा गता भवन्ति, एकोऽवतिष्ठते, तत एकोनामेकैकप्रकृत्यून बध्नाति तावद्यावदष्टादशान्त । एतदुक्तं भवति–तस्मिन् संख्येयतमे भागे शेषे पुरुषवेदबन्धव्यवच्छेदात् शेषा एकविंशतिप्रकृतीर्बध्नाति, ता अपि तावद्यावत्तस्याः शेषीभूताया अद्धायाः संख्येया भागा गता भवन्ति, एकः शिष्यते । ततः संज्वलनक्रोधस्यापि बन्धव्यवच्छेदात् विंशतिप्रकृतीर्बध्नाति, ता अपि तावद्यावत्तस्याः शेषीभूताया अद्धायाः संख्येया भागा गता भवन्ति, एकोऽवतिष्ठते । ततो मानसंज्वलनस्यापि बन्धव्यवच्छेदादेकोनविंशतिप्रकृतीर्बध्नाति, ता अपि तावद्यावत्तस्याः शेषीभूताया अद्धायाः संख्येया भागा गता भवन्ति, एकोऽवतिष्ठते । ततः संज्वलनमायाया अपि बन्धव्यवच्छेदादष्टादशप्रकृतीर्बध्नाति, ताश्च तावद्यावदनिवृत्तिबादरसंपरायाद्धायाश्चरमसमयः, तस्मिंश्च समये संज्वलनलोभोऽपि बन्धं प्रतीत्य व्यवच्छिद्यते, ततः सूक्ष्मसंपरायः शेषाः सप्तदशप्रकृतीर्बध्नाति, ताश्च तावद्यावत् सूक्ष्मसंपरायाद्धायाश्चरमसमयः । तस्मिंश्च समये ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टययशःकीर्त्युच्चैर्गोत्ररूपाः षोडशप्रकृतयो बन्धमधिकृत्य व्यवच्छिद्यन्ते । ततः 'सायममोहो सजोग

त्ति' अमोहो मोहनीयोदयरहितः सातमेवैकं बध्नाति । स च तावद्यावत् सयोगी सयोग्यवस्थाचरमसमय इत्यर्थः । इदमुक्तं भवति–उपशान्तमोहः क्षीणमोहः सयोगिकेवली च सातमेकं बध्नाति । अयोगिकेवली त्वेकस्यापि बन्धहेतोरभावान्न किमपि बध्नातीति ॥ ६२ ॥

**एसो उ बंधसामित्तओघो गइयाइएसु वि तहेव । ओहाउ साहिज्जा जत्थ जहा पगडिसब्भावो ॥ ६३ ॥**

टीका–योऽयमनन्तरं प्राग् मिथ्यादृष्ट्यादिषु सयोगिकेवलिपर्यन्तेषु बन्धभेद उक्तः, एष बन्धस्वामित्वौघ उच्यते । अस्मादोघात् ओघभणितप्रकारात् गत्यादिष्वपि चतुर्दशसु मार्गणास्थानेषु यत्र मार्गणास्थाने यथा येन प्रकारेण भवप्रत्ययादिना प्रकृतिसद्भावो घटते तत्र तथा साधयेत् कथयेत् । यथैताः प्रकृतयोऽस्मिन्मार्गणास्थाने बन्धं प्रतीत्य घटन्त इति ॥ ६३ ॥

संप्रति किं सर्वा अपि प्रकृतयः सर्वासु गतिषु प्राप्यन्ते किं वा नेति संशये सति तदपनोदार्थमाह—

**तित्थगरदेवनिरयाउगं च तिसु तिसु गईसु बोद्धव्वं । अवसेसा पयडीओ हवंति सव्वासु वि गईसु ॥ ६४ ॥**

टीका–तीर्थंकरनामदेवायुर्नरकायुश्च प्रत्येकं तिसृषु तिसृषु गतिषु बोद्धव्यं । तथाहि–तीर्थंकरनाम नरकदेवमनुष्यगतिरूपासु तिसृषु गतिषु सत्प्राप्यते, न तिर्यग्गतावपि, तीर्थंकरसत्कर्मणस्तिर्यक्षूत्पादाभावात्, तत्र गतस्य च तीर्थंकरनामबन्धासंभवात्, तथाभवस्वाभाव्यात् । तथा तिर्यङ्मनुष्यदेवगतिषु च देवायुः ( न ) नरकगतौ नैरयिकाणां

देवायुर्बन्धाभावात् । तिर्यङ्मनुष्यनरकगतिषु च नरकायु', न देवगतौ, देवाना नरकायुर्बन्धाभावात् । शेषाः प्रकृतय सर्वास्वपि गतिषु सत्तामधिकृत्य प्राप्यन्ते ॥ ६४ ॥

इह गुणस्थानकेषु प्राक् बन्धोदयसत्तासवेध उक्तः, गुणस्थानकानि च प्राय उपशमश्रेणिगतानि क्षपकश्रेणिगतानि च, ततोऽवश्यमिहोपशमश्रेणिक्षपकश्रेणी वक्तव्ये, तत्र प्रथमत उपशमश्रेणिप्रतिपादनार्थमाह—

**पढमकसायचउक्कं दंसणतिग सत्तगा वि उवसंता । अविरतसम्मत्ताउ जाव नियट्टित्ति नायव्वा ॥ ६५ ॥**

टीका–प्रथमकषाया अनन्तानुबन्धिनो दर्शनत्रिक मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वरूपं । एता. सप्तका अपि सप्तापि प्रकृतय उपशान्ता । अविरतसम्यक्त्वात् अविरतसम्यग्दृष्टिगुणस्थानकादारभ्य यावन्निवृत्तिबादरोऽपूर्वकरणगुणस्थानकं तावज्ज्ञातव्या । अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तसयतापूर्वकरणेषु यथायोगमेता' सप्तापि प्रकृतय उपशान्ता लभ्यन्ते । अपूर्वकरणवर्जा शेषा यथायोगमुपशमका' । अपूर्वकरणे त्वेता नियमत उपशान्ता एव प्राप्यन्ते । तत्र प्रथमतोऽनन्तानुबन्धिनामुपशमनाऽभिधीयते–अविरतसम्यग्दृष्टिदेशविरतविरतानामन्यतमोऽन्यतमस्मिन् योगे वर्तमानस्तेज.पद्मशुक्ललेश्यान्यतमलेश्यायुक्त साकारोपयोगोपयुक्तोऽन्त'सागरोपमकोटीकोटीस्थितिसत्कर्मा करणकालात्पूर्वमपि अन्तर्मुहूर्तकाल यावदवदायमानचित्तसंततिरवतिष्ठते । तथावतिष्ठमान परावर्तमाना' प्रकृती शुभा एव बध्नाति, नाशुभा· । अशुभाना च प्रकृतीनामनुभागं चतु'स्थानक सन्तं द्विस्थानक करोति, शुभाना च द्विस्थानक सन्त चतु -स्थानक । स्थितिबन्धेऽपि च पूर्णे सत्यन्यं स्थितिबन्ध पूर्वस्थितिबन्धापेक्षया पल्योपमसख्येयभागहीन करोति । इत्थं

करणकालात् पूर्वं अन्तर्मुहूर्तं कालं यावदवस्थाय ततो यथाक्रमं त्रीणि करणानि प्रत्येकमान्तर्मौहूर्तिकानि करोति। यद्यथा–यथाप्रवृत्तकरणं अपूर्वकरणं अनिवृत्तिकरणं च, चतुर्थी तूपशान्ताद्धा। तत्र यथाप्रवृत्तकरणे प्रविशन् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रविशति, पूर्वोक्तं च शुभप्रकृतिबन्धादिकं तथैव तत्र कुरुते, न च स्थितिघातं रसघातं गुणश्रेणिं गुणसंक्रमं वा करोति, तद्योग्यविशुध्ध्यभावात्। प्रतिसमयं च नानाजीवापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणानि अध्यवसायस्थानानि भवन्ति, षट्स्थानपतितानि च। अन्यच्च प्रथमसमयापेक्षया द्वितीयसमयेऽध्यवसायस्थानानि विशेषाधिकानि, ततोऽपि तृतीयसमये विशेषाधिकानि, एवं तावद्वाच्यं यावद्यथाप्रवृत्तिकरणचरमसमयः। अत एवैतानि स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति। स्थापना चेयं। तत्र प्रथमसमये जघन्या विशोधिः सर्वस्तोका, ततो द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा, एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणाद्धायाः संख्येयो भागो गतो भवति। ततः प्रथमसमये उत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि यतो जघन्यस्थानान्निवृत्तस्तस्योपरितनी जघन्या विशोधिरनन्तगुणा, ततोऽपि द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा, तत उपरि जघन्या विशोधिरनन्तगुणा, एवमुपर्यधश्चैकैकं विशोधिस्थानं अनन्तगुणतया तावन्नेयं यावद्यथाप्रवृत्तकरणस्य चरमसमये जघन्यं विशोधिस्थानं, तत उत्कृष्टानि यानि विशोधिस्थानानि अनुक्तानि तिष्ठन्ति, तानि निरन्तरमनन्तगुणया वृध्ध्या तावन्नेतव्यानि यावच्चरमसमये उत्कृष्टं विशोधिस्थानं। तदेवमुक्तं यथाप्रवृत्तकरणं। संप्रत्यपूर्वकरणमुच्यते–तत्रापूर्वकरणे प्रतिसमयमसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति। प्रतिसमयं च षट्स्थान-

पतितानि । तत्र प्रथमसमये जघन्या विशोधि सर्वस्तोका, सा च यथाप्रवृत्तकरणचरमसमयोत्कृष्टविशोधिस्थानादनन्तगुणा, तत प्रथमसमय एवोत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततोऽपि तस्मिन्नेव द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा, ततोऽपि तस्मिन्नेव तृतीये समये उत्कृष्टा विशोधिरनन्तगुणा, एव प्रतिसमय तावद्वक्तव्यं यावच्चरमसमये उत्कृष्टा विशोधि । स्थापना चेय । अस्मिंश्चापूर्वकरणे प्रथमसमये एव स्थितिघातो रसघातो गुणश्रेणिर्गुणसक्रमोऽन्यश्च स्थितिबन्ध इति पञ्च पदार्था युगपत्प्रवर्तन्ते । तत्र स्थितिघातो नाम स्थितिसत्कर्मणोऽग्रिमभागादुत्कर्षत प्रभूतसागरोपमशतप्रमाणं जघन्यत. पल्योपमसख्येयभागमात्रं स्थितिखडमुत्किरति खण्डयतीत्यर्थः । उत्कीर्य च या स्थितीरधो न खण्डयिष्यति, तत्र तद्दलिक प्रक्षिपति, अन्तर्मुहूर्तेन च कालेन तत् स्थितिखण्डमुत्कीर्यते । तत. पुनरप्यधस्तात्पल्योपमसख्येयभागमात्रं स्थितिखडमन्तर्मुहूर्तेन कालेनोत्किरति, पूर्वोक्तप्रकारेणैव च निक्षिपति । एवमपूर्वकरणाद्धाया प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामन्ति । तथा च सति अपूर्वकरणस्य प्रथमसमये यत् स्थितिकर्मासीत्तस्यैव चरमसमये सख्येयगुणहीन जात । रसघातो नाम अशुभप्रकृतीना यदनुभागसत्कर्म तस्यानन्ततमं भाग मुक्त्वा शेषाननुभागानन्तर्मुहूर्तेन कालेनाशेषानपि विनाशयति, तत पुनरपि तस्य प्राग्मुक्तस्यानन्ततमभागस्यानन्ततम भाग मुक्त्वा शेषाननुभागानन्तर्मुहूर्तेन कालेन विनाशयति, तत पुनरपि तस्य प्राग्मुक्तस्यानन्ततम भाग मुक्त्वा शेषाननुभागानन्तर्मुहूर्तेन कालेन विनाशयति । एवमनेकान्यनुभागखण्डसहस्राण्येकस्मिन् स्थितिखण्डे व्यतिक्रामन्ति । तेषा च स्थितिखण्डाना सहस्रैरपूर्वकरण परिसमाप्यते ।

गुणश्रेणिर्नाम अन्तर्मुहूर्तप्रमाणानां स्थितीनामुपरि याः स्थितयो वर्तन्ते तन्मध्याद्दलिकं गृहीत्वा उदयावलिकाया उपरितनीषु स्थितिषु प्रतिसमयमसंख्येयगुणतया निक्षिपति। तद्यथा—प्रथमसमये स्तोकं द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीये समयेऽसंख्येयगुणं, एवं तावज्ज्ञेयं यावदन्तर्मुहूर्तचरमसमयः, तच्चान्तर्मुहूर्तमपूर्वकरणानिवृत्तिकरणकालाभ्यां मनागतिरिक्तं वेदितव्यं। एष प्रथमसमयगृहीतदलिकस्य निक्षेपविधिः। एवं द्वितीयादिसमयगृहीतानामपि दलिकानां निक्षेपो वक्तव्यः। अन्यच्च—गुणश्रेणिरचनाय प्रथमसमये यद्दलिकं गृह्यते तत् स्तोकं, ततोऽपि द्वितीयसमयेऽसंख्येयप्रमाणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं। एवं तावज्ज्ञेयं यावत् गुणश्रेणिकरणचरमसमयः। अपूर्वकरणसमयेषु अनिवृत्तिकरणसमयेषु चानुभवतः क्रमशः क्षीयमाणेषु गुणश्रेणिदलिकनिक्षेपः शेषे शेषे भवति, उपरि च न वर्धते। गुणसंक्रमो नाम अपूर्वकरणस्य प्रथमसमयेऽनन्तानुबन्ध्यादीनामशुभप्रकृतीनां दलिकं यत् परप्रकृतिषु संक्रमयति तत् स्तोकं, ततो द्वितीयसमये परप्रकृतिषु संक्रम्यमाणमसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं वक्तव्यं। अन्यः स्थितिबन्धो नाम अपूर्वकरणस्य प्रथमसमयेऽन्य एवापूर्वः स्तोकः स्थितिबन्ध आरभ्यते। स्थितिबन्धस्थितिघातौ च युगपदारभ्येते युगपदेव च निष्ठां यातः। एवमेते पञ्च पदार्था अपूर्वकरणे प्रवर्तन्ते। अनिवृत्तिकरणं नाम यत्र प्रविष्टानां सर्वेषामपि तुल्यकालानामेकमेवाध्यवसायस्थानं। तथाहि—अनिवृत्तिकरणस्य प्रथमसमये ये वर्तन्ते ये च वृत्ता ये च वर्तिष्यन्ते, तेषां सर्वेषामप्येकरूपमेवाध्यवसायस्थानं। द्वितीयसमयेऽपि च ये वर्तन्ते ये च वृत्ता ये च वर्तिष्यन्ते, तेषामपि सर्वेषामेकरूपमध्यवसायस्थानं। नवरं प्रथमसमयभाविविशोधिस्थानापेक्षयाऽनन्तगुणं, एवं तावद्वक्तव्यं यावदनिवृत्तिकरणचरमसमयः।

अत एवास्मिन् करणे प्रविष्टानां तुल्यकालानामसुमतां संबन्धिनामध्यवसायस्थानानां परस्परं निवृत्तिर्व्यावृत्तिर्न विद्यते इत्यनिवृत्तिकरणमिति नाम । अस्मिंश्चानिवृत्तिकरणे यावन्तः समयास्तावन्त्यध्यवसायस्थानानि पूर्वस्मात् पूर्वस्मादनन्तगुणवृद्धानि । तानि च मुक्तावलीसंस्थानेन स्थापयितव्यानि । अत्रापि च प्रथमसमयादेवारभ्य पूर्वोक्ताः पञ्च पदार्था युगपत्प्रवर्तन्ते । अनिवृत्तिकरणाद्धायाश्च संख्येयतमेषु भागेषु गतेषु सत्सु एकस्मिन् भागेऽवतिष्ठमानेऽनन्तानुबन्धिनामधस्तादावलिकामात्रं मुक्त्वाऽन्तर्मुहूर्तप्रमाणमन्तरकरणमभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्तप्रमाणेन कालेन करोति, अन्तरकरणसत्कं च दलिकमुत्कीर्यमाणं परप्रकृतिषु बध्यमानासु प्रक्षिपति, प्रथमस्थितिगतं च दलिकमावलिकामात्रं वेद्यमानासु परप्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति । अन्तरकरणे कृते सति द्वितीये समयेऽनन्तानुबन्धिनामुपरितनस्थितिगतं दलिकमुपशमयितुमारभते । तद्यथा-प्रथमसमये स्तोकमुपशमयति, द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं यावदन्तर्मुहूर्तं कालं । एतावता च कालेन साकल्यतोऽनन्तानुबन्धिन उपशमिता भवन्ति । उपशमिता नाम यथा रेणुनिकरः सलिलबिन्दुनिवहैरभिषिच्याभिषिच्य द्रुघणादिभिर्निकुट्टितो निःस्पन्दो भवति, तथा कर्मरेणुनिकरोऽपि विशोधिसलिलप्रवाहेण परिषिच्य परिषिच्यानिवृत्तिकरणरूपद्रुघणनिकुट्टितः संक्रमणोदयोदीरणानिधत्तनिकाचनाकरणानामयोग्यो भवति । तदेवमेकेषामाचार्याणां मतेनानन्तानुबन्धिनामुपशमनाऽभिहिता । अन्ये त्वाचक्षते-अनन्तानुबन्धिनामुपशमना न भवति, किं तु विसंयोजनैव । विसंयोजना क्षपणा, सा चैव-इह श्रेणिमप्रतिपद्यमाना अपि अविरताश्चतुर्गतिका अपि वेदकसम्यग्दृष्टयो देशविरतास्तिर्यञ्चो मनुष्या वा सर्वविरता मनुष्या एव सर्वाभिः पर्याप्तिभि

ततो देशविरतप्रमत्ताप्रमत्तसंयतेष्वपि मिथ्यात्वमुपशान्तं लभ्यते । संप्रति वेदकसम्यग्दृष्टेस्त्रयाणामपि दर्शनमोहनीयानामुपशमनाविधिरुच्यते—इह वेदकसम्यग्दृष्टिः संयमे वर्तमानः सन् अन्तर्मुहूर्तमात्रेण कालेन दर्शनत्रितयमुपशमयति, उपशमयतश्च करणत्रिकविधिः पूर्ववत् तावद्वक्तव्यो यावदनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु अन्तरकरणं करोति, अन्तरकरणं कुर्वन् सम्यक्त्वस्य प्रथमस्थितिमन्तर्मुहूर्तप्रमाणां स्थापयति, मिथ्यात्वमिश्रयोश्चावलिकामात्रां, उत्कीर्यमाणं च दलिकं त्रयाणामपि सम्यक्त्वस्य प्रथमस्थितौ प्रक्षिपति, मिथ्यात्वमिश्रयोः प्रथमस्थितिदलिकं सम्यक्त्वस्य प्रथमस्थितिदलिकमध्ये स्तिबुकसंक्रमेण संक्रमयति । सम्यक्त्वस्य पुनः प्रथमस्थितौ विपाकानुभवतः क्रमेण क्षीणायां सत्यामौपशमिकसम्यग्दृष्टिर्भवति । उपरितनदलिकस्य चोपशमना त्रयाणामपि मिथ्यात्वादीनामनन्तानुबन्धिनामुपरितनदलिकस्यैवावसेया । एवमुपशान्तदर्शनमोहनीयत्रिकश्चारित्रमोहनीयमुपशमयितुकामः पुनरपि यथाप्रवृत्तादीनि त्रीणि करणानि करोति । करणानां च स्वरूपं प्राग्वदवगन्तव्यं । केवलमिह यथाप्रवृत्तकरणमप्रमत्तगुणस्थानके द्रष्टव्यं । अपूर्वकरणमपूर्वकरणगुणस्थानके । अनिवृत्तिकरणमनिवृत्तिबादरसंपरायगुणस्थानके । तत्र चापूर्वकरणे स्थितिघातादयः पूर्ववदेव प्रवर्तन्ते । नवरमिह सर्वासामशुभप्रकृतीनामबध्यमानानां गुणसंक्रमः प्रवर्तते इति वक्तव्यं । अपूर्वकरणाद्धायाश्च संख्येयतमे भागे गते सति निद्राप्रचलयोर्बन्धव्यवच्छेदः । ततः प्रभूतेषु स्थितिखंडसहस्रेषु गतेषु सत्सु अपूर्वकरणाद्धायाः संख्येया भागा गता भवन्ति, एकोऽवशिष्यते । अस्मिंश्चान्तरे देवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियाहारकतैजसकार्मणसमचतुरस्रवैक्रियांगोपांगाहारकांगोपांगवर्णादिचतुष्टयागुरुलघूपघातपराघातोच्छ्वासत्रसबादरपर्याप्तप्र-

त्येकप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेयनिर्माणतीर्थंकरसंज्ञिताना त्रिंशत प्रकृतीना बन्धव्यवच्छेद'। तत स्थिति-खण्डपृथक्त्वे गते सति अपूर्वकरणाद्धायाश्चरमसमये हास्यरतिभयजुगुप्साना बन्धव्यवच्छेद हास्यरत्यरतिशोकभयजुगु-प्सानामुदय' सर्वकर्मणा च देशोपशमनानिधत्तिनिकाचनाकरणानि व्यवच्छिद्यन्ते । ततोऽनन्तरसमयेऽनिवृत्तिकरणे प्रवि-शति । अत्रापि स्थितिघातादीनि पूर्ववत् करोति । ततोऽनिवृत्तिकरणाद्धाया' सख्येयेषु भागेषु गतेषु सत्सु दर्शनसप्त-कशेषाणामेकविंशतिमोहनीयप्रकृतीनामन्तरकरण करोति । तत्र चतुर्णा सज्वलनानामन्यतमस्य वेद्यमानस्य सज्वलनस्य त्रयाणा च वेदानामन्यतमस्य वेद्यमानस्य वेदस्य प्रथमा स्थिति स्वोदयकालप्रमाणा । अन्येषा चैकादशकषायाणाम-ष्टाना च नोकषायाणा प्रथमा स्थितिरावलिकामात्रा । स्वोदयकालप्रमाण च चतुर्णा संज्वलनाना त्रयाणा च वेदाना मिद । स्त्रीवेदनपुसकवेदयोरुदयकाल सर्वस्तोक, स्वस्थानेषु परस्पर तुल्य. । तत पुरुषवेदस्य सख्येयगुण । ततोऽपि सज्वलनक्रोधस्य विशेषाधिक । ततोऽपि सज्वलनमानस्य विशेषाधिकः । ततोऽपि सज्वलनमायाया विशेषाधिक । ततोऽपि सज्वलनलोभस्य विशेषाधिक । उक्त च–"थीअपुमोदयकालो, सखेज्जगुणो उ पुरिसवेयस्स । तस्स वि विसे-सअहिओ, कोहे तत्तो वि जहकमसो ॥ १ ॥ " तत्र सज्वलनक्रोधेनोपशमश्रेणि प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्या नावरणक्रोधोपशमो न भवति तावत्सज्वलनक्रोधस्योदय । सज्वलनमानेनोपशमश्रेणि प्रतिपन्नस्य यावदप्रत्याख्यानप्र-त्याख्यानावरणमानोपशमो न भवति तावत्संज्वलनमानस्योदय । मायया चोपशमश्रेणि प्रतिपन्नस्य यावदप्रत्याख्यान प्रत्याख्यानावरणमायोपशमो न भवति तावत्संज्वलनमायाया उदय' । सज्वलनलोभेनोपशमश्रेणि प्रतिपन्नस्य यावद-

प्रत्याख्यानप्रत्याख्यानावरणलोभोपशमो न भवति तावत्संज्वलनलोभस्योदयः । तदेवमन्तरकरणमुपरितनभागापेक्षया सममधोभागापेक्षया चोक्तनीत्या विषममिति यावता कालेन स्थितिखण्डं घातयति, यद्वाऽन्यं स्थितिबन्धं करोति तावता कालेन अन्तरकरणमपि करोति। त्रीण्यपि युगपदारभते युगपदेव च निष्ठां नयति । अन्तरकरणसत्कदलिकप्रक्षेपविधिश्चायं–येषां कर्मणां तदानीं बन्ध उदयश्च विद्यते तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति यथा पुरुषवेदोदयारूढः पुरुषवेदस्य । येषां तु कर्मणामुदय एव केवलो न बन्धस्तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितावेव प्रक्षिपति न द्वितीयस्थितौ यथा स्त्रीवेदोदयारूढः स्त्रीवेदः (स्य) । येषां पुनरुदयो न विद्यते किं तु केवलो बन्धस्तेषामन्तरकरणसत्कं दलिकं द्वितीयस्थितावेव क्षिपति न प्रथमस्थितौ यथा संज्वलनक्रोधोदयारूढः शेषसंज्वलनानां । येषां पुनर्न बन्धो नाप्युदयस्तेषामन्तरकरणसत्कं दलिकं परप्रकृतिषु प्रक्षिपति यथा द्वितीयतृतीयकषायाणां । इहानिवृत्तिकरणे च बहु वक्तव्यं तत्तु ग्रन्थगौरवभयान्नोच्यते, केवलं विशेषार्थिना कर्मप्रकृतिसंग्रहणिटीका निरीक्षितव्या । अन्तरकरणं च कृत्वा ततो नपुंसकवेदमुपशमयति । तं चैवं–प्रथमसमये स्तोकं, द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं प्रतिसमयमसंख्येयगुणं तावदुपशमयति यावच्चरमसमयः । परप्रकृतिषु च प्रतिसमयमुपशमितदलिकापेक्षयाऽसंख्येयगुणं तावत्प्रक्षिपति यावद्द्विचरमसमयः । चरमसमये पुनरुपशम्यमानं दलिकं परप्रकृतिषु संक्रम्यमाणदलिकापेक्षयाऽसंख्येयगुणं द्रष्टव्यं । तदेवं नपुंसकवेद उपशमितः । तस्मिंश्चोपशान्तेऽष्टौ कर्माण्युपशान्तानि जातानि । तत उक्तप्रकारेणान्तर्मुहूर्तेन कालेन स्त्रीवेदमुपशमयति । तस्मिंश्चोपशान्ते नव । ततोऽन्तर्मुहूर्तेन कालेन हास्यादिषट्कमुपशमयति ।

लिकाद्विकबद्धं चोपरितनस्थितिगतं दलिकं मुक्त्वा शेषमन्यत्सर्वमुपशान्तं। ततस्तां प्रथमस्थितिगतामेकावलिकां संज्वलन-
माने स्तिबुकसंक्रमेण प्रक्षिपति समयोनावलिकाद्विकबद्धं च दलिकं पुरुषवेदोक्तप्रकारेणोपशमयति संक्रमयति च । ततः
समयोनावलिकाद्विकेन कालेन संज्वलनक्रोध उपशमितः, तस्मिंश्चोपशान्ते एकोनविंशतिकर्माण्युपशान्तानि भवन्ति ।
यदा च संज्वलनक्रोधस्य बन्धोदयोदीरणाव्यवच्छेदस्ततोऽनन्तरसमयादारभ्य संज्वलनमानस्य द्वितीयस्थितेः सकाशाद्दलि-
कमाकृष्य प्रथमस्थितिं करोति वेदयति च । तत्रोदयसमये स्तोकं प्रक्षिपति, द्वितीयस्थितौ असंख्येयगुणं, ततोऽपि तृती-
यस्थितावसंख्येयगुणं, एवं तावद्वाच्यं यावत्प्रथमस्थितेश्चरमसमयः । प्रथमस्थितिकरणप्रथमसमयादेव चारभ्य त्रीनप्य-
प्रत्याख्यानप्रत्याख्यानावरणसंज्वलनरूपान् मानान् युगपदुपशमयितुमारभते संज्वलनमानस्य प्रथमस्थितौ समयोनाव-
लिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणमानदलिकं न संज्वलनमाने प्रक्षिपति, किं तु संज्वलनमायादौ । आव-
लिकाद्विकशेषायां त्वागालो व्यवच्छिद्यते । तत उदीरणैव केवला प्रवर्तते । सापि तावद्यावदावलिका शेषा भवति ।
आवलिकायां च शेषीभूतायां संज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदः । अप्रत्याख्यानप्रत्याख्यानावरणौ च मानावु-
पशान्तौ । तयोश्चोपशान्तयोरेकविंशतिकर्माण्युपशान्तानि भवन्ति । तस्मिंश्च समये संज्वलनमानस्य प्रथमस्थितिगतामेका-
मावलिकां समयोनावलिकाद्विकबद्धं चोपरितनस्थितिगतं दलिकं मुक्त्वा शेषमन्यत्सर्वमुपशान्तं । ततस्तां प्रथमस्थितिग-
तामेकामावलिकां स्तिबुकसंक्रमेण संज्वलनमायायां प्रक्षिपति । समयोनावलिकाद्विकबद्धं च दलिकं पुरुषवेदोक्तप्रकारे-
णोपशमयति संक्रमयति च । ततः समयोनावलिकाद्विकेन कालेन संज्वलनमान उपशमितः । तस्मिंश्चोपशान्ते द्वाविंशतिक-

र्माण्युपशान्तानि भवन्ति । यदा सञ्ज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदस्ततोऽनन्तरसमयादारभ्य संज्वलनमायाया द्वितीयस्थिते सकाशाद्दलिकमाकृष्य पूर्वोक्तप्रकारेण प्रथमा स्थितिं करोति वेदयते च । तत्समयादेव चारभ्य तिस्रोऽपि माया युगपदुपशमयितुमारभते । संज्वलनमायायाश्च प्रथमस्थितौ समयोनावलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्याना-वरणमायाद्दलिकं न सञ्ज्वलनमायायां प्रक्षिपति, किं तु संज्वलनलोभे । आवलिकाद्विकशेषाया त्वागालो न भवति, किं तूदीरणैव केवला । सापि तावत्प्रवर्तते यावदावलिकाशेषो न भवति । आवलिकायां च शेषीभूताया सञ्ज्वलनमा-याया बन्धोदयोदीरणाव्यवच्छेदः । अप्रत्याख्यानप्रत्याख्यानावरणे च माये उपशान्ते । तयोश्चोपशान्तयोश्चतुर्विंशति-कर्माण्युपशान्तानि भवन्ति । तस्मिंश्च समये सञ्ज्वलनमायाया प्रथमस्थितिगतामेकामावलिका समयोनावलिकाद्विक-बद्धं चोपरितनस्थितिगत दलिकं मुक्त्वा शेषमन्यत्सर्वमुपशान्त । ततस्ता प्रथमस्थितिगतामेकामावलिका स्तिबुकसंक्रमेण सञ्ज्वलनलोभे संक्रमयति । समयोनावलिकाद्विकबद्धं च दलिकं पुरुषवेदोक्तप्रकारेणोपशमयति संक्रमयति च । ततः समयोनावलिकाद्विकेन कालेन सञ्ज्वलनमाया उपशान्ता । तस्यां चोपशान्तायां पञ्चविंशतिकर्माण्युपशान्तानि भवन्ति । यदा च सञ्ज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेदस्ततोऽनन्तरसमयादारभ्य सञ्ज्वलनलोभस्य द्वितीयस्थिते सकाशा-द्दलिकमाकृष्य लोभवेदकाद्धात्रिभागद्वयप्रमाणा प्रथमस्थितिं पूर्वोक्तप्रकारेण करोति, वेदयति च । प्रथमश्च त्रिभागोऽ-श्वकर्णकरणाद्धासंज्ञो द्वितीय किट्टीकरणाद्धासंज्ञ । प्रथमे चाश्वकर्णकरणाद्धासंज्ञे त्रिभागे वर्तमान पूर्वस्पर्धकेभ्यो दलिकमादायापूर्वस्पर्धकानि करोति । अथ किमिद स्पर्धकमित्युच्यते–इह तावदनन्तानन्तैः परमाणुभिर्निष्पन्नान् स्कन्धान्

जीवः कर्मतया गृह्णाति। तत्र चैकैकस्मिन् स्कन्धे यः सर्वजघन्यरसः परमाणुस्तस्यापि रसः केवलिप्रज्ञयाच्छिद्यमानः सर्वजीवेभ्योऽनन्तगुणान् रसाविभागान् प्रयच्छति। अपरस्तु तानप्येकभागाधिकान्। अन्यस्तु द्व्यधिकान्। एवमेकोत्तरया वृद्ध्या तावन्नेयं यावदन्यः (न्त्यः) परमाणुः सिद्धानन्तभागाधिकान् रसाविभागान् प्रयच्छति। तत्र जघन्यरसा ये केचन परमाणवस्तेषां समुदायः समानजातीयत्वादेका वर्गणेत्युच्यते। अन्येषां त्वेकाधिकरसाविभागयुक्तानां समुदायो द्वितीया वर्गणा। अपरेषां तु द्व्यधिकरसाविभागयुक्तानां समुदायस्तृतीया वर्गणा। एवमनया दिशा एकैकरसाविभागवृद्धानामणूनां समुदायरूपा वर्गणाः सिद्धानामनन्तभागकल्पाः अभव्येभ्योऽनन्तगुणा वाच्याः। एतासां च समुदायः स्पर्धकमित्युच्यते। स्पर्धन्त इवोत्तरोत्तरवृद्ध्या परमाणुवर्गणा अत्रेति कृत्वा। इत ऊर्ध्वमेकोत्तरया निरन्तरवृद्ध्या प्रवर्द्धमानो रसो न लभ्यते, किं तु सर्वजीवानन्तगुणैरेव रसाविभागैः। ततस्तेनैव क्रमेण ततः प्रभृति द्वितीयं स्पर्धकमभिधानीयं, एवमेव च तृतीयं, एवं तावद्वाच्यं यावदनन्तानि स्पर्धकानि भवन्ति। एतानि च पूर्वं कृतत्वात् पूर्वस्पर्धकान्यभिधीयन्ते तत एतेभ्य एव चेदानीं प्रतिसमयं दलिकं गृहीत्वा तस्य चात्यन्तहीनरसतामापाद्यापूर्वाणि स्पर्धकानि करोति। आसंसारं हि परिभ्रमता न कदाचनापि बन्धमाश्रित्येदृशानि स्पर्धकानि कृतानि, किं तु संप्रत्येव विशुद्धिप्रकर्षवशात् करोति, ततोऽपूर्वाणीत्युच्यन्ते। अश्वकर्णकरणाद्धायां च गतायां किट्टीकरणाद्धायां प्रविशति। तत्र च पूर्वस्पर्धकेभ्योऽपूर्वस्पर्धकेभ्यश्च दलिकं गृहीत्वा प्रतिसमयमनन्ताः किट्टीः करोति। किट्टयो नाम पूर्वस्पर्धकापूर्वस्पर्धकेभ्यो वर्गणा गृहीत्वा तासामनन्तगुणहीनरसतामापाद्य बृहदन्तरालतया यद्व्यवस्थापनं, यथा यासामनन्तानन्तानामप्यसत्कल्पनयाऽनुभाग-

ज्ञागाना शतमेकोत्तर द्व्युत्तर वासीत् । तासामेवानुज्ञागज्ञागाना पञ्चकं पञ्चदशकं पञ्चविंशतिरिति । किट्टीकरणाद्धा-
याश्च चरमसमये युगपदप्रत्याख्यानप्रत्याख्यानावरणलोज्ञावुपशान्तौ । तत्समयमेव च संज्वलनलोज्ञवन्धव्यवच्छेदो वाद-
रसंज्वलनलोज्ञोदयोदीरणाव्यवच्छेदो निवृत्तिवादरसपरायगुणस्थानव्यवच्छेदश्च । तदेवमनिवृत्तिवादरे सप्तन्य आरज्य
पञ्चविंशति यावदुपशान्तानि कर्माणि लज्यन्ते । तथा चाह–"सत्त ठ नव य पनरस सोलस अठारसेव इगवीसा ।
एगाहि दुग चउवीस पणवीसा वायरे जाए ॥ १ ॥ " सुगमा । अप्रत्याख्यानप्रत्याख्यानावरणलोज्ञोपशान्तौ च सप्त-
विंशतिकर्माण्युपशान्तानि ज्ञवन्ति । तानि च सूक्ष्मसपराये प्राप्यन्ते । आह च–"सत्तावीस सुहुमे अठावीसं पि मोहपयडीउ ।
उवसतवीयरागे उवसता होंति नायधा ॥ १ ॥" सूक्ष्मे सूक्ष्मसंपराये सप्तविंशतिकर्माण्युपशान्तानि लज्यन्ते । सूक्ष्मसंपरा-
याद्धा चान्तर्मुहूर्तप्रमाणा । सूक्ष्मसपरायाद्धाया च प्रविष्टः सन् उपरितनस्थितेः सकाशात् कतिपया किट्टीः समाकृष्य
प्रथमस्थितिं सूक्ष्मसपरायाद्धातुल्या करोति वेदयति च । शेप च सूक्ष्मकिट्टीकृत दलिक समयोनावलिकाद्विकबद्ध चोप-
शमयति । सूक्ष्मसपरायाद्धायाश्चरमसमये संज्वलनलोज्ञ उपशान्तो ज्ञवति । तत्समयमेव च ज्ञानावरणपञ्चकदर्शनावरण-
चतुष्कान्तरायपञ्चकयशःकीर्त्युच्चैर्गोत्राणा वन्धव्यवच्छेद । ततोऽनन्तरसमये उपशान्तकपायो ज्ञवति । तस्मिश्चोपशान्त-
कपाये वीतरागेऽष्टाविंशतिरपि मोहनीयप्रकृतय उपशान्ता ज्ञातव्याः । उपशान्तकपायश्च जघन्येनैक समय ज्ञवति,
उत्कर्पेण त्वन्तर्मुहूर्तकालं यावत् । तत ऊर्ध्व नियमादसौ प्रतिपतति । प्रतिपातश्च द्विधा–ज्ञवक्षयेण अद्धाक्षयेण च ।
तत्र ज्ञवक्षयो म्रियमाणस्य, अद्धाक्षय उपशान्ताद्धाया समाप्तायां । अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिप-

तति । यत्र यत्र बन्धोदयो व्यवच्छिन्नस्तत्र तत्र प्रतिपतता सता ते आरभ्यन्त इति यावत् । प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकं । कश्चित्पुनस्ततोऽप्यधस्तनं गुणस्थानद्विकं याति, कोऽपि सासादनभावमपि । यः पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धनादीनि करणानि प्रवर्तयतीत्येष विशेषः । उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते । यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभावः । यः पुनरेकं वारं प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपि । उक्तं च चूर्णौ–"जो दुवे वारे उवसमसेढिं पडिवज्जइ, तस्स नियमा तम्मि भवे खवगसेढी नत्थि, जो एक्कसिं उवसमसेढीं पडिवज्जइ, तस्स खवगसेढी होज्ज वि त्ति" । आगमाभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते । तदुक्तं–"मोहोपशम एकस्मिन् भवे द्विः स्यादसन्ततः । यस्मिन् भवे तूपशमः क्षयो मोहस्य तत्र न ॥ १ ॥ " इति ॥ ६५ ॥

तदेवमुक्ता सप्रपञ्चमुपशमश्रेणिः, संप्रति श्रेणिप्रस्तावात् क्षपकश्रेणिमभिधातुकाम आह–

**पढमकसायचउक्कं एत्तो मिच्छत्तमीससम्मत्तं । अविरयदेसे विरए पमत्ति अपमत्ति खीयंति ॥ ६६ ॥**

टीका–इह यः क्षपकश्रेणिमारभते सोऽवश्यं मनुष्यो वर्षाष्टकाच्चोपरि वर्तमानः, स च प्रथमतः प्रथमकषायचतुष्कमनन्तानुबन्धिसंज्ञं विसंयोजयति । तद्विसंयोजना च प्रागेवोक्ता । तत इतः प्रथमकषायचतुष्कक्षयादनन्तरं मिथ्यात्वमिश्रसम्यक्त्वानि क्षपयति । सूत्रे चैकवचनं समाहारविवक्षणात् । समाहारविवक्षा चामीषां त्रयाणामपि युगपत्क्षपणाय यतते इति ज्ञापनार्था । मिथ्यात्वादीनि च क्षपयन् यथाप्रवृत्तादीनि त्रीणि करणान्यारभते । करणानि च प्रागिव वक्तव्यानि ।

नन्तरमपूर्वकरणस्य प्रथमसमयेऽनुदितयोर्मिथ्यात्वसम्यग्मिथ्यात्वयोर्दलिक गुणसंक्रमेण सम्यक्त्वे प्रक्षिपति । उद्वलनासं-
क्रममपि तयोरेवमारभते, तद्यथा–प्रथमस्थितिखड बृहत्तरमुद्वलयति, ततो द्वितीय विशेषहीन, ततोऽपि तृतीय विशे-
षहीन, एव तावद्वक्तव्य यावदपूर्वकरणचरमसमय । अपूर्वकरणप्रथमसमये च यत् स्थितिसत्कर्मासीत्तत्तस्यैव चरमस-
मये सख्येयगुणहीन जातं । ततोऽनिवृत्तिकरणे प्रविशति । तत्रापि स्थितिघातादीन् सर्वानपि तथैव करोति । अनिवृ-
त्तिकरणप्रथमसमये च दर्शनत्रिकस्यापि देशोपशमनानिधत्तिनिकाचना व्यवच्छिद्यन्ते । दर्शनमोहनीयत्रिकस्य च स्थिति-
सत्कर्मानिवृत्तिकरणप्रथमसमयादारभ्य स्थितिघातादिभिर्घात्यमान घात्यमान स्थितिखडसहस्रेषु गतेष्वसंज्ञिपञ्चेन्द्रिय-
स्थितिसत्कर्मसमान भवति । तत स्थितिखडसहस्रपृथक्त्वे गते सति चतुरिन्द्रियस्थितिसत्कर्मसमान भवति । ततोऽपि
तावन्मात्रेषु खंडेषु गतेषु त्रीन्द्रियस्थितिसत्कर्मसमानं । ततोऽपि तावन्मात्रेषु गतेषु द्वीन्द्रियस्थितिसत्कर्मसमान । ततो-
ऽपि तावन्मात्रेषु खडेषु गतेष्वेकेन्द्रियस्थितिसत्कर्मसमान । ततोऽपि तावन्मात्रेषु खडेषु गतेषु पल्योपमासख्येयभागप्र-
माण भवति । ततस्त्रयाणामपि प्रत्येकमेकैक सख्येयभाग मुक्त्वा शेष सर्वमपि घातयति । ततस्तस्यापि प्रागुक्तस्य
सख्येयभागस्यैक सख्येयतम भाग मुक्त्वा शेष सर्व विनाशयति । एव स्थितिघाता सहस्रशो व्रजन्ति । तदनन्तर च
मिथ्यात्वस्यासख्येयान् भागान् खंडयति । सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु सख्येयान् । तत एव स्थितिखडेषु प्रभूतेषु
गतेषु सत्सु मिथ्यात्वस्य दलिक आवलिकामात्र जात । सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु पल्योपमासंख्येयभागमात्र ।
अमूनि च स्थितिखडानि खड्यमानानि मिथ्यात्वसत्कानि सम्यक्त्वसम्यग्मिथ्यात्वयो प्रक्षिपति । सम्यग्मिथ्यात्वस-

त्कानि सम्यक्त्वे। सम्यक्त्वसत्कानि त्वधस्तात् स्वस्थाने इति। तदपि च मिथ्यात्वदलिकमावलिकामात्रं, स्तिबुकसंक्रमेण सम्यक्त्वे प्रक्षिपति। तदनन्तरं सम्यक्त्वसम्यग्मिथ्यात्वयोरसंख्येयान् भागान् खंडयति, एकोऽवशिष्यते। ततस्तस्याप्यसंख्येयान् भागान् खंडयति, एकं मुञ्चति। एवं कतिपयेषु स्थितिखंडेषु गतेषु सम्यग्मिथ्यात्वमावलिकामात्रं जातं। तदानीं च सम्यक्त्वस्य स्थितिसत्कर्म वर्षाष्टकप्रमाणं भवति। तस्मिन्नेव च काले सकलप्रत्यूहापगमतो निश्चयमतेन दर्शनमोहनीयक्षपक उच्यते। तत ऊर्ध्वं सम्यक्त्वस्य स्थितिखंडं अन्तर्मुहूर्तप्रमाणमुत्किरति। तद्दलिकं तूदयसमयादारभ्य प्रक्षिपति। केवलमुदयसमये सर्वस्तोकं। ततो द्वितीयसमयेऽसंख्येयगुणं। ततोऽपि तृतीयसमयेऽसंख्येयगुणं। एवं तावद्वक्तव्यं यावत् गुणश्रेणीशिरः। तत ऊर्ध्वं तु विशेषहीनं यावच्चरमा स्थितिः। एवमान्तर्मुहूर्तिकान्यनेकानि खंडान्युत्किरति निक्षिपति च। तानि च तावद्यावत् द्विचरमं स्थितिखंडं। द्विचरमात्तु स्थितिखंडाच्चरमखंडमसंख्येयगुणं। चरमे च स्थितिखंडे उत्कीर्णे सति असौ क्षपकः कृतकरण इत्युच्यते। अस्यां च कृतकरणाद्धायां वर्तमानः कश्चित्कालमपि कृत्वा चतसृणां गतीनामन्यतमस्यां गतावुत्पद्यते। लेश्यायामपि च पूर्वं शुक्ललेश्यायामासीत्, संप्रति त्वन्यतमस्यां गच्छति। तदेवं प्रस्थापको मनुष्यो निष्ठापकश्चतसृष्वपि गतिषु प्राप्यते। उक्तं च—"पट्ठवगो अ मणूसो निट्ठवगो चउसु वि गईसु।" इह यदि बद्धायुः क्षपकश्रेणिमारभते, अनन्तानुबन्धिनां च क्षयादनन्तरं मरणसंभवतो व्युपरमते। ततः कदाचिन्मिथ्यात्वोदयाद्भूयोऽप्यनन्तानुबन्धिन उपचिनोति, तद्बीजस्य मिथ्यात्वस्याविनाशात्। क्षीणमिथ्यात्वदर्शनस्तु नोपचिनोति, बीजाभावात्। क्षीणसप्तकस्त्वप्रतिपतितपरिणामोऽवश्यं त्रिदशेषूत्पद्यते। प्रतिपतितपरिणामस्तु नानापरिणा-

भसंभवाध्यवसायपरिणाममन्यतमस्या गतावुत्पद्यते। उक्तं च—"बद्धाऊ पडिवन्नो पढमकसायक्खए जइ मरिज्जा। तो मिच्छत्तोदयओ चिणेज्ज भूयो न खीणम्मि॥ १॥ तम्मि मओ जाइ दिवं तप्परिणामो य सत्तए खीणे। उवरयपरिणामो पुण पच्छा नाणामइगईओ॥ २॥" बद्धायुष्कोऽपि यदि तदानीं कालं न करोति, तथापि सप्तके क्षीणे नियमादवतिष्ठते न तु चारित्रमोहक्षपणाय यत्नमारभते, यत आह—"बद्धाऊ पडिवन्नो नियमा खीणम्मि सत्तए ठाइ"। अथोच्यते—क्षीणसप्तको गत्यन्तर सक्रामन् कतितमे भवे मोक्षमुपयाति? उच्यते—तृतीये चतुर्थे वा भवे, तथाहि—यदि देवगति नरकगतिं वा सक्रामति ततो देवभवान्तरितो नरकभवान्तरितो वा तृतीयभवे मोक्षमुपयाति। अथ तिर्यक्षु मनुष्येषु वा समुत्पद्यते, तर्हि सोऽवश्यमसंख्येयवर्षायुष्केषु मध्ये गच्छति, न संख्येयवर्षायुष्केषु। ततस्तद्भवानन्तर देवभवे, तस्माच्च्युत्वा मनुष्यभवे, ततो मोक्ष यातीति चतुर्थभवे मोक्षगमन। उक्तं च पञ्चसंग्रहे—"तइयचउत्थे तम्मि व भवम्मि सिज्झंति दंसणे खीणे। ज देवनिरयसंखाउ चरिमदेहेसु ते होंति॥ १॥" एतानि च सप्त कर्माणि क्षपयन्ति अविरतसम्यग्दृष्टि देशविरतिः प्रमत्त अप्रमत्तो वा। तत एतेषु चतुर्ष्वपि सप्तकक्षय' प्राप्यते। तथा चाह सूत्रकृत्—'अविरत' इत्यादि अविरते देशे देशविरते प्रमत्तेऽप्रमत्ते च प्रथमकषायचतुष्कादीनि सप्त कर्माणि क्षीयन्ते क्षयमुपयान्ति। यदि पुनरबद्धायु क्षपकश्रेणिमारभते, तत सप्तके क्षीणे नियमादनुपरतपरिणाम एव चारित्रमोहनीयक्षपणाय यत्नमारभते। यत आह भाष्यकृत्—"इयरो अणुवरओच्चिय सयलं सेढिं समाणेइ"। चारित्रमोहनीयं च क्षपयितुं यतमानो यथाप्रवृत्तादीनि त्रीणि करणानि करोति, तद्यथा—यथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरण च। एषा च स्वरूप पूर्ववदेवावगन्तव्य। नवरमिह यथाप्रवृत्तकरणमप्रमत्तगुणस्थानके द्रष्टव्य,

अपूर्वकरणमपूर्वगुणस्थानके, अनिवृत्तिकरणमनिवृत्तिबादरसंपरायगुणस्थानके । तत्रापूर्वकरणे स्थितिघातादिनिरप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं तथा क्षपयति स्म, यथा अनिवृत्तिकरणाद्धायाः प्रथमसमये तत्पल्योपमासंख्येयभागमात्रस्थितिकं जातं । अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु सत्सु स्त्यानर्द्धित्रिकनरकगतितिर्यग्गतिनरकानुपूर्वीतिर्यगानुपूर्व्येकद्वित्रिचतुरिन्द्रियजातिस्थावरातपोद्योतसूक्ष्मसाधारणरूपाणां षोडशप्रकृतीनामुद्वलनासंक्रमेणोद्वल्यमानानां पल्योपमासंख्येयभागमात्रा स्थितिर्जाता । ततो बध्यमानासु प्रकृतिषु तानि षोडश कर्माणि गुणसंक्रमेण प्रतिसमयं प्रक्षिप्यमाणानि प्रक्षिप्यमाणानि निःशेषतः क्षीणानि भवन्ति । इहाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं पूर्वमेव क्षपयितुमारब्धं, परं तन्नाद्यापि क्षीणं, केवलमपान्तराल एव पूर्वोक्तप्रकृतिषोडशकं क्षपितं । ततः पश्चात्तदपि कषायाष्टकमन्तर्मुहूर्तमात्रेण क्षपयति । तथा चाह–"अनियट्टिबायरं थीणगिद्धितिगनिरयतिरियनामाउ । संखेज्जइमे सेसे तप्पाउग्गाउ खीयंते ॥ १ ॥ एत्तो हणइ कसायट्ठगंपि पच्छा नपुंसगं इत्थीं । तो नोकसायछक्कं छुभइ संजलणकोहम्मि ॥ २ ॥" अनिवृत्तिबादरगुणस्थानके संख्येयतमे भागे शेषे स्त्यानर्द्धित्रिकं निरयगतितिर्यग्गतिनाम्नी तत्प्रायोग्याश्च निरयगतितिर्यग्गतिप्रायोग्याश्च एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिनिरयानुपूर्वीतिर्यगानुपूर्वीस्थावरातपोद्योतसूक्ष्मसाधारणरूपाः सर्वसंख्यया षोडशप्रकृतयः क्षीयन्ते । तत इतः प्रकृतिषोडशकक्षयादनन्तरं निःशेषतः कषायाष्टकं हन्ति । अन्ये पुनराहुः–षोडश कर्माण्येव पूर्वं क्षपयितुमारभते, केवलमपान्तरालेऽष्टौ कषायान् क्षपयति, पश्चात् षोडश कर्माणि । ततोऽन्तर्मुहूर्तमात्रेण नवानां नोकषायाणां चतुर्णां संज्वलनानामन्तरकरणं करोति । तच्च कृत्वा नपुंसकवेददलिकमुपरितन-

स्थितिगतमुद्वलनविधिना क्षपयितुमारभते। तच्चान्तर्मुहूर्तमात्रेण पल्योपमासंख्येयभागमात्रं जातं। ततः प्रभृति बध्यमानासु प्रकृतिषु गुणसंक्रमेण दलिकं प्रक्षिपति। तच्चैव प्रक्षिप्यमाणमन्तर्मुहूर्तमात्रेण निःशेषं क्षीणं, अधस्तनदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति, अन्यथा त्वावलिकामात्रं, तच्च वेद्यमानासु प्रकृतिषु स्तिवुकसंक्रमेण संक्रमयति। तदेवं क्षपितो नपुंसकवेदः। ततोऽन्तर्मुहूर्तमात्रेण स्त्रीवेदोऽप्यनेनैव क्रमेण क्षिप्यते। ततः षड् नोकषायान् युगपत्क्षपयितुमारभते। ततः प्रभृति च तेषामुपरितनस्थितिगतं दलिकं न पुरुषवेदे संक्रमयति, किं तु संज्वलनक्रोधे। तथाचाह सूत्रकृत्–'पच्छा' इत्यादि, कषायाष्टकक्षयानन्तरं पश्चान्नपुंसकं नपुंसकवेदं क्षपयति। ततः 'इत्थीति' स्त्रीवेदं। ततः षड् नोकषायान्। तेषामुपरितनस्थितिगतं दलिकं संज्वलनक्रोधे 'छुभइति' क्षिपति, न पुरुषवेदे। एतेऽपि च षड् नोकषायाः संज्वलनक्रोधे पूर्वोक्तविधिना क्षिप्यमाणा अन्तर्मुहूर्तमात्रेण निःशेषाः क्षीणाः। तत्समयमेव च पुरुषवेदस्य बन्धोदयोदीरणाव्यवच्छेदः समयोनावलिकाद्विकबद्धं मुक्त्वा शेषदलिकस्य क्षयश्च, ततोऽसाविदानीमवेदको जातः। एवं पुरुषवेदेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यं। यदा तु नपुंसकवेदेन क्षपकश्रेणिं प्रतिपद्यते तदा प्रथमतः स्त्रीवेदनपुंसकवेदौ युगपत् क्षपयति। स्त्रीवेदनपुंसकवेदक्षयसमकालमेव पुरुषवेदस्य बन्धो व्यवछिद्यते। तदनन्तरं चावेदकः सन् पुरुषवेदहास्यादिषट्कं युगपत्क्षपयति। यदा तु स्त्रीवेदेन प्रतिपद्यते तदा प्रथमतो नपुंसकवेदं ततः स्त्रीवेदं, स्त्रीवेदक्षयसमकालमेव पुरुषवेदस्य बन्धव्यवच्छेदः। ततोऽवेदकः पुरुषवेदहास्यादिषट्कं युगपत्क्षपयति। संप्रति पुरुषवेदेन क्षपकश्रेणिं प्रतिपन्नमधिकृत्य प्रस्तुतमभिधीयते–क्रोधं वेदयमानस्य सतः तस्याः क्रोधाद्धायास्त्रयो विभागा भवन्ति, तद्यथा–

अश्वकर्णकरणाद्धा किट्टीकरणाद्धा किट्टीवेदनाद्धा च । तत्राश्वकर्णकरणाद्धायां वर्तमानः प्रतिसमयमनन्तानि अपूर्व-स्पर्धकानि चतुर्णामपि संज्वलनानामन्तरकरणादुपरितनस्थितौ करोति । अस्यां चाश्वकर्णकरणाद्धायां वर्तमानः पुरुष-वेदमपि समयोनावलिकाद्विकेन कालेन क्रोधे गुणसंक्रमेण संक्रमयन् चरमसमये सर्वसंक्रमेण संक्रमयति । तदेवं क्षीणः पुरुषवेदः । अश्वकर्णकरणाद्धायां च समाप्तायां किट्टीकरणाद्धायां प्रविशति । तत्र च प्रविष्टः सन् चतुर्णामपि संज्वलना-नामुपरितनस्थितिगतस्य दलिकस्य किट्टीः करोति । ताश्च किट्टयः परमार्थतोऽनन्ता अपि स्थूरजातिभेदापेक्षया द्वादश कल्प्यन्ते । एकैकस्य च कषायस्य तिस्रस्तिस्रः, तद्यथा—प्रथमा द्वितीया तृतीया च । एवं क्रोधेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यं । यदा तु मानेन प्रतिपद्यते, तदा उद्वलनविधिना क्रोधे क्षपिते सति त्रयाणां पूर्वक्रमेण नव किट्टीः करोति । मायया चेत् प्रतिपन्नस्तर्हि क्रोधमानयोरुद्वलनविधिना क्षपितयोः सतोः शेषद्विकस्य पूर्वक्रमेण षट् किट्टीः करोति । यदि पुनर्लोभेन प्रतिपद्यते तत उद्वलनविधिना क्रोधादित्रिके क्षपिते सति लोभस्य किट्टित्रिकं करोति । एष किट्टीकरणविधिः । किट्टीकर-णाद्धायां निष्ठितायां क्रोधेन प्रतिपन्नः सन् क्रोधस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतं आकृष्य प्रथमस्थितिं करोति वेद-यते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथम-स्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये तृतीयकिट्टिदलिकं द्वितीयस्थिति-गतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । तिसृष्वपि चामूषु किट्टिवेदनाद्धासूपरि-तनस्थितिगतं दलिकं गुणसंक्रमेणापि प्रतिसमयमसंख्येयगुणवृद्धिलक्षणेन संज्वलनमाने प्रक्षिपति । तृतीयकिट्टिवेदनाद्धायाश्च

चरमसमये सज्वलनक्रोधस्य बन्धोदयोदीरणाना युगपद्व्यवच्छेद, सत्कर्माऽपि च तस्य समयोनावलिकाद्विकबद्ध मुक्त्वाऽन्यन्नास्ति, सर्वस्य माने प्रक्षिप्तत्वात्। ततोऽनन्तरसमये मानस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगत आकृष्य प्रथमस्थिति करोति वेदयते च तावद्यावदन्तर्मुहूर्त। क्रोधस्यापि च बन्धादौ व्यवच्छिन्ने सति तस्य सबन्धि दलिक समयोनावलिकाद्विकमात्रेण कालेन गुणसक्रमेण सक्रमयन् चरमसमये सर्वसक्रमेण सक्रमयति। मानस्यापि च प्रथमकिट्टिदलिक प्रथमस्थितीकृत वेद्यमान समयाधिकावलिकाशेप जात। ततोऽनन्तरसमये मानस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्र शेप। ततोऽनन्तरसमये तृतीयकिट्टिदलिक द्वितीयस्थितिगतमाकृष्य प्रथमस्थिति करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्र शेप। तस्मिन्नेव च समये मानस्य बन्धोदयोदीरणाना युगपद्व्यवच्छेद, सत्कर्माऽपि च तस्य समयोनावलिकाद्विकबद्धमेव, शेपस्य मायाया प्रक्षिप्तत्वात्। ततो मायाया प्रथमकिट्टिदलिक द्वितीयस्थितिगतमाकृष्य प्रथमस्थिति करोति वेदयते च तावद्यावदन्तर्मुहूर्त। मानस्यापि च बन्धादौ व्यवच्छिन्ने सति तस्य सबन्धि दलिक समयोनावलिकाद्विकमात्रेण कालेन गुणसक्रमेण मायाया प्रक्षिपति। मायाया अपि च प्रथमकिट्टिदलिक द्वितीयस्थितिगत प्रथमस्थितीकृत वेद्यमान समयाधिकावलिकाशेप जात ततोऽनन्तरसमये मायाया द्वितीयकिट्टिदलिक द्वितीयस्थितिगतमाकृष्य प्रथमस्थिति करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेपः। ततोऽनन्तरसमये तृतीयकिट्टिदलिक द्वितीयस्थितिगतमाकृष्य प्रथमस्थिति करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्र शेप। तस्मिन्नेव समये मायाया बन्धोदयोदीरणाना युगपद्व्यवच्छेद,

सत्कर्माऽपि च तस्याः समयोनावलिकाद्विकबद्धमात्रमेव, शेषस्य गुणसंक्रमेण लोभे प्रक्षिप्तत्वात् । ततोऽनन्तरसमये लोभस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तं । संज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने तस्याः संबन्धि दलिकं समयोनावलिकाद्विकमात्रेण कालेन गुणसंक्रमेण लोभे सर्वं संक्रमयति । लोभस्य च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकामात्रं शेषं जातं । ततोऽनन्तरसमये लोभस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च । तां च वेदयमानस्तृतीयकिट्टिदलिकं गृहीत्वा सूक्ष्मकिट्टीः करोति, तावद्यावद्द्वितीयकिट्टिदलिकस्य प्रथमस्थितीकृतस्य समयाधिकावलिकामात्रं शेषः । तस्मिन्नेव च समये संज्वलनलोभस्य बन्धव्यवच्छेदो बादरकषायोदयोदीरणाव्यवच्छेदोऽनिवृत्तिबादरसंपरायगुणस्थानकव्यवच्छेदश्च युगपज्जायते । ततोऽनन्तरसमये सूक्ष्मकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च । तदानीमसौ सूक्ष्मसंपराय उच्यते । पूर्वोक्ताश्चावलिकास्तृतीयकिट्टिगताः शेषीभूताः सर्वा अपि वेद्यमानासु परप्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति । प्रथमद्वितीयकिट्टिगताश्च यथास्वं द्वितीयतृतीयकिट्ट्यन्तर्गता वेद्यन्ते । सूक्ष्मसंपरायश्च लोभस्य सूक्ष्मकिट्टीर्वेदयमानः सूक्ष्मकिट्टिदलिकं समयोनावलिकाद्विकबद्धं च प्रतिसमयं स्थितिघातादिभिस्तावत् क्षपयति यावत्सूक्ष्मसंपरायाद्धायाः संख्येया भागा गता भवन्ति, एकोऽवशिष्यते । ततस्तस्मिन् संख्येयभागे संज्वलनलोभं सर्वापवर्तनयाऽपवर्त्य सूक्ष्मसंपरायाद्धासमं करोति । सा च सूक्ष्मसंपरायाद्धा अद्याप्यन्तर्मुहूर्तप्रमाणा । ततः प्रभृति च स्थितिघातादयो निवृत्ताः शेषकर्मणां तु प्रवर्तन्त एव । तां च लोभस्यापवर्तितां स्थितिमुदयोदीरणाभ्यां वेदयमानस्ताव-

ञतो यावत्समयाधिकावलिकामात्रं शेष । ततोऽनन्तरसमये उदीरणा स्थिता । तत उदयेनैव केवलेन ता वेदयते यावच्चरमसमय । तस्मिंश्चरमसमये ज्ञानावरणपञ्चकदर्शनावरणचतुष्कयश कीर्त्युच्चैर्गोत्रान्तरायपञ्चकरूपाणा षोडशकर्मणा बन्धव्यवच्छेद मोहनीयस्योदयसत्ताव्यवच्छेदश्च ॥ ६६ ॥

अमुमेवार्थं सकलस्य सूत्रकृत्प्रतिपादयति—

**पुरिस कोहे कोहं माणे माण च छुहइ मायाए । मायं च छुहइ लोहे लोहं सुहुमं पि तो हणइ ॥ ६७ ॥**

टीका–पुरुष पुरुषवेद बन्धादौ व्यवच्छिन्ने सति गुणसंक्रमेण क्रोधे सज्वलनक्रोधे 'छुहइ त्ति' संक्रमयति । क्रोधस्यापि च बन्धादौ व्यवच्छिन्ने त क्रोध माने सज्वलनमाने सक्रमयति । सज्वलनमानस्यापि बन्धादौ व्यवच्छिन्ने त सज्वलनमानं गुणसक्रमेण मायाया सज्वलनमायाया प्रक्षिपति । सज्वलनमायाया अपि बन्धादौ व्यवच्छिन्ने ता सज्वलनमाया लोभे सज्वलनलोभे गुणसक्रमेण सक्रमयति । सज्वलनलोभस्यापि च बन्धादौ व्यवच्छिन्ने तं सज्वलनलोभ सूक्ष्ममपि, अपिशब्दात्बादरमपि हन्ति स्थितिघातादिभिर्विनाशयति । लोभे च साकल्येन विनाशिते सत्यनन्तरसमये क्षीणकषायो जायते । तस्य च क्षीणकषायस्य मोहनीयवर्जाना शेषकर्मणा स्थितिघातादय पूर्ववत् प्रवर्तन्ते तावद्यावत्क्षीणकषायाद्धाया' सख्येया भागा गता भवन्ति, एक सख्येयो भागोऽवतिष्ठते । तस्मिंश्च ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकनिद्राद्विकरूपाणा षोडशकर्मणा स्थितिसत्कर्म सर्वापवर्तनया अपवर्त्य क्षीणकषायाद्धासमं करोति । केवल निद्राद्विकस्य स्वरूपापेक्षया समयन्यून, कर्मत्वमात्रापेक्षया तु तुल्य । सा च क्षीणकषायाद्धाऽद्याप्यन्तर्मुहूर्तप्रमाणा, तत

प्रभृति च तेषां स्थितिघातादयः स्थिताः, शेषाणां तु भवन्त्येव । तानि च षोडशकर्माणि निद्राद्विकहीनानि उदयोदीरणाभ्यां वेदयमानस्तावद्गतो यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये उदीरणा निवृत्ता, तत आवलिकामात्रं कालं यावदुदयेनैव केवलेन वेदयते यावत्क्षीणकषायाद्धाया द्विचरमसमयः तस्मिंश्च द्विचरमसमये निद्राद्विकं स्वरूपसत्तापेक्षया क्षीणं, चतुर्दशानां च शेषप्रकृतीनां चरमसमये क्षयः । तथा चाह सूत्रकृत्—"खीणकसायदुचरिमे निद्दापयला य हणइ छउमत्थो । आवरणमंतराए छउमत्थो चरिमसमयम्मि ॥ १ ॥" व्याख्यातार्था । ततोऽनन्तरसमये सयोगिकेवली भवति । स च लोकमलोकं वा सर्वं सर्वात्मना परिपूर्णं पश्यति । न हि तदस्ति भूतं भवद्भविष्यद्वा यद्भगवान् न पश्यति । उक्तं च—"संभिन्नं पासंतो लोगमलोगं च सव्वओ सव्वं । तं नत्थि जं न पासइ भूयं भव्वं भविस्सं च ॥१॥" इत्थंभूतश्च सयोगिकेवली जघन्यतोऽन्तर्मुहूर्तमुत्कर्षतो देशोनां पूर्वकोटीं विहृत्य कश्चित् कर्मणां समीकरणार्थं समुद्घातं करोति । यस्य वेदनीयादिकमायुषः सकाशादधिकतरं भवति । अन्यस्तु न करोत्येव । तथा चोक्तं प्रज्ञापनायां—"सव्वोवि णं भंते केवली समुग्घायं गच्छति ? । गोयमा ! नो इणट्ठे समट्ठे, जस्साउएण तुल्लाइं बंधणेहिं ठिइए य भवोवग्गहकम्माइं स न समुग्घायं गच्छइ—अगंतूणं समुग्घायमणंता केवलीजिणा । जरमरणविप्पमुक्का सिद्धिं वरगइं गया ॥ १ ॥" अत्र 'बंधणेहिं ति' बध्यन्ते इति बन्धनाः कर्मपरमाणवः । कृत् "बहुलमिति" ( ५-१-२ ) वचनात् कर्मण्यनट् प्रत्ययः । तैः । शेषं सुगमम् । गत्वा चागत्वा च समुद्घातं भवोपग्राहिकर्मक्षपणाय लेश्यातीतमत्यन्ताप्रकंपं परमनिर्जराकारणं ध्यानं प्रतिपित्सुर्योगनिरोधायोपक्रमत एव । तत्र पूर्वं बादरकाययोगेन बादरमनोयोगं निरुणद्धि, ततो वाग्योगं । ततः

सूक्ष्मकाययोगेन बादरकाययोगं । ततस्तेनैव सूक्ष्मकाययोगेन सूक्ष्ममनोयोग, तत सूक्ष्मवाग्योग निरुन्धान. सूक्ष्मक्रिया- ऽप्रतिपातिध्यानमारोहति । तत्सामर्थ्याच्च वदनोदरादिविवरपूरणेन सकुचितदेहत्रिभागवर्तिप्रदेशो भवति । तस्मिश्च ध्याने वर्तमान स्थितिघातादिभिरायुर्वर्जानि सर्वाण्यपि भवोपग्राहिकर्माणि तावदपवर्तयति यावत्सयोग्यवस्थाचरमस- मय । तस्मिंश्च चरमसमये सर्वाण्यपि कर्माणि अयोग्यवस्थासमस्थितिकानि जातानि । नवर येषा कर्मणामयोग्यवस्था- यामुदयाभावस्तेषा स्थिति स्वरूप प्रतीत्य समयोना विधत्ते । कर्मत्वमात्ररूपता त्वाश्रित्यायोग्यवस्थासमानामेव । तस्मिश्च सयोग्यवस्थाचरमसमयेऽन्य(तर)वेदनीयमौदारिकतैजसकार्मणशरीरसबद्ध बन्धनसघातन(न)सस्थानषट्कप्रथमसंहननौदारि- काङ्गोपाङ्गवर्णादिचतुष्टयागुरुलघूपघातपराघातोच्छ्वासशुभाशुभविहायोगतिप्रत्येकस्थिरास्थिरशुभाशुभसुस्वरदु.स्वरनिर्माण- नाम्नामुदयोदीरणाव्यवच्छेद. ।ततोऽनन्तरसमयेऽयोगिकेवली भवति । अयोगिकेवली च भवस्थोऽजघन्योत्कर्षमन्तर्मुहूर्तं काल भवति। स च तस्यामवस्थाया वर्तमानो भवोपग्राहिकर्मक्षपणाय व्युपरतक्रियमप्रतिपातिध्यानमारोहति। एवमसावयो- गिकेवली स्थितिघातादिरहितो यान्युदयवन्ति कर्माणि तानि स्थितिक्षयेणानुभवन् क्षपयति । यानि पुनरुदयवन्ति तदानीं न सन्ति तानि वेद्यमानासु प्रकृतिषु स्तिबुकसक्रमेण संक्रमयन् वेद्यमानप्रकृतिरूपतया वेदयमानस्तावद्याति यावदयोग्यवस्थाद्विचरमसमय ॥ ६७ ॥

देवगइसहगयाउ दुचरमसमयभवियम्मि ( दुचरमभवसिद्धियंमि ) खीयंति ।

सविवागेयरनामा नीयागोयं पि तत्थेव ॥ ६८ ॥

टीका–देवगत्या सह गता स्थिता. देवगतिसहगता॰ देवगत्या सह एकान्तेन बन्धो यासा ता देवगतिसहगता

सत्ताव्यवच्छेदः । आनुपूर्वीनाम्नां तु चतुर्णामपि क्षेत्रविपाकितया भवापान्तरालगतावेवोदयः, तेन न भवस्थस्य तदुदयसंभवः, तदसंभवाच्चायोग्यवस्थाद्विचरमसमय एव मनुष्यानुपूर्व्याः सत्ताव्यवच्छेद इति । एतदेव मतमधिकृत्य प्राक् द्विचरमसमये सप्तचत्वारिंशत्प्रकृतीनां सत्ताव्यवच्छेदो दर्शितः । चरमसमये तूत्कर्षतो द्वादशानां जघन्यत एकादशानामिति । ततोऽनन्तरसमये कोशबन्धमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादेरण्डफलमिव भगवानपि कर्मसंबन्धमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादूर्ध्वं लोकान्ते गच्छति । स चोर्ध्वं गच्छन् ऋजुश्रेण्या यावत्स्वाकाशप्रदेशेष्विहावगाढस्तावतः प्रदेशानूर्ध्वमप्यवगाहमानो विवक्षितसमयाच्चान्यत्समयान्तरमस्पृशन् गच्छति । उक्तं चावश्यकचूर्णौ–"जत्तिए जीवोऽवगाढो तावइयाए उगाहणाए उड्ढं उज्जुगं गच्छइ नवकं वीयं च समयं न फुसइ त्ति"। एवं चानेके भगवन्तः कर्मक्षयं कृत्वा गताः सन्तः सिद्धिसुखं शाश्वतं कालमनुभवन्तोऽवतिष्ठन्ते ॥ ७२ ॥

तथा चाह—

**अह सुइयसयलजगसिहरमरुयनिरुवमसहावसिद्धिसुहं।अनिहणमव्वाबाहं तिरयणसारं अणुहवंति ७३**

टीका–अथेत्यानन्तर्ये कर्मक्षयादनन्तरं शुचिकं एकान्तशुद्धं, न रागादिदोषव्यामिश्रं । तथा सकलं संपूर्णं । तथा जगच्छिखरं सकलसांसारिकलोकसंभविसुखनिकुरुम्बशेखरभूतं कर्मक्षयात् । कथमिति चेदत आह–अरुजं लेशतोऽपि तत्र व्याधेरभावात्, उपलक्षणमेतत् आधेरप्यभावस्तत्र द्रष्टव्यः । सांसारिकं च सुखमाधिव्याधिसंकुलं । तथा निरुपमं उपमातीतं, न हि तत्सदृशं किञ्चिदपीह संसारेऽस्ति सुखं येन तदुपमीयते, तस्मान्निरुपमं । तथा 'सहाव त्ति' स्वभा-

यद्भूतं, न संसारसुखमिव कृत्रिमं, अतस्तत्सकलदेवासुरमनुजसंजविसुखसमूहशेखरकल्पं । इत्थंभूतं सिद्धिसुख मोक्षसुख अनिधनमपर्यवसान । कथमपर्यवसानतेति चेदत आह–अव्याबाध व्याबाधारहितं बाधयितुमशक्य मिति भावार्थ । तथाहि–रागादयस्तत्सुख बाधयितुमीशास्ते च सर्वात्मना क्षीणा । न च क्षीणा अपि पुन प्रादुर्भावमश्नुवते, तत्कारण-पुद्गलानामभावात् । न च तेऽपि पुद्गला भूयोऽपि बध्यन्ते, सक्लेशमन्तरेण तद्बन्धाभावात् । न च सर्वात्मना रागा-दिक्लेशविमुक्तस्य भूयः सक्लेशोत्थान, तत्कारणकर्मपुद्गलाभावात्, अतो रागादिसंक्लेशोत्थानाभावात् सिद्धिसुखमव्या-बाधं । पुन तत्कथभूतमित्याह–त्रिरत्नसार त्रीणि रत्नानि सम्यग्दर्शनज्ञानचारित्रलक्षणानि तेषा सार फल । तथाहि–सम्यग्दर्शनज्ञानचारित्राण्येव कर्मक्षयकारण, कर्मक्षयाच्च सिद्धिसुखसंप्राप्ति , अत सिद्धिसुख त्रिरत्नसार । एतेन किमुक्त भवति ? इत्थभूत सिद्धिसुखमभिलषताऽवश्य रत्नत्रये प्रेक्षावता यत्न आस्थेय , उपायमन्तरेणोपेयसिद्ध्यभावात् । उपा-यभूत च सिद्धिसुखस्य रत्नत्रय, कर्मक्षयकारणत्वात् । तथाहि–अज्ञानादिनिमित्तं कर्म, अज्ञानादिप्रतिपन्थि च ज्ञानादि, ततोऽवश्य ज्ञानाद्यासेवाया कर्मक्षय इति । इत्थभूत सिद्धिसुख, तत्र गता सन्तोऽनुभवन्ति वेदयन्ति ॥ ९३ ॥

इह बन्धोदयसत्कर्मणा सवेधश्चिन्तित , सोऽपि सामान्येन, ततो बन्धोदयसत्कर्मसु विशेषजिज्ञासायामतिदेशमाह—

**दुरहिगम-निउण-परमठ-रुइर-बहुभग-दिठिवायाउ । अठा अणुसरियब्वा बंधोदयसंतकम्माणं ॥ ९४ ॥**

टीका–दु खेन महता कष्टेन प्रमाणनयनिक्षेपादिभिरधिगम्यत इति दुरधिगम । निपुण सूक्ष्मबुद्धिगम्य । परमार्थो यथावस्थितार्थ । रुचिर सूक्ष्मसूक्ष्मतरार्थनेतृपटुप्रज्ञाना मनःप्रह्लादकर । बहुभगो बहुविकल्प । यो दृष्टिवादस्तस्मात् ।

बन्धोदयसत्कर्मणां विषयेऽर्था विशेषरूपा अनुसर्तव्याः ज्ञातव्याः । इह तु संक्षिप्तरुचिसत्त्वानुग्रहप्रवृत्ततया ग्रन्थगौरवभयान्नोच्यन्ते ॥ ७४ ॥

संप्रत्याचार्योऽनुद्धतत्वेनात्मनोऽल्पागमत्वं ख्यापयन् शेषबहुश्रुतानां च बहुमानं प्रकटयन् प्रकरणपरिपूर्णताविधिविषये तेषां प्रार्थनां विदधान आह—

**जो जत्थ अपडिपुन्नो अत्थो अप्पागमेण बद्धो त्ति । तं खमिऊण बहुसुया पूरेऊणं परिकहंतु ॥ ७५ ॥**

टीका—अत्र सप्ततिकाख्ये प्रकरणे यत्र बन्धे उदये सत्तायां वा योऽर्थोऽपरिपूर्णः खंभोऽल्पागमेनाल्पश्रुतेन मया बद्धो निबद्धः । इतिशब्दः समाप्तिवचनः, स च गाथापर्यन्ते वेदितव्यः । तमपरिपूर्णमर्थं तत्र बन्धादौ ममापरिपूर्णार्थाभिधानलक्षणमपराधं क्षमित्वा बहुश्रुता दृष्टिवादज्ञाः पूरयित्वा तत्तदर्थप्रतिपादिकां गाथां प्रक्षिप्य शिष्यजनेभ्यः परिकथयन्तु सामस्त्येन प्रतिपादयन्तु । बहुश्रुता हि परिपूर्णज्ञानसंभारसंपत्समन्विततया परोपकारकरणैकरसिकमानसा भवन्ति, ततो मम शिष्याणां च परमुपकारमाधित्सवस्तेऽवश्यं ममास्फुटापरिपूर्णार्थाभिधानलक्षणमपराधं विषह्य(ह्या) परिपूर्णमर्थं पूरयित्वा शिष्येभ्यः कथयन्तु ॥ ७५ ॥

निरुपममनन्तमनघं शिवपदमधिरूढमपगतकलंकम् । दर्शितशिवपुरमार्गं वीरजिनं नमत परमशिवम् ॥ १ ॥

यस्योपान्तेऽपि संप्राप्ते प्राप्यन्ते संपदोऽनघाः । नमस्तस्मै जिनेशश्रीवीरसिद्धान्तसिन्धवे ॥ २ ॥

यैरेषा विषमार्था सप्ततिका सुस्फुटीकृता सम्यक् । अनुपकृतपरोपकृतश्चूर्णीकृतस्तान्नमस्कुर्वे ॥ ३ ॥

प्रकरणमेतद्विषमं सप्ततिकाख्य विवृण्वता कुशलम् । यदवापि मलयगिरिणा सिद्धिं तेनाश्नुता लोकः ॥ ४ ॥
अर्हतो मगल सिद्धान्मंगलं सयतानहम् । अशिश्रियं जिनाख्यात धर्मं परममंगलम् ॥ ५ ॥
मगल लेखकस्यापि पाठकस्यापि मगलम् । मगल सर्वलोकाना भूमिभूपालमंगलम् ॥ [1]६ ॥

१ प्रक्षिप्तोऽय लेखकेन केनापि पडितमानिना सूरिग्रथितशब्दार्थद्वादशादित्यस्याग्रत प्रत्यक्षमीक्ष्यमाण प्रेक्षावद्भिर्ज्योतिरिंगणप्रभ कुक्षिम्भृताव्ययग्रजो लेखकप्राधान्यख्यापक श्लोक ।

॥ इति श्रीमलयगिरिविरचिता सप्ततिका टीका ॥

॥ आगमिकाचार्यश्रीजयतिलकरचित ॥

# ॥ संस्कृतकर्मग्रन्थः ॥

## प्रकृतिविच्छेदप्रकरणम् ॥ १ ॥

श्रीमद्वीरजिन नत्वा वक्ष्ये सक्षेपतस्तथा । गुणस्थानेषु त्रि(च्छि)द्यन्ते कर्मप्रकृतयो यथा ॥ १ ॥
मिथ्यादृष्टिगुणस्थान १ तत सास्वादनाभिधम् २ । मिश्र ३ चाविरत चैव ४ विरताविरतं तथा ५ ॥ २ ॥
प्रमत्त ६ चाप्रमत्त च ७ निवृत्तेर्बादर तथा ८ । बादर चानिवृत्ते ९ स्यात्तत सूक्ष्मकषायकम् १० ॥ ३ ॥
उपशान्त ११ क्षीण १२ मोहे गुणस्थाने क्रमाद्धुवे । सयोगकेवलिस्थान १३ मन्त्य चायोगिकेवलि १४ ॥ ४ ॥
जिनादिष्टेषु तत्त्वेषु न श्रद्धान जनेदिह । श्रद्धान चापि यन्मिथ्योऽन्यथा या च प्ररूपणा ॥ ५ ॥
सदेहकरणं यच्चे यदेतेष्वप्यनादरं । तन्मिथ्या पञ्चधा तस्मिन् दृग्मिथ्यादृष्टिको गुण १ ॥ युग्मम् ॥ ६ ॥
न प्राप्तं यत्र मिथ्यात्व सम्यक्त्व वमताऽङ्गिना ( म् ) । तदे ( त्रै ) व गन्तुकामेन स्वाद्य सास्वादनो गुण २ ॥ ७ ॥

---

१ अनाभिग्रहिकम् । २ आभिग्रहिकम् । ३ आभिनिवेशिकम् । ४ सांशयिकम् । ५ अनाभोगिकम् ।

गुरुदध्नोर्यथास्वादो मिश्रयोर्जेमतामिह । मिथ्यासम्यक्त्वयोरेवं मिश्रयोर्मिश्रको गुणः ३ ॥ ८ ॥
सम्यक्त्वे सति विरतिर्यत्र स्तोकाऽपि नो भवेत् । सोऽत्राविरतिसम्यक्त्वगुणस्तुर्यो निगद्यते ४ ॥ ९ ॥
देशतो विरतिर्यत्र स देशविरतिर्गुणः ५ । विकथादिरतो यत्र यतिः स्यात्स प्रमत्तकः ६ ॥ १० ॥
अप्रमत्तो यतिर्यत्राप्रमत्तयतिकः स तु ७ । निवृत्तिबादरापूर्वकरणौ त्वेकवाचकौ ॥११॥
क्रियन्तेऽपूर्वापूर्वाणि पञ्चामून्यत्र संस्थितैः । निवृत्तिबादरस्तेनापूर्वकरण उच्यते ॥ १२ ॥
स्थितिघातो रसघातो गुणश्रेण्यधिरोहणम् । गुणसंक्रमणं चैव स्थितिबन्धश्च पञ्चमः ॥ १३ ॥
निवर्तन्तेऽङ्गिनोऽन्योऽन्यं यत्रैकसमयाश्रिताः । निवृत्तिः कथ्यते ८ तेनानिवृत्तिस्तद्विपर्ययात् ९ ॥ १४ ॥
स्थूलानां लोभखंडानां वेदको बादरस्तु सः । सूक्ष्माणां तु भवेत्सूक्ष्म १० उपशान्तः प्रशान्तितः ११ ॥ १५ ॥
मोहनीये ततः क्षीणे क्षीणमोहो गुणो भवेत् १२ । सयोगः केवली यत्र स सयोगाख्यकेवली १३ ॥ १६ ॥
अयोगः केवली यत्र स गुणोऽयोगकेवली १४ । गुणानां स्थानकान्याहुस्तेनैतेषां चतुर्दश ॥ १७ ॥

अभव्यानां तु मिथ्यात्वमनाद्यन्तेन वर्जितम् । सान्तमनादि भव्यानां सम्यक्त्वेऽन्तो यतो भवेत् १ ॥ १८ ॥
पल्यावलीप्रमाणं स्यात् सास्वादनगुणास्पदम् २ । साधिकानि त्रयस्त्रिंशदतराणि तु तुर्यकम् ४ ॥ १९ ॥
पूर्वकोटीं च देशानां द्वे त्रयोदशपञ्चमे । पञ्चह्रस्वाक्षरोच्चारकालमानं तथान्तिमम् १४ ॥ २० ॥
षष्ठादि द्वादशं यावत्सप्त मिश्रं तथाष्टमम् । अन्तर्मुहूर्तमानानि स्थानान्यष्टौ पृथक् पृथक् ॥ २१ ॥

मिश्रक्षीणसयोगेषु म्रियन्ते त्रिषु नाङ्गिनः । एकादशसु शेषेषु म्रियन्ते स्थानकेषु तु ॥ २२ ॥
त्रिभि सार्ध परं लोक यान्त्येष्वेकादशस्वपि । सास्वादनेन मिथ्यात्वेनाथवाऽविरतेन च ॥ २३ ॥
यान्ति जीवा पर लोक शेषान्मुक्त्वा गुणानिह । गुणस्थानविचारोऽय कथितः पूर्वसूरिभि ॥ २४ ॥
अष्टौ प्रकृतयो मूला कर्मणामुत्तराः पुन । शतमेक समाख्यातमष्टपञ्चाशदुत्तरम् ॥ २५ ॥
ज्ञानावृत्तिर्दृगावृत्तिर्वेदनीया च मोहिनी । आयुष्कनामगोत्रान्तरायप्रकृतयः क्रमात् ॥ २६ ॥
मतिश्रुतावधिमन पर्यायकेवलाभिधा । ज्ञानावृत्ते पटाभायाः पञ्च भेदा प्रकीर्तिता ॥ २७ ॥
प्रतीहारसम दृष्ट्यावरण नवधा पुनः । दर्शनानीह चत्वारि निद्राणा पञ्चक तथा ॥ २८ ॥
अचक्षुश्चक्षुरवधिकेवलादर्शनावृतेः । चत्वारि दर्शनान्याहुर्निद्राणा पञ्चक त्विदम् ॥ २९ ॥
सुखावबोधिनी निद्रा दुर्बोधा च द्विरुक्तिका । उत्थापितस्य यायाति प्रचला सा स्मृता बुधैः ॥ ३० ॥
यानेऽप्यायाति या निद्रा प्रचलाप्रचलेति सा । दिनचिन्तितकार्यस्य स्त्यानर्द्धि साधिका पुन ॥ ३१ ॥
वेदनीय द्विभेद स्यादसात सातमेव च । मधुलिप्तासिधारायाः स्वादतुल्यमुदीरितम् ॥ ३२ ॥
मद्याभ मोहनीयं च तस्याष्टाविंशतिर्भिदः । कषायाः षोडश प्रोक्ता नोकषायास्तथा नव ॥ ३३ ॥
क्रोधो मानो माया लोभश्चत्वारोऽपि चतुर्विधा । सञ्ज्वलनप्रत्याप्रत्याख्यानानन्तानुबन्धिनः ॥ ३४ ॥

पक्षं संज्वलनाः प्रत्याख्याना मासचतुष्टयम् । अप्रत्याख्यानका वर्षं जन्मानन्तानुबन्धिनः ॥ ३५ ॥
हासो रत्यरती भीतिः कुत्सा शोकः षडप्यमी । पुंस्त्रीनपुंसका वेदा नोकषाया अमी नव ॥ ३६ ॥
पञ्चविंशतिभेदं स्यादिदं चारित्रमोहकम् । मिथ्यात्वमिश्रसम्यक्त्वत्रिविधं दर्शनात्रिधम् ॥ ३७ ॥
आयुषो हडिरूपस्य भेदाश्चत्वार एव हि । श्वभ्रतिर्यङ्नरामर्त्यगतिभेदेन निर्मिताः ॥ ३८ ॥
नाम्नश्चित्रकराभस्य द्विचत्वारिंशदुत्तराः । सप्तषष्टिस्त्रिनवतिरथवा त्र्युत्तरं शतम् ॥ ३९ ॥
गतिजातिशरीराङ्गोपाङ्गबन्धननामकाः । संघातनं च संस्थानं संहननानुपूर्विके ॥ ४० ॥
वर्णगन्धरसस्पर्शाः खगतिश्चेति संज्ञया । पिण्डप्रकृतयो नाम्नः सर्वा एताश्चतुर्दश ॥ ४१ ॥
पराघातं तथोच्छ्वासमातपोद्योतकेऽपि च ( अपि ) । अगुरुलघु तीर्थं च निर्माणमुपघातकम् ॥ ४२ ॥
अगुरुलघुकोच्छ्वासपराघातोपघातकम् । तीर्थंकरं च निर्माणमातपोद्योतकं तथा ॥ ४३ ॥ ( पाठान्तरं )
अष्टौ प्रकृतयो नाम्न एताः प्रत्येकसंज्ञिताः । त्रसबादरपर्याप्तप्रत्येकानि स्थिरं शुभम् ॥ ४४ ॥
सुभगं सुस्वरादेये यशश्चेति त्रसादयः । स्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभम् ॥ ४५ ॥
दुर्भगं दुःस्वरं चैवानादेयमयशोऽपि च । स्थावराद्या दशैते स्युस्त्रसाद्यैः सह विंशतिः ॥ ४६ ॥
चतुष्कं स्थावरवर्णागुरुलघुत्रसादिकम् । स्थिरास्थिरादिषट्कं च त्रिकं सूक्ष्मादिसंज्ञकम् ॥ ४७ ॥
तैजसकार्मणागुरुलघुनिर्माणकर्मणाम् । चतुष्कं तैजसस्येदं ज्ञातव्यमिह संज्ञया ॥ ४८ ॥

द्विचत्वारिंशदेव स्यात्सप्तषष्टिरथोच्यते । चतुर्विधा गति श्वभ्रतिर्यङ्नरसुराभिधा ॥ ४९ ॥
एकद्वित्रिचतुष्पञ्चेन्द्रियाख्या' पञ्च जातय' । औदारिकवैक्रियाहारकतैजसकार्मणम् ॥ ५० ॥
पञ्चाङ्गानि त्र्युपाङ्गान्याद्याङ्गाना सहननानि षट् । वज्रऋषभनाराच नाराचमृषभादिकम् ॥ ५१ ॥
नाराचमर्धनाराच कीलिका छेदवृत्तकम् । षट् सस्थानानि चामूनि समन्ताच्चतुरस्रकम् ॥ ५२ ॥
न्यग्रोधसादिवामनकुब्जहुडाभिधानि च । वर्णगन्धरसस्पर्शा शुभाशुभनभोगती ॥ ५३ ॥
चतुर्धागतिभेदेनानुपूर्वी च चतुर्विधा । त्रसादिविंशतिश्चाष्टौ प्रत्येकाश्चेति ता भिद ॥ ५४ ॥
अथ बन्धनसघातौ पञ्चभेदौ पृथक् पृथक् । पुराङ्गग्रहणेनात्तौ दश भेदास्तयोरमी ॥ ५५ ॥
वर्णाः पञ्च रसा' पञ्चाष्टौ स्पर्शा गन्धयुग्मकम् । पूर्वत्रिषष्टियुक्ता' स्युर्भेदास्त्रिनवतिस्त्वमी ॥ ५६ ॥
अथवा पञ्चदशभिर्भेदैर्बन्धनकर्मण । अष्टाशीत्या सम नामभेदा स्युरुयुत्तर शतम् ॥ ५७ ॥
औदारिकादिदेहानामन्योऽन्यं पुद्गलानिह । यद्बध्नाति तदङ्गाख्यबन्धन तज्जतूपमम् ॥ ५८ ॥
औदारिकस्य चत्वारो निजतैजसकार्मणै' । द्वाभ्या च वैक्रियस्यापि ४ तथैवाहारकस्य च ४ ॥ ५९ ॥
स्वकार्मणकृतौ द्वौ च तैजसस्यैककार्मणः । बन्धनानाममी भेदा ज्ञेया' पञ्चदश क्रमात् ॥ ६० ॥
यदौदारिकाद्यङ्गाना सघातयति पुद्गलान् । सघातं पञ्चधा ज्ञेय तत्तदङ्गाभिधानतः ॥ ६१ ॥
कृष्णो नीलश्च रक्तश्च पीतः श्वेतश्च वर्णका । तिक्तकटुकषायाम्लमधुराख्या रसा स्मृता ॥ ६२ ॥

सयोगस्थानके बन्धस्यान्तो भव्यस्य सर्वथा । अभव्यस्य पुनर्नैव बन्धस्यान्तोऽत्र कर्हिचित् ॥८९॥

इति बन्धविच्छेदः ॥ २ ॥

स्युर्द्वाविंशं शतं भेदाः सामान्येनोदये यतः । मिश्रसम्यक्त्वभेदौ द्वावधिकौ बन्धभेदतः ॥ ९० ॥
मिश्रं सम्यक्त्वमार्हन्त्यमाहारकद्वयं विना ॥ ९१ ॥
मिथ्यादृष्टौ पुनर्ज्ञेयं शतं सप्तदशोत्तरम् । मिथ्यात्वमातपं सूक्ष्मत्रयं चात्र निवर्तितम् । सास्वादनगुणे शेषं शतमेकादशाधिकम् ॥ ९२ ॥
अत्रानन्तकषायाणां स्थावरस्य च कर्मणः ॥ ९३ ॥
नरकस्यानुपूर्व्या नोदयः सास्वादने पुनः । मिश्रे शतं यतो मिश्रे मिश्रस्यास्ति ध्रुवोदयः ॥ ९४ ॥
एकेन्द्रियादिजातीनामन्तश्चतसृणामपि । मिश्रस्यैवैकभेदस्य मिश्रस्थाने त्रुटिर्भवेत् ॥ ९५ ॥
तिसृणामानुपूर्वीणां शेषाणामुदयो न तु । सम्यक्त्वस्यानुपूर्वीणां पश्चानां वृद्धितः पुनः ॥ ९६ ॥
चतुर्युक्तमविरतिसम्यग्दृष्टौ शतं भवेत् । तिर्यङ्नरानुपूर्व्यौ च दुर्भगं वैक्रियद्वयम् ॥ ९७ ॥
नरकामरगत्यानुपूर्व्यायुरपकीर्त्तयः । प्रक्षीणा देशविरतौ सप्ताशीतिः स्थिता परम् ॥ ९८ ॥
संपराया द्वितीयाश्चानादेयं दश सप्त च । उद्योतमष्टमं चेति भेदा देशव्रते गताः ॥ ९९ ॥
तिर्यग्गत्यायुषी नीचैः संपरायास्तृतीयकाः । स्त्यानर्द्धित्रितयस्यान्तोऽत्राहारकद्वयस्य च ॥ १०० ॥
एकाशीतिः प्रमत्ते ते शेषाः साहारकद्वयः । सम्यक्त्वस्य तथा प्रान्त्यसंहतीनां त्रयस्य च ॥ १०१ ॥
षट्सप्ततिरप्रमत्ते चतुर्णामिह तु त्रुटिः ।

द्विसप्ततिच्छिदोऽपूर्वेऽत्रान्तो हास्यादिषड्भिदाम् । षट्षष्टिरनिवृत्त्याख्ये षण्णां भेदोऽत्र निश्चितम् ॥ १०२ ॥
वेदानां च कषायाणां तुर्याणां त्रितयस्य च । सूक्ष्मे षष्टिः क्षयस्तत्र तुर्यलोभस्य सर्वथा ॥ १०३ ॥
उपशान्तादिमोहाख्ये स्थाने चैकोनषष्टिका । नाराचर्षभनाराचसंहत्योरिह तु त्रुटिः ॥ १०४ ॥
क्षीणस्योपान्त्यसमये पञ्चाशत् सप्तसंयुता । निद्राप्रचलयोरन्तः पञ्चपञ्चाशदन्तिमे ॥ १०५ ॥
दर्शनानीह चत्वारि विघ्नज्ञानच्छिदो दश । चतुर्दशेति तिष्ठन्ति ततस्तीर्थकरोदयः ॥ १०६ ॥
सयोगस्थानके तेन द्विचत्वारिंशदुन्नताः । औदारिकास्थिराकाशगतियुग्मानि निर्मितिः ॥ १०७ ॥
षट्संस्थानानि पर्याप्तत्रयं वर्णचतुष्टयम् । तैजसकार्मणाङ्गे द्वे आदिमा संहतिस्तथा ॥ १०८ ॥
चत्वारोऽगुरुलघ्वाद्याः सुस्वरं दुःस्वरं तथा । असातसातयोरेकं वेदनीयं द्वयोरपि ॥ १०९ ॥
त्रिंशदेषा स्थिता पश्चादयोगे द्वादशोदयः । त्रसादित्रिकमादेयं यशः सौभाग्यमुच्चकैः ॥ ११० ॥
वेदनीयं द्वयोरेकं जातिः पञ्चेन्द्रियाभिधा । मनुष्यायुर्गती तीर्थमेतेऽत्यन्तसमक्षयाः ॥ १११ ॥

इत्युदयविच्छेदः ॥ ३ ॥

उदीरणापि सर्वत्र ज्ञातव्योदयसन्निभा । विशेषोऽस्ति पुनस्तस्यास्त्रिषु स्थानेषु तद्यथा ॥ ११२ ॥
ये सयोगपदे भेदा द्विचत्वारिंशदुन्नताः । सातासाते नरायुश्च तन्मध्यात्त्रयमुद्धृतम् ॥ ११३ ॥
एतत्त्रयं च ताः पञ्च याः पूर्वमुदयोदिताः । त्रुट्यन्तेऽष्टौ प्रकृतयः प्रमत्तयतिनामनि ॥ ११४ ॥

## ॥ सूक्ष्मार्थसंग्रहप्रकरणम् ॥ २ ॥

सूक्ष्मार्थसार्थवक्तारं दातारं स्वमहाश्रियः । सूक्ष्मात्सूक्ष्मतमाकारं चिदपारं जिनं स्तुमः ॥ १ ॥
षडशीतिकमालोक्य कुर्वे सूक्ष्मार्थसंग्रहम् । जीवानां मार्गणानां च गुणानां स्थानकेषु च ॥ २ ॥
योगानुपयोगाँल्लेश्याः कर्मबन्धादिभंगकान् । प्रायोऽल्पबहुतां वक्ष्ये भावान् संख्यातकादि च ॥ ३ ॥ युग्मम् ॥
जीवस्थानेषु भाव्यानि गुणस्थानपुरस्सरम् । पूर्वं जीवगुणस्थानैर्मार्गणास्थानकेषु तु ॥ ४ ॥
गुणस्थानेषु चामूनि जीवस्थानकपूर्वकम् । योगादीनि सत्तान्तानि प्रायोऽल्पबहुतादि च ॥ ५ ॥ युग्मम् ॥
एकाक्षा बादराः सूक्ष्माः सद्वित्रिचतुरिन्द्रियाः । असंज्ञिसंज्ञिनामानो द्विधा पञ्चेन्द्रियास्तथा ॥ ६ ॥
अपर्याप्ताः पर्याप्ताश्च सप्तैते द्विगुणाः क्रमात् । जीवस्थानानि संसारे ज्ञातव्यानि चतुर्दश ॥ ७ ॥ युग्मम् ॥
बादरासंज्ञिपञ्चाक्षविकलेन्द्रियजन्तुषु । अपर्याप्तेषु प्रथमे गुणस्थाने उभे उभे ॥ ८ ॥
आद्यद्वयं चतुर्थं चापर्याप्तेषु तु संज्ञिषु । सर्वाणि संज्ञिपर्याप्तेष्वन्येष्वाद्यगुणास्पदम् ॥ ९ ॥
सत्या मृषा च मिश्रा च वागसत्यामृषा तथा । चतुर्विधं मनोऽप्येवं काययोगाः क्रमादमी ॥ १० ॥
औदारिकश्च तन्मिश्रो वैक्रियस्तेन मिश्रितः । आहारकश्च तन्मिश्रः कार्मणः सप्तमस्तथा ॥ ११ ॥
कार्मणौदारिकमिश्रावपर्याप्तेषु षट्स्विह । एतौ वैक्रियमिश्रश्चापर्याप्ते संज्ञिनि त्रयः ॥ १२ ॥

अपर्याप्तेष्वपि प्राहुस्तनुपर्याप्तिशालिषु । केचिदौदारिकं योगं पर्याप्तत्वात्तनोरिह ॥ १३ ॥
पर्याप्तबादरेष्वौदारिको वैक्रियकद्वयम् । योगाः संज्ञिषु सर्वेऽपि पर्याप्तेषु शरीरिषु ॥ १४ ॥
सूक्ष्मेष्वौदारिकश्चैको विकलासंज्ञिजन्तुषु । भाषायुक्तः स एवैको योगः पर्याप्तिशालिषु ॥ १५ ॥
द्वादशाथोपयोगाः स्युर्मतिज्ञानादिपञ्चकम् । अज्ञे मतिश्रुताज्ञाने विभङ्गं ज्ञानमष्टमम् ॥ १६ ॥
चत्वार्यचक्षुरादीनि दर्शनान्यथ भावना । अचक्षुर्दृष्टिरज्ञानद्वयं च दशसु त्रयः ॥ १७ ॥
अष्टस्वाद्येष्वपर्याप्तचतुः ( पं ) खासंज्ञिनोरपि । पर्याप्तचतुः ( पं ) खासंज्ञिष्वेते चक्षुर्दृगन्विताः ॥ १८ ॥
विना केवलयुग्मेन ते चक्षुर्दर्शनेन च । अमनःपर्यवज्ञानाः पर्याप्तेतरसंज्ञिषु ॥ १९ ॥
पर्याप्तकेषु सर्वेऽपि संज्ञिपञ्चेन्द्रियेष्वमी । लेश्याः क्रमविशुद्धाः षट् षड्जवूग्राहकोपमाः ॥ २० ॥
ताः कृष्णनीलकापोततेजःपद्मसिताभिधाः । बादरेष्वपर्याप्तेषु चतस्रः प्रथमाः पुनः ॥ २१ ॥
अपर्याप्तपर्याप्तकसंज्ञिस्थानद्वयेऽपि षट् । जीवस्थानेषु शेषेषु तिस्रो लेश्यास्तदादिमाः ॥ २२ ॥
बन्धः सोदीरणोऽष्टानां सप्तानां वाथ कर्मणाम् । अष्टानां सोदया सत्ता त्रयोदशपदाशिषु ॥ २३ ॥
स्यात्सप्ताष्टषडेकानां बन्धः स्थाने चतुर्दशे । सत्ताष्टानां सप्तानां च चतुर्णामुदयोऽपि च ॥ २४ ॥
अत्र सप्ताष्टषट्पञ्चद्वयानां स्यादुदीरणा । इत्युक्त्वाङ्गिपदे वच्मि मार्गणास्थानकेष्वथ ॥ २५ ॥
गतेः खकाययोगानां द्वारं वेदकषाययोः । ज्ञानचारित्रदृष्टीनां लेश्यासम्यक्त्वयोस्तथा ॥ २६ ॥

भव्याभव्यकयोः संज्ञ्यसंज्ञिनोरुभयोरपि । आहारकान्ययोर्द्वारं द्विषष्टिः सर्वसंख्यया ॥ २७ ॥
चतुर्विधा गतिस्तत्र श्वभ्रतिर्यङ्नरामरात् । एकद्वित्रिचतुष्पञ्चसंख्यया खानि पञ्च च ॥ २८ ॥
पृथ्व्यप्तेजोऽनिलवनस्पतयः सत्रसाश्च षट् । योगा मनोवचःकाया वेदाः पुंस्त्रीनपुंसकाः ॥ २९ ॥
क्रोधो मानो माया लोभश्चत्वारोऽत्र कषायकाः । मतिश्रुतावधिमनःपर्यायाणि च केवलम् ॥ ३० ॥
पञ्च ज्ञानानि चाज्ञानत्रयं तत्र विभंगकम् । मतिश्रुताभिधे द्वे चाष्टौ साकाराण्यमूनि तु ॥ ३१ ॥
सामायिकं तथा छेदोपस्थापनमतः परम् । परिहारविशुद्ध्याख्यं तथा सूक्ष्मकषायकम् ॥ ३२ ॥
यथाख्यातं तथा देशविरत्यविरतिद्वयम् । चारित्रं सप्तधैवं स्याद्दृष्टिभेदाः पुरोदिताः ॥ ३३ ॥
ज्ञातव्यास्तेऽत्र चत्वारो निराकारा अमी पुनः । षड् लेश्याः कथिताः पूर्वं षट् सम्यक्त्वभिदस्त्वमूः ॥ ३४ ॥
वेदकं क्षायिकं चैव तथौपशमिकाभिधम् । मिश्रं सासादनं मिथ्या चान्ये भेदाः पुरोदिताः ॥ ३५ ॥
संज्ञियुग्मं सुरश्वभ्रगत्योः सार्धमसंज्ञिनाम् । अपर्याप्तेन मानव्यां तैरश्च्यां च चतुर्दश ॥ ३६ ॥
एकखे मुख्यचत्वारि द्वे द्वे त्रित्र्यभिधखेषु तु । पञ्चखेष्वन्त्यचत्वारि जीवस्थानानि संसृतौ ॥ ३७ ॥
चत्वारि स्थावरे काये पूर्वाण्यन्यानि च त्रसे । वाग्योगे पर्याप्तासंज्ञिविकलेन्द्रियसंज्ञिनः ॥ ३८ ॥
मनोयोगे च संज्ञ्येकमन्त्यचत्वारि नृस्त्रियोः । क्लीबवेदेऽङ्गयोगे च कषायाविरताख्ययोः ॥ ३९ ॥
द्वयोरज्ञानयोराद्यत्रिलेश्याहारकेषु च । मिथ्यात्वाचक्षुषोर्भव्याभव्ययोः सकलानि च ॥ ४० ॥

मतिश्रुतविभंगाख्यज्ञानेष्वप्यवधिद्वये । पद्मायां शुक्लेश्यायां सम्यक्त्वत्रयसंज्ञिनो[1] ॥ ४१ ॥
जीवस्थाने च पर्याप्तापर्याप्तसंज्ञिनोरुभे । त्रीणि षड् वान्त्यपर्याप्तापर्याप्तानि च चक्षुषि ॥ ४२ ॥
मिश्रदृक्पञ्चचारित्रकेवलज्ञानदृष्टिषु । देशव्रते मनोज्ञाने चैकं पर्याप्तसंज्ञिकम् ॥ ४३ ॥
बादरैकेन्द्रियादीनि स्युरपर्याप्तकानि षट् । पर्याप्तसंज्ञियुक्तानि सप्त सासादनाभिधे ॥ ४४ ॥
तेजोलेश्यापदे द्वेधा संज्ञ्यपर्याप्तबादरम् । द्वादशाद्यान्यसंज्ञ्याख्येऽनाहारकेऽष्टाविमानि च ॥ ४५ ॥
अपर्याप्तानि सप्तापि पर्याप्तसंज्ञि चाष्टमम् । गत्यादिमार्गणास्थानेष्वेव स्थानानि देहिनाम् ॥ ४६ ॥
गुणस्थानानि चत्वारि देवश्वभ्रगतिद्वये । पञ्चाद्यानि च तैरश्च्यां मानव्यां च चतुर्दश ॥ ४७ ॥
एकद्वित्र्यब्धिखेषु द्वे पञ्चाक्षेषु चतुर्दश । जलक्ष्मातरुषु द्वे द्वे एकं वाताग्निकाययोः ॥ ४८ ॥
चतुर्दश त्रसे काये योगस्थाने त्रयोदशम् । वेदेषु त्रिकषायेषु नव लोभे पुनर्दश ॥ ४९ ॥
नवाविरतिमुख्यानि मतिश्रुतावधिद्वये ( ज्ञा-द ) । प्रमत्तयतिमुख्यानि मनोज्ञानेऽत्र सप्त च ॥ ५० ॥
द्वे केवलयुगे त्रीणि द्वे चाज्ञानेषु मुख्यत । प्रमत्तादीनि चत्वारि छेदे सामायिकेऽपि च ॥ ५१ ॥
प्रमत्तादिद्वय[1] स्थाने परिहारविशुद्धिके । देशव्रते तथा सूक्ष्मसंपराये निजं निजम् ॥ ५२ ॥
यथाख्याते च चत्वार्यन्त्यानि चाद्यान्यसंयमे । द्वादश प्रथमानि स्युरचक्षुश्चक्षुषोर्दशो ॥ ५३ ॥

---

१ प्रमत्ताप्रमत्तौ ।

षष्ठाद्यासु त्रिलेश्यासु द्वयोः सप्त त्रयोदश । शुक्लायां किल सर्वाणि भव्ये चैकमभव्यके ॥ ५४ ॥
वेदके क्षायिके चैव तथौपशमिके क्रमात् । चत्वार्येकादशाष्टौ च चतुर्थादीनि तान्यपि ॥ ५५ ॥
सास्वादने च मिथ्यात्वे मिश्रे स्थानं निजं निजम् । द्वे असंज्ञिपदे चाद्ये चतुर्दश च संज्ञिनि ॥ ५६ ॥
आहारकेऽथ पूर्वाणि स्थानकानि त्रयोदश । तुर्यमाद्यान्त्ययुग्मे द्वे पञ्चानाहारके पुनः ॥ ५७ ॥
गुणस्थानानि गत्यादावुक्त्वा योगानथ ब्रुवे । सुरश्वभ्रगतौ योगा एकादश मता अमी ॥ ५८ ॥
अष्टौ वचोमनोयोगाः कार्मणो वैक्रियद्वयम् । सौदारिकद्व्यास्तिर्यग्गतावेते त्रयोदश ॥ ५९ ॥
नृगतौ काययोगे च त्रसे पञ्चेन्द्रिये नरे । क्लीबे वेदे कषायेषु मतौ श्रुतेऽवधिद्वये ॥ ६० ॥
अचक्षुर्दर्शने लेश्याषट्के भव्ये च संज्ञिनि । सम्यक्त्वत्रितये चाद्ये योगाः पञ्चदशाप्यमी ॥ ६१ ॥
वैक्रियौदारिकद्वन्द्वे कार्मणः पञ्च चैकखे । विकलाक्षेषु भाषान्त्या कार्मणौदारिकद्वयम् ॥ ६२ ॥
कार्मणौदारिकद्वन्द्वं काये स्थावरनामनि । वैक्रियद्वयसंयुक्तं वाते त्रयमिदं पुनः ॥ ६३ ॥
प्रथमान्तिमयोर्वाचोर्मनसोश्च युगं युगम् । कार्मणौदारिकद्वन्द्वं सप्तैते केवलद्वये ॥ ६४ ॥
अज्ञानत्रितयेऽभव्ये स्त्रीवेदे संयमोज्झिते । सास्वादनौपशमिकमिथ्यात्वेषु त्रयोदश ॥ ६५ ॥
आहारकद्वयं नात्र मनोवाग्योगयोरथ । सामायिके मनोज्ञाने छेदे चाक्षुपदर्शने ॥ ६६ ॥
कार्मणौदारिकमिश्रौ विनैतेषु त्रयोदश । नवामी सूक्ष्मचारित्रे परिहाराभिधेऽपि च ॥ ६७ ॥

चतुर्धा वाङ्मनश्चाप्यौदारिको नवमस्तथा । ते सौदारिकमिश्राः स्युर्यथाख्याते सकार्मणाः ॥ ६८ ॥
सवैक्रियद्वया देशे मिश्रे ते वैक्रियान्विताः । वैक्रियौदारिकद्वन्द्वे अन्त्या भाषा च कार्मणः ॥ ६९ ॥
असञ्ज्ञिनि षडेते स्युराहारकपदे पुनः । कार्मणेन विना सर्वे निराहारे तु कार्मणः ॥ ७० ॥
गतौ द्वादश मानव्यामुपयोगास्तथा नव । अन्यासु केवलद्वन्द्वमनोज्ञानविवर्जिताः ॥ ७१ ॥
स्थावरेषु तथैकद्वित्रिखेष्वज्ञानयुग्मकम् । अचक्षुर्दर्शनं चैते चतुष्खेषु सचक्षुषः ॥ ७२ ॥
पञ्चाक्षेषु त्रसे काये योगवेदेषु सञ्ज्ञिषु । भव्याहारकयोः शुक्ललेश्यायां द्वादशाप्यमी ॥ ७३ ॥
पञ्चलेश्याकषायेषु दृशोश्चक्षुरचक्षुषोः । हीनाः केवलयुग्मेन दश शेषा भवन्ति ते ॥ ७४ ॥
स्वयुगं केवलयुगे सम्यक्त्वे क्षायिके नव । अज्ञानानां त्रिकं नात्र सप्तैतेषु पदेष्वथ ॥ ७५ ॥
वेदके चौपशमिके ज्ञानेषु चरणेषु च । प्रथमेषु चतुर्ष्वेव तथैवावधिदर्शने ॥ ७६ ॥
प्रथमं ज्ञानचतुष्कं दर्शनानां त्रयं तथा । सप्तैते केवलद्वन्द्वं यथाख्याते पुनर्नव ॥ ७७ ॥
ज्ञानानां दर्शनानां च त्रिके द्वे देशसयमे । अज्ञानमिश्रिता मिश्रे उपयोगास्त एव षट् ॥ ७८ ॥
मनःपर्यायकैवल्यद्विकोना अयते नव । निराहारे मनोज्ञानचक्षुर्द्वयवर्जिता दश ॥ ७९ ॥
अज्ञानत्रयमिथ्यात्वाभव्यसास्वादनेषु तु । अज्ञानानां त्रयं द्वे च दर्शने पञ्च समता ॥ ८० ॥
अविज्ञगास्त एव स्युश्चत्वारोऽसञ्ज्ञिसंज्ञके । उपयोगा इति प्रोक्ता गत्यादिषु पदेष्विह ॥ ८१ ॥

कैश्चित्केवलयोगेषु नानात्वं त्विष्यते यथा । मनोवाक्तनुषु प्राणिगुणयोगोपयोगकाः ॥ ८२ ॥
कैश्चित्केवलयोगेषु नानात्वं त्विष्यते यथा । मनोवाक्तनुषु प्राणिगुणयोगोपयोगकाः ॥ ८३ ॥ युग्मम् ॥

द्वि[2]यर्क[13]यर्क[13]रवयो[12] वसु[8]द्व्यं[2]बुधि[4]सागराः[7] । युग[4]द्वि[2]शर[5]रामाः[3] स्युः प्रत्येकं क्रमतस्त्रिषु ॥ ८३ ॥ युग्मम् ॥

तिस्रो लेश्याः श्वभ्रगतिविकलाक्षाग्निवायुषु । चतस्र एकखासंज्ञिभूवृक्षाम्बुषु चादिमाः ॥ ८४ ॥

शुक्लैव स्याद्यथाख्याते ससूक्ष्मे केवलद्वये । स्वस्थानं षट्सु लेश्यासु परूप्यन्यपदेषु तु ॥ ८५ ॥

शुक्लैव स्याद्यथाख्याते ससूक्ष्मे केवलद्वये । स्वस्थानं षट्सु लेश्यासु परूप्यन्यपदेषु तु ॥ ८६ ॥

सामान्येनाथ गत्यादौ वच्म्यल्पबहुतामपि । नरा नैरयिका देवास्तिर्यंचो गतिषु क्रमात् ॥ ८६ ॥

स्तोका द्वयेऽसंख्यगुणास्ततोऽनन्तगुणाः परे । स्तोकाः पञ्चेन्द्रियास्तेभ्योऽधिका विकलखास्त्रयः ॥ ८७ ॥

तेभ्योऽनन्तगुणाः सन्ति जीवा एकेन्द्रिया भवे । त्रसाग्निक्षितिवार्वायुहरित्कायाः क्रमादथ ॥ ८८ ॥

स्तोका असंख्यगुणितास्ततः समधिकास्त्रयः । तेभ्योऽनन्तगुणाश्चाथ मनोवाक्काययोगिनः ॥ ८९ ॥

स्तोकाः संख्यातकानन्तगुणाश्चैते क्रमात्त्रयः । नराः स्तोकास्ततस्तेभ्यः स्युः संख्यातगुणाः स्त्रियः ॥ ९० ॥

ताभ्योऽनन्तगुणाः क्लीबाः स्तोका मानयुतास्तथा । स्युर्विशेषाधिकाः क्रोधमायालोभयुताः क्रमात् ॥ ९१ ॥

मनःपर्यविणः स्तोका अवधिज्ञानिनस्ततः । असंख्यातगुणास्तेभ्यो मतिश्रुतविदोऽधिकाः ॥ ९२ ॥

मतिश्रुतविदोऽन्योऽन्यं तुल्या एभ्यो विभंगिनः । असंख्येयास्ततोऽनन्तगुणाः केवलिनः पुनः ॥ ९३ ॥

मतिश्रुताविदस्तुल्याः प्राग्भ्योऽनन्तगुणाः पुनः । स्तोकाः सूक्ष्मकषायाः स्युस्तेभ्यः संख्यातका अमी ॥ ९४ ॥

परिहारयथाख्यातच्छेदसामायिकव्रताः । देशव्रतास्ततोऽसंख्या अनन्ता अयुताः पुनः ॥ ९५ ॥

स्तोका अवधिदृग्जीवा असंख्येयास्ततः पुनः । चक्षुर्दर्शनिनोऽनन्तगुणाः केवलदृष्टयः ॥ ९६ ॥
अचक्षुर्दृष्टयस्तेभ्यः सन्त्यनन्तगुणाः क्रमात् । शुक्ललेश्यायुताः स्तोका असंख्यातगुणास्ततः ॥ ९७ ॥
पद्मलेश्यायुतास्तेभ्यस्तेजोलेश्यायुता अपि । तेभ्यः कापोतिनोऽनन्तगुणाः शेषा विशेषिणः ॥ ९८ ॥
सासादनौपशमिकमिश्रवेदकसंयुताः । क्रमात्क्षायिकसम्यक्त्वास्तथा मिथ्यादृशोऽपि च ॥ ९९ ॥
स्तोका द्विः संख्यातगुणा असंख्यातगुणास्ततः । तेभ्योऽपि द्वितयेऽनन्तगुणाः सन्ति पृथक् पृथक् ॥ १०० ॥
जघन्ययुक्तानन्तकतुल्याः स्तोका अभव्यकाः । तेभ्योऽनन्तगुणा भव्या योग्या निर्वाणशर्मणः ॥ १०१ ॥
स्तोकाः स्युः संज्ञिनोऽनन्तगुणास्तेभ्योऽप्यसंज्ञिनः । निराहारा इह स्तोका असंख्यातगुणाः परे ॥ १०२ ॥
उक्त्वैवमल्पबहुता मार्गणास्थानकेष्विह । गुणस्थानेषु जीवादिस्थानकान्यथ भावये ॥ १०३ ॥
सर्वेऽपि सन्ति मिथ्यात्वे सप्त सासादने त्वमी । पर्याप्तसंज्ञ्यपर्याप्ताः षट् चतुर्थे ( च तुर्ये ) द्विसंज्ञिनौ ॥ १०४ ॥
संज्ञी शेषेषु पर्याप्तो वच्मि योगान् गुणेष्वथ । मिथ्यात्वाविरतिसम्यग्दृष्टिसासादनेष्विह ॥ १०५ ॥
आहारकद्वयेनोनास्त्रिषु योगास्त्रयोदश । मिश्रे वाक्चित्तयोरष्टौ द्वौ चौदारिकवैक्रियौ ॥ १०६ ॥
ते सवैक्रियमिश्राः स्युरेकादश गृहिव्रते । त्रयोदश प्रमत्ते ते साहारकद्वयाः पुनः ॥ १०७ ॥
अप्रमत्ते वाक्चित्तौदारिकाहारकवैक्रियाः । सौदारिकमनोवाचो नवापूर्वादिपञ्चके ॥ १०८ ॥
आद्यान्ते मनसी वाचौ कार्मणौदारिकद्वये । सप्तैते योगिनो योगा अयोगी योगवर्जितः ॥ १०९ ॥

पूर्वोदिताः पनर्जेयाः कषायाः पञ्चविंशतिः । पञ्चदश त एवात्र योगा ये पूर्वज्ञापिताः ॥ ११० ॥

अथाज्ञानत्रयं चक्षुरचक्षुर्दर्शनद्वयम् । सासादने च मिथ्यात्वे स्युः पञ्चैवोपयोगकाः ॥ १११ ॥

ज्ञानानां दर्शनानां च त्रिके पञ्चमतुर्ययोः । उपयोगाः पुनर्मिश्रे षमेवाज्ञानमिश्रिताः ॥ ११२ ॥

मनोज्ञानयुताः सप्त प्रमत्तादिषु सप्तसु । सयोगायोगयोर्द्वे तु केवलज्ञानदर्शने ॥ ११३ ॥

ज्ञानं सासादने जावे स च नैकेन्द्रियेष्विह । स्यादौदारिकमिश्रोऽपि वैक्रियाहारके पुनः ॥ ११४ ॥

सूत्राधिगतमप्येतन्न कार्मग्रन्थिकैर्मतम् । अधिक्रियेत नात्रापि तेन तन्मतसंश्रयात् ॥ ११५ ॥

लेश्यास्तिस्रः प्रमत्तान्ता अप्रमत्तान्तके जन्ने । शुक्ला यावत्सयोगाख्यं निर्लेश्यं स्यादयोगिकम् ॥ ११६ ॥

अथ बन्धस्य चत्वारो हेतवः प्रथमा अमी । मिथ्यात्वं चाप्यविरतिः कषाया योगका अपि ॥ ११७ ॥

पञ्च द्वादश पञ्चादिविंशतिः पञ्चयुग्दश । सप्तपञ्चाशदित्येषां क्रमाद्भेदाः स्युरुत्तराः ॥ ११८ ॥

आभिग्रहिकमनाभिग्रहिकाभिनिवेशिके । सांशयिकमनाभोगि मिथ्यात्वमिति पञ्चधा ॥ ११९ ॥

दीक्षितानां किलाद्यं स्यादन्येषां च द्वितीयकम् । गोष्ठामाहिलमुख्यानां मिथ्यात्वं च तृतीयकम् ॥ १२० ॥

जिनेन्द्रोक्तेषु तत्त्वेषु या शंका तच्चतुर्थकम् । यच्चैकेन्द्रियमुख्यानां ख्यातं तदनाभोगिकम् ॥ १२१ ॥

मनसः पञ्चखानां चायन्त्रणं मारणं तथा । षण्णां जीवनिकायानां भेदा अविरताव ( तेर ) मी ॥ १२२ ॥

हेतवः सप्तपञ्चाशत् सामान्येन भवन्त्यमी । आहारकद्वयेनोनाः पञ्चपञ्चाशदादिमे ॥ १२३ ॥
सासादने च पञ्चाशद्विना मिथ्यात्वपञ्चकम् । मरणाभावतो मिश्रे त्रिचत्वारिंशदित्यमी ॥ १२४ ॥
वैक्रियौदारिकमिश्रकार्मणानन्तबन्धिन । पञ्चाशतो विनाकृत्य शेषाः सर्वेऽपि सन्ति ते ॥ १२५ ॥
सह पूर्वैस्त्रिभिर्योगै सद्भावान्मरणस्य तु । चत्वारिंशद्युताः षड्भिर्हेतवस्तुर्यसंश्रये ॥ १२६ ॥
विनौदारिकमिश्राख्यकार्मणत्रसमारणैः । अप्रत्याख्यानकैश्चापि सप्तोनास्ते तु पञ्चमे ॥ १२७ ॥
प्रत्याख्यानास्तथैवैकादशधा विरतिं विना । आहारकद्वयाधिक्यात् षष्ठे षड्विंशतिः पुनः ॥ १२८ ॥
वैक्रियाहारकमिश्रोना द्विर्द्वादश च सप्तमे । वैक्रियाहारकोनास्ते स्युर्द्वाविंशतिरष्टमे ॥ १२९ ॥
विना हास्यादिषट्केन नवमे ते तु षोडश । विना वेदकषायाणां त्रिकान्त्या दशमे दश ॥ १३० ॥
एकादशे विना लोभं गुणस्थाने नवैव ते । द्वादशेऽपि हि तावन्त एवैते बन्धहेतवः ॥ १३१ ॥
मनसी वचसी चाद्यचतुर्थे द्वे च कार्मण । औदारिकद्वय चेति सयोगे सप्त हेतव ॥ १३२ ॥
निर्बन्धहेतुकं ज्ञेय गुणस्थानं चतुर्दशम् । अष्टौ कर्माणि बध्यन्ते हेतुभ्यस्तत्तथोदितम् ॥ १३३ ॥
सप्ताष्टावप्रमत्तान्त यावद्बध्नन्ति जन्तवः । अपूर्वकरणे मिश्रे बादराख्येऽपि सप्त तु ॥ १३४ ॥
षट् सूक्ष्मेऽनायुर्मोहानि वेद्यमेक तदग्रतः । नैवायोगिपदे बन्धः कथयाम्युदयाद्यथ ॥ १३५ ॥
सत्तायामुदये चाष्टौ यावत्सूक्ष्मकषायकम् । अष्टौ सप्तोपशान्ताख्ये क्षीणे सप्तान्त्य ( न्त्य ) योर्युगाः ॥ १३६ ॥

उदीरयन्ति सप्ताष्टावाप्रमत्तगुणास्पदम् । मिश्रेऽष्टावप्रमत्तानिवृत्त्यपूर्वेषु षट् पुनः ॥ १३७ ॥
वेदनीयायुषी नैषु सूक्ष्मे षट् पञ्च वा पुनः । उपशान्तेऽथ पञ्चैव क्षीणे पञ्चाथवा द्वयम् ॥ १३८ ॥
सयोगे नामगोत्रे द्वे अयोगे नैव किञ्चन । बन्धादय इति प्रोक्ता वच्म्यथाल्पबहुतामथ ॥ १३९ ॥

उपशान्तजिनाः स्तोका क्षीणमोहा जिनास्ततः । संख्यातगुणिताः सूक्ष्मानिवृत्तिस्थनिवृत्तिगाः ॥ १४० ॥
सविशेषास्त्रयश्चैते पुनस्तुल्याः परस्परम् । योग्यप्रमत्तप्रमत्ताः संख्यातगुणिताः क्रमात् ॥ १४१ ॥
देशे सास्वादने मिश्राविरत्योर्जन्तवः स्थिताः । असंख्येयगुणा एते चत्वारोऽपि यथोत्तरम् ॥ १४२ ॥
अयोगिनस्ततोऽनन्तगुणा मिथ्यादृशोऽपि च । अथ द्वारक्रमायाता ये भावा विवृणोमि तान् ॥ १४३ ॥

द्वेधौपशमिको भावो नवभिः क्षायिकस्तथा । अष्टादशविधो भावः क्षायोपशमिकः पुनः ॥ १४४ ॥
एकविंशतिभेदोऽत्र भाव औदयिकस्तथा । स्यात्पारिणामिकस्त्रेधा षष्ठोऽथो सान्निपातिकः ॥ १४५ ॥
आद्ये सम्यक्त्वचारित्रे भवेतां च द्वितीयके । ज्ञानदर्शनचारित्रत्रितयं प्रवरं भवेत् ॥ १४६ ॥
लब्धयः पञ्च दानाद्याः सम्यक्त्वं क्षायिकं नव । तृतीये सन्ति चत्वारि ज्ञानान्यज्ञानकत्रयम् ॥ १४७ ॥
दर्शनानां त्रयं पञ्च दानाद्या लब्धयस्तथा । सम्यक्त्वं चरणं देशव्रतमष्टादशेति च ॥ १४८ ॥
षतस्रो गतयस्तुर्ये चत्वारश्च कषायकाः । लिंगत्रयं च लेश्याः षडज्ञानासिद्धते अपि ॥ १४९ ॥

मिथ्यात्वासयमौ चेति भेदा स्युरेकविंशति । अभव्यत्व च भव्यत्वं जीवत्वं त्रीणि पञ्चमे ॥ १५० ॥
पञ्चानामपि भावाना त्रिपञ्चाशद्भवन्त्यमी । सान्निपातिकभावस्य भेदा सम्भविनो यथा ॥ १५१ ॥
पारिणामिकभावस्य क्षायोपशमिकस्य च । योगेनौदयिकस्यापि चत्वारो गतिभेदत ॥ १५२ ॥
एभि क्षायिकसंयुक्तैश्चत्वार सान्निपातिका । चत्वार क्षायिकाभावे स्यु सौपशमिकैरपि ॥ १५३ ॥
पञ्चसयोग एकैक स्थितस्योपशमाध्वनि । सिद्धस्य द्विकसयोग केवली त्रिकयोगभाक् ॥ १५४ ॥
भेदा संभविन पञ्चदशेत्येभ्योऽधपद्धिद । स्युरसम्भविन शेषा विंशति षड् द्विका समे ॥ १५५ ॥
द्विकयोगोऽस्ति सिद्धाना भनिकेवलिनामुभौ । त्रिकयोगो चतुर्योगश्च गतिचतुष्टये ॥ १५६ ॥
पञ्चयोगो मनुष्येषु शेषा सख्याप्रपूरका । मोहस्यैवास्त्युपशमो नान्येषामिह कर्मणाम् ॥ १५७ ॥
क्षयोपशम एवाथ चतुर्णां घातिकर्मणाम् । क्षयोदयपरीणामा अष्टानामपि कर्मणाम् ॥ १५८ ॥
चतुर्ष्वविरताद्येषु चत्वार स्युस्त्रयोऽथवा । चत्वार पञ्च वा भावा अनिवृत्त्यादिषु त्रिषु ॥ १५९ ॥
क्षीणेऽपूर्वे च चत्वारस्त्रय शेषेषु पञ्चसु । इत्येकजीवमाश्रित्य सर्वान् सर्वेऽपि ते पुन ॥ १६० ॥
सर्वे धर्मास्तिकायाद्या अजीवा पारिणामिके । भावे जगति वर्तन्ते स्कधा औदयिकेऽपि च ॥ १६१ ॥

सख्यातमेकमेव स्यादसख्यात त्रिधा पुन । परीत्तयुक्तस्वपदपूर्वं त्रेधाप्यनन्तकम् ॥ १६२ ॥
जघन्यमध्यमोत्कृष्टान्येतानि निखिलान्यपि । सप्त त्रिगुणितान्येव स्यु पदान्येकविंशतिः ॥ १६३ ॥

संख्यात ( तं तु ) जघन्यं स्यात् द्वावेवातः परं पुनः । मध्यमं बहुधा यावदुत्कृष्टं तद्यथोच्यते ॥ १६४ ॥
जंबूद्वीपसमा वृत्ताः सहस्रं योजनान्यधः । भित्त्वा रत्नप्रभाकांडं वज्रकांडान्तसंस्पृशः ॥ १६५ ॥
पल्याश्चत्वार ऊर्ध्वं तु जगतीवेदिकान्विताः । सशिखाः सर्षपैः पूर्णा यथाविध्यभिधा इमाः ॥ १६६ ॥
अनवस्थितनामाद्यः शलाकाख्यो द्वितीयकः । ततः प्रतिमहापूर्वौ शलाकाख्यौ क्रमादुभौ ॥ १६७ ॥
ततः कल्पनया कश्चिद्देवस्तं पल्यमादिमम् । वामेनोत्पाट्य हस्तेन सशिखं सर्षपैर्भृतम् ॥ १६८ ॥
एकैकं सर्षपं द्वीपे समुद्रे च क्षिपेत्क्रमात् । तावत्सर्वेऽपि ते यावन्निष्ठिताः सर्षपास्ततः ॥ १६९ ॥
द्वीपे वा सागरे वान्त्यं सर्षपं यत्र मुक्तवान् । पूर्ववत्तं सुरो भृत्वा क्षिपत्येकैकमग्रतः ॥ १७० ॥
क्षिपत्येकं शलाकाख्ये सर्षपं तत्र निष्ठिते । तदन्तकारिणं भृत्वा पूर्ववच्च क्षिपेत्पुरः ॥ १७१ ॥
द्वितीयं निष्ठिते मुञ्चेच्छलाकाख्ये स सर्षपम् । तृतीयं चैवमेवेति कृत्वा पूरणरेचने ॥ १७२ ॥
अनवस्थितपल्यानां शलाकासर्षपैस्ततः । पौनःपुन्येन निक्षिप्तैः शलाकाख्यं स पूरयेत् ॥ १७३ ॥
क्रमायातानवस्थाख्ये शलाकाख्ये च संभृते । तमे ( मि ) वैष शलाकाख्यमुत्पाट्य पुरतः क्षिपेत् ॥ १७४ ॥
पूर्ववन्निष्ठिते तस्मिन् क्षिपत्येकं स सर्षपम् । पल्ये प्रतिशलाकाख्येऽनवस्थितमनूद्धरेत् ॥ १७५ ॥
शलाकान्तकरात्तस्मात्क्षिपत्यस्य कणान् पुरः । ततोऽनवस्थिते क्षीणे शलाकाख्ये कणं क्षिपेत् ॥ १७६ ॥
अनवस्थितपल्यानामन्योऽन्येषां भृतोज्झनात् । शलाकाख्यं भरत्येष शलाकासर्षपैः पुनः ॥ १७७ ॥

शलाकाख्ये भृते तस्मिंस्तमेवोत्पाट्य सोऽमरः । भृतानवस्थिताख्याग्रे क्षिपत्येकैकसर्षपम् ॥ १७८ ॥
पल्ये प्रतिशलाकाख्ये तदन्ते सर्षपं क्षिपेत् । अनवस्थितपल्यस्य ततो मुञ्चति सर्षपान् ॥ १७९ ॥
इत्यन्योऽन्यशलाकाभिर्भृतयोः पल्ययोर्द्वयोः । क्रमागतानवस्थाख्ये पल्ये पूर्णेऽपि सर्षपैः ॥ १८० ॥
प्राक् प्रतिशलाकापल्यं क्षिप्त्वा चाग्रेऽनवस्थितम् । तुर्ये महाशलाकाख्ये क्षिपत्येकं स सर्षपम् ॥ १८१ ॥ युग्मम् ॥
ततः शलाकापल्यस्य क्षिप्त्वाग्रे सर्षपानसौ । पल्ये प्रतिशलाकाख्ये सर्षपं चैकमस्यति ॥ १८२ ॥
ततोऽनवस्थिताख्यं तं पल्यमुत्पाट्य सोऽमरः । शलाकान्तकरान्मुञ्चत्येकैकं सर्षपं पुरः ॥ १८३ ॥
पूर्णे रेवमनवस्थैश्चरत्याद्यैर्द्वितीयकम् । द्वितीयैश्च तृतीयं स तृतीयैस्तुर्यपल्यकम् ॥ १८४ ॥
सशिखेषु भृतेष्वेवं पल्यकेषु चतुर्ष्वपि । चतुष्पल्यकणान् द्वीपोदधिमुक्तकणानपि ॥ १८५ ॥
मेलयित्वा महाराशिं करोत्येकत्र सर्षपैः । रूपोनः सैष संख्यातमुत्कृष्टं कथ्यतेऽत्र तत् ॥ १८६ ॥
मध्ये मध्यं च संख्यातं त्रिधैवं ज्येष्ठमेव तत् । परीत्तासंख्यातं ज्ञेयं जघन्यं रूपसंयुतम् ॥ १८७ ॥
अभ्यासेऽस्य पुना राशेर्युक्तासंख्यातकं लघु । एतावन्तः स्युरेकस्यामावल्यां समया इह ॥ १८८ ॥
वान्या त्रिस्त्रिश्चतुस्त्रिश्च पञ्चत्रिर्गुणिते क्रमात् । अन्योऽन्याभ्यासराशौ स्युः पदान्येतान्यनुक्रमात् ॥ १८९ ॥
असंख्यातं सप्तमकमाद्यं तुर्यं च सप्तमम् । त्रीण्यनन्तानि रूपेण युतानि मध्यमानि च ॥ १९० ॥
रूपोनानि च पाश्चात्योत्कृष्टानीत्यागमोदितम् । केऽप्याहुः सप्तमं तुर्यासंख्यं वर्गितमेकशः ॥ १९१ ॥

रूपयुक्तं च तन्मध्यं रूपोनं ज्येष्ठमादिमम् । सर्वत्रेति दश क्षेपस्तत्र त्रिवर्गिते पुनः ॥ १९२ ॥
लोकाकाशस्य धर्मस्याधर्मस्यैकस्य देहिनः । प्रदेशाश्च निगोदानां कायाः प्रत्येकजन्तवः ॥ १९३ ॥
स्थितिबन्धाध्यवसाया अनुभागास्तथैव च । योगच्छेदप्रतीभागा द्विकालसमया अपि ॥ १९४ ॥
एते दशाप्यसंख्यातास्तस्मिंस्त्रिवर्गिते पुनः । परीत्तानन्तकं ह्रस्वं ततोऽभ्यासे कृते पुनः ॥ १९५ ॥
युक्तानन्तकमाख्यातं जघन्यं जिनशासने । अभव्यासुमतामेतत्प्रमाणं परिकीर्तितम् ॥ १९६ ॥
वर्गे तस्य जघन्यं स्यादनन्तानन्तकं पुनः । त्रिवर्गितेऽप्यभवंति प्रक्षेपाः षडमी इह ॥ १९७ ॥
सिद्धा निगोदजीवाश्च वनस्पत्यङ्गिनोऽखिलाः । कालश्च पुद्गला लोकालोकाकाशप्रदेशकाः ॥ १९८ ॥
प्रक्षिप्तेष्वेष्वनन्तेषु पुनस्त्रिवर्गिते सति । केवलज्ञानदर्शनपर्यायक्षेपतः पुनः ॥ १९९ ॥
अनन्तानन्तमुत्कृष्टं व्यवहारे तु मध्यमम् । वर्गितसंवर्गितं केऽप्यभ्यासेन समं विदुः ॥ २०० ॥
इत्थं प्राकृतकर्मशास्त्रविवृतेरालोक्य सर्वात्मना सर्वार्थाननु सूत्रितं प्रकरणं सूक्ष्मार्थसंग्राहकम् ।
यत्किञ्चिन्न मयाऽतिमन्दमतिना प्रोक्तं च हीनाधिकं तच्छोध्यं सकलं वरैः श्रुतधरैः कृत्वा प्रसादं मयि ॥ २०१ ॥
इत्यागमिकाचार्यश्रीजयतिलकरचितं निजस्मृत्यै । सूक्ष्मार्थसंग्रहाख्यं प्रकरणमेतद्द्वितीयं च ॥ २०२ ॥

॥ इति सूक्ष्मार्थसंग्रहं नाम द्वितीयं प्रकरणम् ॥

## ॥ प्रकृतिस्वरूपसंरूपण प्रकरणम् ॥ ३ ॥

देवनन्द सकल्याण जिनेन्द्र रत्नसप्रभम् । चारित्रप्रभमानौमि देवं चागमिकं गुरुम् ॥ १ ॥
शतकं लघु सस्कृत्य देवेन्द्रगुरुगुम्फितम् । प्रकृतीना प्रवक्ष्यामि स्वरूपं सुखबुद्धये ॥ २ ॥
ध्रुवबन्धोदयाध्रुवसत्ताकाघातिनी॰ शुभा । अपरावर्तमानाश्च परूप्येताश्च सेतरा ॥ ३ ॥
चतुर्विधविपाकाश्च चतुर्बन्धविधा अपि । प्रकृती॰ स्वामिसयुक्ता द्वाराणा वच्मि विशतिम् ॥ ४ ॥ युग्मम् ॥
निघ्न वर्णचतुष्कं भीकुत्सातैजसकार्मणम् । निर्माणागुरुलघुनी मिथ्यात्वमुपघातकम् ॥ ५ ॥
कषायाऽऽवृत्तयैस्यूनपञ्चाशद्ध्रुवबन्धका । त्रिसप्ततिप्रकृतयः शेषा अध्रुवबन्धका ॥ ६ ॥
अनाद्यनन्तकोऽनादिसान्तक॰ साद्यनन्तक । सादिसान्तश्च चत्वार प्रकृतीना तु भङ्गका॰ ॥ ७ ॥
ध्रुवोदयासु मुख्यौ द्वौ ध्रुवबन्धासु सान्तिमौ । मिथ्यात्वे ते त्रयस्तुर्यो द्वेधाप्यध्रुवजातिषु ॥ ८ ॥
अगुरुलघुं निर्माणं स्थिरास्थिरशुभाशुभम् । ज्ञानान्तरायमिथ्यात्व दर्शनानि च कार्मणम् ॥ ९ ॥
वर्णादि तैजस सप्तविंशति स्युर्ध्रुवोदयाः । पञ्चनवतिरन्यास्तु ज्ञातव्या अध्रुवोदया॰ ॥ १० ॥
वैक्रियैकादशायूंषि तथाहारकसप्तकम् । मिश्रसम्यक्त्वतीर्थोच्च मनुष्यद्वयकं तथा ॥ ११ ॥
अष्टाविंशतिरध्रुवसत्ताका॰ सर्वसख्यया । ध्रुवसत्ता परा॰ सर्वा॰ शतं त्रिशत्समन्वितम् ॥ १२ ॥

नियमेनास्ति मिथ्यात्वं त्रिष्वाद्येषु गुणेषु तु । विकल्पेनायताद्येषु गुणेष्वष्टसु वर्तते ॥ १३ ॥
सास्वादने हि सम्यक्त्वं सत्स्याद्दशसु वादितः । ध्रुवं मिश्रं द्वयोः सत्स्यान्मिश्रसास्वादनाख्ययोः ॥ १४ ॥
वा मिथ्यात्वादिनवसु तथानन्तानुबन्धिनः । आद्यद्वये ध्रुवं भाज्या मिश्रादिनवके पुनः ॥ १५ ॥
वा समाहारकी सर्वेष्वद्वित्रिषु तु वा जिनम् । द्वयोः सतोर्न मिथ्यादृक् स्यात्तीर्थेऽन्तर्मुहूर्तकम् ॥ १६ ॥
मिथ्यात्वं पञ्च निद्राश्च द्वे केवलद्वयावृती । द्वादशाद्याः कषायाश्च विंशतिः सर्वघातकाः ॥ १७ ॥
विघ्नं ज्ञानानि चत्वारि नोकषायास्त्रिदर्शनी । संज्वलनैः समं पञ्चविंशतिर्देशघातकाः ॥ १८ ॥
शेषाः प्रकृतयः पञ्चसप्ततिः स्युरघातकाः । नरामरत्रये सातमङ्गोपाङ्गत्रयं वपुः ॥ १९ ॥
त्रसादिदशकं वज्रर्षभं चतुरस्रकम् । उच्चैर्गोत्रं तिर्यगायुः प्रत्येकाद्युपघातकाः ॥ २० ॥
शुभाः खगतिर्वर्णाद्या जातिः पञ्चेन्द्रियाभिधा । शुभाख्या द्विचत्वारिंशद्व्यशीतिरितराः पराः ॥ २१ ॥
शुभाशुभत्वरूपेण वर्णाद्या उभयोरपि । नव ध्रुवबन्धा नाम्नो ज्ञानानि दर्शनानि च ॥ २२ ॥
पराघातं भयं कुत्सा मिथ्यात्वोच्छ्वासतीर्थकृत् । विघ्नानि त्रिंशदेकोनाऽपरावर्तिन्य एतकाः ॥ २३ ॥
अपराः परिवर्तिन्यः सैका नवतिरङ्कतः । क्षेत्रविपाकानुपूर्वी स्वायुर्भवविपाककम् ॥ २४ ॥
नामध्रुवोदयास्त्र्यङ्गोपाङ्गसंस्थानसंहति । प्रत्येकं सातपद्वन्द्वं पराघातोपघातके ॥ २५ ॥

साधारणं च षट्त्रिंशत् स्यु पुद्गलविपाकिकाः । द्व्यूनाशीतिः पुनर्जीवविपाका कथिताः पराः ॥ २६ ॥
बन्धश्चतुर्धा प्रकृतिस्थितिरसप्रदेशजित् । मूलानामुत्तराणां च प्रकृतीनां तु कर्मणाम् ॥ २७ ॥
सप्ताष्टषडेकबन्धा मूलास्तासु त्रयस्त्रय. । भूयस्कारा अल्पतराश्चत्वार. स्युरवस्थिता ॥ २८ ॥
एकेनाप्यधिको भूयानेकाद्यूनोऽल्पतरस्तर । तन्मात्रोऽवस्थितोऽवाच्य प्रथमे समये पुन ॥ २९ ॥
नवषट्चतसृणां स्युस्त्रयो बन्धास्तु दर्शने । भूयस्कारादयो द्वौ द्वौ त्रयो द्वौ च क्रमादिह ॥ ३० ॥
द्वाविंशतेस्तथैकविंशतेस्त्यूनविंशते । यद्वैप्रहोद्वेदांश्चिह्नेकानां मोहनामनि ॥ ३१ ॥
नवाष्ट दश च द्वौ च भूयस्कारादयस्त्विह । त्रिपञ्चषड्सप्ताष्टनवेदशान्यधिकविंशते ॥ ३२ ॥
एकत्रिंशत एकस्या अष्टौ बन्धास्तु नाम्न्यमी । षट् सप्ताष्टौ त्रयो भूयस्काराद्यास्त्वेकमन्यत ॥ ३३ ॥
नेर सत्रयतो भूयस्कारस्त्वल्पतरावुभौ । वेदनीयेऽप्यवक्तव्यो द्वावेकश्चान्यतस्तत. ॥ ३४ ॥ •

इति प्रकृतिबन्ध ।

सप्ततिर्मोहनीयस्य विंशतिर्नामगोत्रयोः । चतुर्णां त्रिंशदन्येषामब्धीनां कोटिकोटय ॥ ३५ ॥
अतराणां त्रयस्त्रिंशत् सुरनारकिकायुषो । तिर्यङ्नरायुषोर्ज्येष्ठस्थिति पल्योपमत्रयी ॥ ३६ ॥
अकषायस्थितिं मुक्त्वा जघन्या वेदनीयके । स्थितिर्द्वादश मुहूर्तान्यष्टाष्ट नामगोत्रयोः ॥ ३७ ॥
प्रकृतीनां तु शेषाणां जघन्यान्तर्मुहूर्तकम् । अथावरणे( ५-९ )विघ्नानां त्रिंशत्सातेतरस्य च ॥ ३८ ॥

अष्टादशैव सूक्ष्मादिविकलाङ्गत्रिकद्वये । दशाद्याकृतिसंहत्योर्द्विवृद्धिश्च द्वयोर्द्वयोः ॥ ३९ ॥
मधुरश्वेतसुरभिलघूष्णयुग्मके दश । पीताम्लादिषु प्रत्येकं सार्धे द्वे त्वधिकाधिके ॥ ४० ॥
चत्वारिंशत्कषायेषु पुंवेदे रतिहासयोः । सुरद्विके स्थिरषट्के सुखगत्युच्चयोर्दश ॥ ४१ ॥
मिथ्यात्वे सप्ततिः पञ्चदश स्त्रीसातनृद्वये । कोटीकोट्यस्तथासु द्विचत्वारिंशति विंशतिः ॥ ४२ ॥
नरकौदारिकतिर्यग्वैक्रिययुग्मनीचकैः । भीशोकारतिकुत्सासु गुरुकर्कशरूक्षके ॥ ४३ ॥
दुर्गन्धेऽस्थिरषट्के च चतुष्के च त्रसादिके । स्थावरे कुनभोगत्याद्यान्त्यजातिनपुंसके ॥ ४४* ॥
निर्माणोपघातागुरुलघुतैजसकार्मणे । शीतस्पर्शे पराघातोच्छ्वासोद्योतातपेष्वपि ॥ ४५ ॥
यत्र यावत्कोटाकोट्यस्तावद्वर्षशतानि तु । तत्राबाधा विना तां तु निषेककाल उच्यते ॥ ४६ ॥
अन्तःकोटाकोटि ज्येष्ठा तीर्थाहारकयुग्मयोः । अन्तर्मुहूर्तं चाबाधा हीना संख्यगुणैर्लघुः ॥ ४७ ॥
बध्नन्ति विकलैकाक्षाः पूर्वकोटीं परां स्थितिम् । पल्यासंख्यांशतुल्यानि चत्वार्यायूंष्यमानसाः ॥ ४८ ॥
अबाधा खलु षण्मासान्निरुपक्रमजीविनाम् । अन्येषां तु भवत्र्यंशं जघन्यान्तर्मुहूर्तिकी ॥ ४९ ॥
जघन्यस्थितिबन्धोऽथ लोभे संज्वलनाभिधे । दर्शनज्ञानविघ्नेषु भवेदान्तर्मुहूर्तिकः ॥ ५० ॥
साते द्वादश मुहूर्तान्यष्टौ च यशउच्चयोः । द्व्येकार्धकान् क्रमान्मासांस्त्रिषु संज्वलनेषु तु ॥ ५१ ॥

अष्टौ वर्षाणि पुवेदे शेषासु स्यात्तदेव यत् । विजक्काया मिथ्यात्वोरुस्थित्या लब्धं गुरुस्थिते ॥ ५२ ॥
एकाक्षेप्ययमुत्कृष्ट' पल्यासख्याशहीनक' । लघुर्बन्ध पुनस्तेषु विकलाद्यामन स्वयम् ॥ ५३ ॥
पञ्चविंशतिपञ्चाशच्छतसहस्रकैर्हत । क्रमाज्ज्येष्ठ कनिष्ठस्तु पल्यसख्याशहानित' ॥ ५४ ॥
दश वर्षसहस्राणि सुरनारकिआ ( का ) युषो' । शेषायुषोर्त्वेव क्षुल्ल' स्थितिबन्धो लघु' स्मृत' ॥ ५५ ॥
सर्वासामप्यबाधाया बन्धेऽल्पेऽन्तर्मुहूर्तकम् । ज्येष्ठेऽप्यायु.स्थितेर्बन्धे कनिष्ठेऽपीयमेव च ॥ ५६ ॥
केचिदाहु सुपर्वायुस्तुल्य तीर्थं जघन्यत । अन्तर्मुहूर्तमानाल्पस्थिति चाहारकद्वयम् ॥ ५७ ॥
एकानापानके सप्तदश क्षुल्लभवग्रहा' । साधिकास्ते मुहूर्ते तूच्छ्वासनि श्वासका इति ॥ ५८ ॥
सप्तत्रिंशच्छतानि त्रिसप्तत्या सहितानि ( ३७७३ ) च । भवन्त्येकमुहूर्ते त्वेतावन्त' क्षुल्लका भवा' ॥ ५९ ॥
पञ्चषष्टि सहस्राणि सार्धानि त्रिशतोऽपि षट् ६५५३६ । षड्युक्ते द्वे शते सार्धे २५६ आवल्य क्षुल्लके भवे ॥ ६० ॥
अविरतसम्यग्दृष्टिस्तीर्थं साधुः प्रमत्तक । आहारकद्वयं बध्नात्यायुश्चामरजन्मन ॥ ६१ ॥
मिथ्यादृक् शेषप्रकृतिस्थितीर्ज्येष्ठा इहान्वति । तिर्यङ्नरास्तया सूक्ष्मविकलाँश्चायुंषा त्रयम् ॥ ६२ ॥
बध्नन्ति देवनरकवैक्रियाणा द्वय च ते । ईशानान्ता सुरा ज्येष्ठानेकाक्षस्थावरातपान् ॥ ६३ ॥
तिर्यगौदारिकद्वन्द्वे सेवार्तोद्योतके अपि । सुरा नारकाश्चान्या* स्तु चातुर्गतिकजन्तव' ॥ ६४ ॥

---

* प्रकृती

अपूर्वस्तीर्थकृत्कर्माहारकं चानिवृत्तिकः । संज्वलनकषायान् पुंवेदं च लघुमन्दति ॥ ६५ ॥
सातावरणविघ्नोच्चयशांस्यन्दति सूक्ष्मकः । वैक्रियषट्कमसंज्ञी संज्ञ्यप्यायुश्चतुष्ककम् ॥ ६६ ॥
पर्याप्तबादरैकाद्याः शेषाः कुर्युर्लघुस्थितीः । उत्कृष्टजघन्यौ सान्यौ साद्यनादिध्रुवाध्रुवाः ॥ ६७ ॥
भङ्गा एते चतुर्भंगः सप्तानामजघन्यकः । शेषास्त्रयोऽपि चत्वारोऽप्यायुषो द्विविधाः पुनः ॥ ६८ ॥
नवानामावरणानां पञ्चान्तरायकर्मणाम् । संज्वलनकषायाणां चतुर्भेदोऽजघन्यकाः ॥ ६९ ॥
आसां शेषास्त्रयो भङ्गाः शेषाणां सकला अपि । सादिकाध्रुवभंगाभ्यां द्विभेदाः परिकीर्तिताः ॥ ७० ॥
बन्धोऽनाद्यापूर्वान्तेष्वतरान्तःकोटिकोटिकः । नोर्ध्वो नोनो न तौ मिथ्यादृग्भव्याभव्यसंज्ञिनोः ॥ ७१ ॥
यत्यल्पबन्धतोऽसंख्यगुणः पर्याप्तबादरे । साधिकः सूक्ष्मपर्याप्तेऽतोऽदोऽपर्याप्तयोर्लघू ॥ ७२ ॥
ततोऽपर्याप्तपर्याप्तसूक्ष्मबादरयोर्गुरू । ततः पर्याप्तापर्याप्तद्व्यक्षयोरुभयोर्लघू ॥ ७३ ॥
ततोऽपर्याप्तपर्याप्तद्व्यक्षयोरुभयोर्गुरू । ततोऽधिकश्चतुर्ष्वेवं त्रिचतुष्खापचेतसाम् ॥ ७४ ॥
बन्धः संख्यातगुणितः कार्यः केवलमेतयोः । पर्याप्तद्वीन्द्रिये स्थाने पर्याप्तासंज्ञिके तथा ॥ ७५ ॥
ततो यतेर्गुरुबन्धः संख्यातगुणितस्ततः । देशव्रतस्य ह्रस्वोरू सम्यग्दृष्टेश्चतुर्भिदः ॥ ७६ ॥
चत्वारः संज्ञिनोऽपि स्युः स्थितिबन्धाः क्रमेण ते । संख्यातगुणिताः सर्वे यतेरुत्कृष्टबन्धतः ॥ ७७ ॥
सर्वासामपि महती स्थितिः स्यादशुभा यतः । साऽन्द्यते*ऽतिसंक्लेशेन विशुद्ध्यान्या तु सा शुभा ॥ ७८ ॥

तिर्यङ्नरामरायुस्तु विशुद्धैव द्विधाऽन्यते । अथ सूक्ष्मनिगोदाद्यक्षणः स्यादल्पयोगभाक् ॥ ७९ ॥
बादरेनिकदेन्द्रियाऽमन'समनसामपि । अपर्याप्तानामेतेषा क्रमादाद्यक्षणो लघु' ॥ ८० ॥
सूक्ष्मबादरयोर्ज्येष्ठौ तत पर्याप्तयोस्तयो । ह्रस्वौ ज्येष्ठौ च पश्चाद्यो अपर्याप्तत्रसोरवः ॥ ८१ ॥
पञ्च पञ्चाल्पगुरव पर्याप्तत्रसदेहिनाम् । अष्टाविंशतिरेते स्युरसंख्यातगुणा' क्रमात् ॥ ८२ ॥
स्थितिस्थानेष्वपर्याप्तसूक्ष्मः स्तोकस्थितिस्थिति । अपर्याप्तबादराख्यस्तत पर्याप्तसूक्ष्मक' ॥ ८३ ॥
पर्याप्तबादर' संख्यगुणा एते यथोत्तरम् । अपर्याप्तद्विकोऽसंख्यगुण' संख्यगुणास्तत. ॥ ८४ ॥
पर्याप्तद्वीन्द्रियरूयक्षमुख्या द्वेधा चतुर्भिदः । अपर्याप्ता असंख्येयगुणवीर्या. प्रतिक्षणम् ॥ ८५ ॥
लोकासंख्येयभागस्य खप्रदेशै. समा समे । भेदा अध्यवसायानामेकामेका स्थिति प्रति ॥ ८६ ॥
सप्ताश्रित्येति प्रकृतीरन्योऽन्यमधिकास्तु ते । आन्योऽसंख्यातगुणिता' सर्वान्त्यः पुनरायुषि ॥ ८७ ॥
स्थित्य ( तेर ) बन्धोऽज्येष्ठोऽब्धिशतं त्रिपष्टिसयुतम् । श्वभ्रैतिर्यक्त्रिकोद्योतकर्मणा नृभवान्वितम् ॥ ८८ ॥
सचतुष्पल्यमब्धीना पञ्चाशीत्याधिक शतम् । सातपानन्त्यजातीना स्थावरादिचतुर्भिदाम् ॥ ८९ ॥
अनाद्याकृतिसहत्यनन्तमिथ्यात्वनीचकै । स्त्यानर्द्धिदुर्भगत्रिकक्लीबस्त्रीकुनभोगते ॥ ९० ॥
अबन्ध पञ्चसेप्वेव शत द्वात्रिंशताधिकम् । त्रयाणा भावनायैवमबन्धाना यथाक्रमम् ॥ ९१ ॥

न्नोगापर्याप्ते त्रयः पल्याः सौधर्मे पल्य एककः । न्नवप्रत्ययतः प्रान्ते सम्यक्त्वेन नृजन्मनि ॥ ए२ ॥
सर्वविरतिको न्नूत्वा मिथ्यात्वी न्नवप्रत्ययात् । ग्रैवेयकेऽन्तर्मुहूर्तो नैकत्रिंशत्समुद्रकः ॥ ए३ ॥
तत्र लब्ध्वा च सम्यक्त्वं विरतेन नृजन्मना । अन्तरितोऽनुत्तरस्वःसुरः षट्षष्टिसागरः ॥ ए४ ॥
स्पृष्टैकमुहूर्तमिश्रो मनुष्यो विरतः पुनः । अच्युते पट्षष्ट्यतरो विरतचिह्नवान्तरः ॥ एए ॥
सचतुष्पल्यमित्यब्धिशतं त्रिषष्टिसंयुतम् । अबन्धकालः सप्तानां प्रकृतीनामुदीरितः ॥ ए६ ॥
षष्ठ्यां नारकिको जन्मप्रत्ययात् सद्विविंशतिम् । प्रतिपाल्य पयोधीनां सदेशविरतः पुनः ॥ ए७ ॥
सौधर्मेऽथ चतुष्पल्यायुःसुरः पूर्वकालयुक् । एवं तु सचतुष्पल्यं पञ्चाशीत्याधिकं शतम् ॥ ए८ ॥
द्वात्रिंशं शतमब्धीनामबन्धः पञ्चविंशतेः । अधिको नृन्नवैर्देवन्नवैः सम्यक्त्वसंयुतैः ॥ एए ॥
परो बन्धस्त्रयः पल्याः सुरे वैक्रिययुग्मके । समयादसंख्यकालं नीचे तिर्यग्द्वयेऽपि च ॥ १०० ॥
पूर्वकोटी सुखे न्यूनांतर्मुहूर्तं तथायुषि । औदारिके परावर्ताः पुफलानामसंख्यकाः ॥ १०१ ॥
पराघातोच्छ्वासपञ्चेन्द्रियत्रसचतुष्कके । सागराणां परो बन्धः पञ्चाशीत्याधिकं शतम् ॥ १०२ ॥
सद्वात्रिंशच्छतं तेषां पुंस्युच्चैः सुन्नगत्रये । चतुरस्रे च संस्थाने शुन्नाकाशगतावपि ॥ १०३ ॥
अनाद्याकृतिसंहत्योराद्यजातिचतुष्टये । असाते कुनन्नोगत्यां नरेकाहारेकद्वये ॥ १०४ ॥

शुभोद्योतातपक्षीवस्त्रीयश कीर्तिकर्मसु । स्थिरे स्थावरदशके रत्यरत्योर्दये भये ॥ १०५ ॥
समयादन्तर्मुहूर्तं यावद्बन्ध पर स्मृत । वज्रऋषभनाराचे तीर्थे च मनुजद्वये ॥ १०६ ॥
औदारिकाङ्गोपाङ्गे च स त्रयस्त्रिंशदधिकः । आयुष्यन्तर्मुहूर्तं स्यात् कनिष्ठोऽपि जिने तथा ॥ १०७ ॥

॥ इति स्थितिबन्ध ॥

रसोऽनुभागस्तद्बन्धस्तीव्रो मन्दश्च स द्विधा । अशुभाना संक्लेशेन विशुद्ध्या च शुभात्मनाम् ॥ १०८ ॥
गिरिभूमिरजोनीररेखासदृशचेष्टितै' । बन्धस्तस्य कषायै स्याच्चतुर्भिश्च चतुर्विधे ॥ १०९ ॥
अशुभाना चतु स्थानादि शुभाना तु सोऽन्यथा । एकस्थानो भवत्यत्र निवेक्ष्वो. सहजो रस' ॥ ११० ॥
पक्षो द्वित्रिचतुर्भागैर्भागशेषोऽशुभ. शुभ. । अशुभाना शुभाना च द्विस्थानप्रमुखो भवेत् ॥ १११ ॥
देशघात्यावरणानि' ( ४-३ ) विघ्नैसंज्वलनै' पुमान् । एकद्वित्रिचतु स्थाना' शेषा द्विस्थानकादय ॥ ११२ ॥
सुरा मिथ्यादृशस्तीव्रमेकाक्षस्थावरातपम् । तिर्यङ्नरा विकलाक्षसूक्ष्मादिनारकैत्रयम् ॥ ११३ ॥
तिर्यङ्नरायुषी चापि सुरनारकिकास्तथा । तिर्यग्द्वय च सेवार्तं कुर्युस्तीव्ररस त्रयम् ॥ ११४ ॥
सूक्ष्मसपरायोऽपूर्वादिकश्च क्षपकावुभौ । द्वात्रिंशत्प्रकृतीस्तीव्ररसाः कुरुत एतका ॥ ११५ ॥
वैक्रियाहारकामर्त्ययुग्मानि त्रीणि तैजसम् । अगुरुलघु निर्माण कार्मण सुनभोगतिम् ॥ ११६ ॥
पञ्चेन्द्रिय पराघात सुवर्णाश्चतुरस्रकम् । त्रसादिदशतीर्थोच्चोच्छ्वाससाताभिधा अपि ॥ ११७ ॥ युग्मम् ॥

उद्योतं तमस्तमकाः सम्यग्दृष्टिसुराः पुनः । मनुष्यौदारिकद्वन्द्वे संहतिं चादिमामपि ॥ ११८ ॥
अप्रमत्तः सुरायुश्च शेषा मिथ्यादृशः पुनः । तीव्रानुभागाः कुर्वन्ति चातुर्गतिकजन्तवः ॥ ११९ ॥
स्त्यानर्द्धित्रयमिथ्यात्वानन्तान्मन्दरसान् पुनः । अष्टौ करोति मिथ्यात्वी प्रस्थितः संयमं प्रति ॥ १२० ॥
द्वितीयानथ विरतस्तृतीयान् देशसंयमी । शोकारती प्रमत्तश्चाप्रमाद्याहारकद्वयम् ॥ १२१ ॥
निद्राद्वयं भयं हास्यं रतिकुत्सोपघातकम् । अशुवर्णचतुष्कं चापूर्वो मन्दरसं तथा ॥ १२२ ॥
ससंज्वलनपुंवेदं क्षपकश्चानिवृत्तिकः । पञ्च सूक्ष्मसंपरायी विघ्नान्यावरणान्यपि ॥ १२३ ॥
तिर्यङ् मर्त्याश्च विकलाक्षसूक्ष्मत्रयजीवितम् । तथा वैक्रियषट्कं च कुर्युर्मन्दानुभागकम् ॥ १२४ ॥
औदारिकद्वयोद्योते सुरनारकिका अपि । तमस्तमाभवास्तिर्यग्युग्मं नीचं च जन्तवः ॥ १२५ ॥
तीर्थं चाविरतः कुर्यादश्वभ्रगतिजन्तवः । स्थावरैकेन्द्रिये द्वे च सौधर्मान्तास्तथातपम् ॥ १२६ ॥
मिथ्यात्वी सम्यग्दृष्टिर्वा सातं स्थिरं शुभं यशः । सेतराः प्रकृतीरष्टौ कुर्यान्मन्दरसा इमाः ॥ १२७ ॥
तैजसं कार्मणागुरुलघुनिर्माणमुच्चकैः । सुवर्णादित्रसादीनां चतुष्के द्वे नरद्वयम् ॥ १२८ ॥
खगतिद्वयपञ्चाक्षोच्छ्वाससंस्थानसंहतीः । पराघातं त्रिके द्वे च सुभगद्वर्भगादिके ॥ १२९ ॥
स्त्रीक्लीबौ चेति चत्वारिंशतं मन्दरसा इमाः । मिथ्यादृग्भविनः कुर्युः पुनर्वेदौ विशुद्धितः ॥ १३० ॥ त्रिभिः संबन्धः ॥
तैजसशुभवर्णादिचतुष्कद्वयकर्मसु । नाम्नि वेदनीयेऽपि स्यात्सोऽनुत्कृष्टश्चतुर्विधः ॥ १३१ ॥

शेषध्रुवबन्धिनीष्वजघन्यो घातिनीष्वपि । गोत्रेऽप्येतावुभावेवं शेषेष्वध्रुवसादिकौ ॥ १३२ ॥

॥ इति रसबन्ध ॥

एकद्व्यण्वादितो यावदभव्यानन्तसख्यया । गुणिताणवः स्कन्धाः स्युस्ते तुल्या एकवर्गणाः ॥ १३३ ॥
औदारिकोचितास्तास्त्वग्रहणान्तरितास्तथा । एव वैक्रियाहारकतैजसभाषणोंभिधा ॥ १३४ ॥
आनापानमन कर्मवर्गणा क्रमसूक्ष्मका । न्यूनन्यूनागुलासख्याशोऽवगाहोऽदसीयकः ॥ १३५ ॥
एकैकाभ्यधिका सिद्धानन्तभागसमा इमा । अग्रहणा (हां) न्तरिता सर्वा ज्ञातव्या स्थापनाक्रमात् ॥ १३६ ॥
सर्वत्रोचितहीनाया महती वर्गणोचिता । निजानन्तिभागेनाभ्यधिका कथिता जिनैः ॥ १३७ ॥
एकप्रदेशावगाढ यदनन्तप्रदेशकम् । सर्वजीवानन्तगुणरसच्छेदयुतोचितम् ॥ १३८ ॥
गृह्णात्यन्त्यचतु स्पर्श द्विगन्ध पञ्चवर्णकम् । जीव पञ्चरस कर्मस्कन्धस्य दलिक किल ॥ १३९ ॥ युग्मम् ॥
तद्भागमायुष स्तोकमधिकं नामगोत्रयो । अन्योऽन्य तु तयोस्तुल्यमधिक विघ्नकर्मणः ॥ १४० ॥
आवरणद्वयस्यापि त्रयाणा तु सम मिथ । मोहस्याधिकमेतेभ्योऽधिक वेद्यस्य यच्छति ॥ १४१ ॥ युग्मम् ॥
अल्पप्रदेश येनैतद्वेद्यात्सुखदु खयो । स्वस्वस्थितिविशेषेण भागाप्ति शेषकर्मणाम् ॥ १४२ ॥
स्वजात्यासाशानन्ताश सर्वघातिभिदा भवेत् । शेष विभज्य शेषासु वध्यमानास्वनुक्रमम् ॥ १४३ ॥
सम्यग्दृग् देशविरते सर्वतो विरताभिधे । अनन्ताना विसयोगी दर्शनक्षपको गुण ॥ १४४ ॥

मोहस्य शमकः शान्तमोहस्तत्क्षपको गुणः । क्षीणो योगी[10] वियोगश्च गुणश्रेणीति संमता ॥ १४५ ॥
गुणकारेण सा श्रेणी दलानां रचनोदयात् । असंख्यातगुणेनानुसमयं क्रियतेऽङ्गिना ॥ १४६ ॥
एतद्गुणाः पुनर्जीवा असंख्यगुणनिर्जराः । भवन्ति क्रमशो लोके गुणश्रेण्यधिरोहणात् ॥ १४७ ॥
पल्यसंख्येयभागोऽत्र सास्वादनेऽन्तरं लघु । गुणस्थानेषु शेषेषु तत्तथान्तर्मुहूर्तकम् ॥ १४८ ॥
द्विः षट्षष्टिश्च मिथ्यात्वेऽतराणामन्तरं गुरु । गुणस्थानेषु शेषेषु तच्चान्तःपुद्गलार्धकम् ॥ १४९ ॥
उद्धारा १ द्धा २ क्षेत्रसंज्ञं ३ पल्योपमत्रयं यतः । समयेन १ समानां च शतेन २ समयेन च ३ ॥ १५० ॥
उद्धारः केशखंडानां तत्कृतैः सागरोपमैः । द्वीपाब्ध्यायुस्त्रसादीनां प्रमाणं परिकीर्तितम् ॥ १५१ ॥ युग्मम् ॥
स्यात्पुद्गलपरावर्तोऽनन्तावोत्सर्पिणीमितः । द्रव्यक्षेत्रकालभावभेदैः स तु चतुर्विधः ॥ १५२ ॥
एकैकः स पुनर्द्वेधा सूक्ष्मः स्थूलश्च संज्ञया । औदारिकाद्यन्यतरेणाणून् स्पृष्ट्वाऽखिलानपि ॥ १५३ ॥
मुञ्चत्येकः क्रमेणांगी यावत्कालेन संसृतौ । स द्रव्यपुद्गलः सूक्ष्मः स्थूलस्तैः सप्तभिः पुनः ॥ १५४ ॥
एवं लोकप्रदेशांश्च द्विकालसमयानपि । रसबन्धस्य स्थानानि स्पृष्ट्वा मुक्तानि मृत्युना ॥ १५५ ॥
क्रमेणाप्यक्रमेणापि यत्र ते सूक्ष्मबादराः । पुद्गलानां परावर्ता द्वेधा क्षेत्रादिकास्त्रयः ॥ १५६ ॥ पञ्चभिः कुलकम् ॥
करोत्युत्कटयोग्यल्पतरप्रकृतिबन्धकः । संज्ञी पर्याप्त उत्कृष्टप्रदेशं चान्यथा परः ॥ १५७ ॥

समिथ्यात्वमविरतिचतुष्कमायुषीश्वरा । मोहनीये नव द्वित्रिहीना मिथ्यात्वमुख्यका ॥ १५८ ॥
सूक्ष्म षट्सु तथा सप्तदशस्वासूत्तरास्वपि । नवावरणविघ्नोच्चैर्गोत्रसातयश स्वपि ॥ १५९ ॥
द्वितीयेषु कषायेषुं सम्यग्दृष्टिरसंयमी । तृतीयेषु कषायेषुं देशव्रतगुणस्थित ॥ १६० ॥
संज्वलनेषुं पुवेदे पञ्चस्वेष्वनिवृत्तिक । नरायुं सुरसुभगत्रिकवैक्रिययुग्मके ॥ १६१ ॥
समचतुरस्रासातवज्रे सुखगतावपि । मिथ्यादृग्वा सम्यग्दृग्वा स्वामी त्रयोदशस्विति ॥ १६२ ॥
निद्राप्रचलयोस्तीर्थे षट्के हास्यादिके तथा । सम्यग्दृष्टिरप्रमत्तयतिराहारकद्वये ॥ १६३ ॥
प्रदेशबन्ध शेषासूत्कृष्ट मिथ्यादृश पुन । यान्तो योगान्तरं कुर्युरनुत्कृष्टममु त्वमी ॥ १६४ ॥
आहारकद्वये साधुरप्रमत्तगुणाश्रित । असंज्ञी वीर्यव्यत्याशी सुरायुर्नारकत्रये ॥ १६५ ॥
वैक्रियामरयोर्युग्मे तीर्थे तुर्यगुणाश्रित । शेषा सूक्ष्मनिगोदाद्यक्षणे शेषासु जन्तव ॥ १६६ ॥ युग्मम् ॥
षण्णां मूलप्रकृतीना षड्भिदा दर्शनावृते । अनन्तकषायाणां ज्ञानावृत्त्यन्तराययो ॥ १६७ ॥
कुत्साभीत्योरनुत्कृष्ट साद्यादि स चतुर्विध । शेषास्त्रयोऽपि सर्वेऽपि परासा ते द्विभेदका ॥ १६८ ॥ युग्मम् ॥
तुल्यानि श्रेण्यसंख्येयभागाकाशप्रदेशकै । योगस्थानानि प्रकृतिभेदका स्थितिभेदका ॥ १६९ ॥
स्थितिबन्धाध्यवसायाँ रसबन्धास्पदानि च । यथोत्तरमसख्येयगुणान्येतानि पञ्च तु ॥ १७० ॥

---

१ अमोहायुषा । २ चक्षुरादित्रयस्त्यानर्द्धित्रिकम् ।

तेभ्योऽनन्तगुणाः प्रोक्ताः सर्वे कर्मप्रदेशकाः । अविभागपलिछेदास्तेभ्योऽनन्तगुणाः स्मृताः ॥ १७१ ॥
प्रकृतिप्रदेशबन्धं योगेभ्यः कुरुते भृशम् । कषायेभ्यः पुनर्जीवो बन्धं स्थित्यनुभागयोः ॥ १७२ ॥
द्विसप्तरज्जुको लोकः सप्तरज्जुर्घनीकृतः । तद्दीर्घैकप्रदेशाली तद्वर्गः प्रतरः पुनः ॥ १७३ ॥
अनन्तान् दृष्टिमोहाख्यान् षंढस्त्रीषट्कपुंभिदः । द्वौ द्वावेकोऽन्तरे तुल्यान् कषायांश्चोपशान्तयन् ॥ १७४ ॥
करोत्युपशमश्रेणीश्चतस्रो जीव एककः । आभवं भव एकस्मिन् द्वे त्वेकां क्षपकाभिधाम् ॥ १७५ ॥ युग्मम् ॥
अनन्तान् मिथ्यात्वं मिश्रं सम्यक्त्वं द्विश्चतुष्कर्कं । षंढस्त्रीषट्कपुंवेदान् क्रोधादीन् क्षपति क्रमात् ॥ १७६ ॥
आयुस्त्रयं चतस्रः प्राक् जातेः स्त्यानर्द्धिका त्रयं । साधारणं श्वभ्रतिर्यक्स्थावरातपयुग्मकम् ॥ १७७ ॥
सम्यक्त्वाष्टकयोर्मध्ये क्षपत्येकोनविंशतिम् । निद्राद्वयं च श्रेण्यन्ते विघ्नान्यावरणानि च ॥ १७८ ॥

॥ इत्यन्तकरणम् ॥

यत्रोपशमकस्तत्र भवे न क्षपको भवेत् । मोहस्यैवोपशमकः क्षपकः सर्वकर्मणाम् ॥ १७९ ॥
क्षपकाणां शतं साष्टं समये समयावनौ । उपशमकानां चोर्ध्वं सद्विपष्टि शतं द्वयोः ॥ १८० ॥

॥ इति प्रदेशबन्धः ॥

इत्येवं शतकं समीक्ष्य लघुकं संस्कृत्य गाथा वरास्ता एव प्रकृतिस्वरूपमखिलं स्मर्तुं मयेदं कृतम् ।
यद्धीनाधिकमुक्तमत्र किमपि प्राज्ञैः प्रसन्नैर्मयि कर्मग्रन्थविचारसारमतिभिः शोध्यं तदत्यादरात् ॥ १८१ ॥

॥ इति प्रकृतिस्वरूपसंरूपणं नाम तृतीयं प्रकरणम् ॥